औपधान्नविहाराणामुपयोगं सुखावहम् ॥
हेतुव्याधिविपर्यस्तविपर्यस्तार्थका[illegible]णाम् ॥

हेतुश्चव्याधिश्चहेतुव्याधीहेतुव्याध्योः विपर्यस्ताःहेतु[illegible] पर्यस्तानामर्थविपर्यस्तार्थविपर्यस्तार्थकुर्वंतीतिविपर्यस्तार्थका[illegible] धिविपर्यस्ताश्चविपर्यस्तार्थकारिणश्च हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणः तेषांहेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् औपधंचअन्नंच विश्चऔपधान्नविहारास्तेषां औपधान्नविहाराणां सुखावहंउपयोगंविद्यात्

| | |
|---|---|
| १ हेतुविपरीत औपध | शीतहेतुकेकफज्वरेशुंठचाद्युष्णंभेपजं |
| २ हेतुविपरीतअन्न | श्रमानिलजेज्वरेरसौदनं |
| ३ हेतुविपरीतविहार | दिवास्वप्नोत्थेकफेरात्रौजागरणं |
| ४ व्याधिविपरीतऔपध | अतीसारेस्तंभनंपाठादिः |
| ५ व्याधिविपरीतअन्न | अतीसारेस्तम्भनंमसूरादिः |
| ६ व्याधिविपरीतविहार | उदावर्तेप्रवाहणंवायोरूर्ध्वाधोगमनंप्रव |
| ७ हेतुव्याधिविपरीतऔपध | वातशोथेदशमूलंवातहरंशोथहरंच |
| ८ हेतुव्याधिविपरीतअन्न | वातकफग्रहण्यांतक्रंवातकफहरंग्रहणीह |
| ९ हेतुव्याधिविपरीतविहार | स्निग्धायांदिवास्वप्नजायांतद्रायांविपरीतं रात्रौजागरणइति |
| १० हेतुविपरीतार्थकारीऔपध | पित्तप्रधानेपच्यमानेव्रणशोथेपित्तकरउपनाहः |
| ११ हेतुविपरीतार्थकारीअन्न- | पित्तशोथेअन्नंविदाहिमापादि |
| १२ हेतुविपरीतार्थकारीविहार | वातोन्मादेत्रासनम् |
| १३ व्याधिविपरीतार्थकारीऔपध | कफछर्द्यांवमनकरणंमदनफलादिः |
| १४ व्याधिविपरीतार्थकारीअन्न | अतिसारेविरेककृत् क्षीरं |
| १५ व्याधिविपरीतार्थकारीविहार | छर्द्यामंगुष्ठोत्पलनालादिनावमनं |
| १६ हेतुव्याधिविपरीतार्थकारीऔपध | अग्नितुष्टेउष्णांगुर्वादिलेप.विषेविपंवा |
| १७ हेतुव्याधिविपरीतार्थकारी अन्न | मद्यपानोत्थेमदात्ययेमदकारकंमद्यम् |
| १८ हेतुव्याधिविपरीतार्थकारीविहार | व्यायामजनितमूढवातेजलप्रतरणरूपोव्यायाम इति |

॥ श्रीः ॥

## ॥ अथ योगतरंगिणीस्थविषयानुक्रमणिकाप्रारंभः

विषयः पृष्ठांकः

### अथ प्रथमस्तरंगः



### द्वितीयस्तरंगः



### तृतीयस्तरंगः



### चतुर्थस्तरंगः



### पञ्चमस्तरंगः



विषयः पृष्ठांकः

### षष्ठस्तरंगः



### सप्तमस्तरंगः



### अष्टमस्तरंगः



### नवमस्तरंगः



### दशमस्तरंगः



### एकादशस्तरंगः



### द्वादशस्तरंगः



### त्रयोदशस्तरंगः

| विषयः | पृष्ठांकः |
|---|---|

## एकविंशतितमस्तरंगः



## द्वाविंशस्तरंगः



## त्रयोविंशस्तरंगः



## चतुर्विंशस्तरंगः

इति योगतरंगिणीविषयानुक्रमणिकासमाप्ता

॥ श्रीगणेशाय नमः ॥

# ॥ अथ योगतरंगिणी ॥



## प्रथमस्तरंगः ।

कपोलविगलल्लोलदानपानीयपिच्छिलम् ॥
भ्रमद्भ्रमरझंकारं वन्देहं द्विरदाननम् ॥ १ ॥
आपस्तंबस्यारवेल्लोपनाम्नो
धाम्नो भासां कोडपल्लीभवस्य ॥
तैलंगस्य प्रीतिभाजो गिरीशे
काशीवासं कुर्वतो भूरिकीर्त्तेः ॥ २ ॥
राज्ञां मान्यस्यात्र सिंगणभट्ट-
स्यासीत्पुत्रो वल्लभो वेदविद्यः ॥
तस्यासीरन्सूनवोऽमी त्रिमल्लो
रामो गोपश्चेति नाम्ना त्रयोऽपि ॥ ३ ॥
तेषु त्रिमल्लभट्टेन नाम्ना योगतरंगिणी ॥
चिकित्सा लिख्यते भूरिग्रंथेभ्यः स्वपरार्थिना ॥ ४ ॥
देहादुत्पद्यते पुंसः पुरुषार्थचतुष्टयम् ॥
न नीरोगः स कुत्रापि तच्छान्तिस्तु चिकित्सया ॥ ५ ॥
क्वचिद्धर्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः ॥
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला॥६॥
अतो मम श्रमस्तोमश्चिकित्सायां जयत्ययम् ॥
संक्षिप्ता रसयुक्तेयं संहिता भुवि जृंभताम् ॥ ७ ॥

---

१ कपोलयोर्विगलत् चञ्चलं च यद्दानपानीयं दानोदकं तेन पिच्छिलं चिक्कणम् । २ द्विरदाननं गणेशम् । ३ धर्मार्थकाममोक्षस्वरूपम् ।

रोगपंकार्णवे मग्नं यः समुद्धरते नरम् ॥
कस्तेन न कृतो धर्मः कां च पूजां न सोर्हति ॥ ८ ॥
जन्मान्तरकृतं पापं व्याधिरूपेण बाधते ॥
तच्छांतिरौषधैर्दानैर्जपहोमसुरार्चनैः ॥ ९ ॥

हारीतात्

शल्यं शालाक्यमगदं कुमारभरणं तथा ॥
कायभूतक्रिया वाजीकरणं च रसायनम् ॥
अष्टावंगानि नस्याहुश्चिकित्सा यत्र संस्थिता ॥ १० ॥
वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ॥
एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥ ११ ॥
ज्ञातशास्त्रः शुचिः शूरो लघुहस्तः कृतोद्यमः ॥
दृष्टकर्मा कृती धर्मी स भिषक्पाद उच्यते ॥ १२ ॥
आढ्यो रोगी भिषग्वश्यो दक्षिणो ज्ञापको रुजाम् ॥
असत्वलक्षणः पथ्यशीलः पादो ऽपरो मतः ॥ १३ ॥
दोषकालवयोदेशमात्राप्रकृतिरेतसाम् ॥
सात्म्यं यद्भेषजं तत्पादपरः पादश्चिकित्सिते ॥ १४ ॥
अथाशी जितस्वप्नो हितो धर्मार्थकोविदः ॥
बहुदर्शी कर्मदक्षः पादः स्यात्परिचारकः ॥ १५ ॥
वातः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥
घ्नंति देहं विकृतास्तेऽविकृता धर्षयंति च ॥ १६ ॥

चयप्रकोपोपशमा वायोर्ग्रीष्मादिषु त्रिषु ॥
वर्षादिषु च पित्तस्य श्लेष्मणः शिशिरादिषु ॥ १७ ॥
ते व्यापिनोपि हृन्नाभ्योरधोमध्योर्ध्वसंस्थिताः ॥
वयोहोरात्रभुक्तानामंतमध्यादिगाः क्रमात् ॥ १८ ॥
जांगलं वातभूयिष्ठमनूपं च कफोन्नतम् ॥
साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ १९ ॥
मात्रा चतुर्विधा ज्ञेया समा मंदा च तीक्ष्णका ॥
विषमा चेति संप्रोक्ता तत्तद्वह्निविशेषतः ॥ २० ॥
शुक्रार्त्तवस्थैर्जन्मादौ विषेणैव विषक्रमे ॥
तैः स्युः प्रकृतयस्तिस्रो हीनमध्योत्तमाः पृथक् ॥२१॥
मलायत्तं वलं पुंसां शुक्रायत्तं तु जीवितम् ॥
अतश्चिकित्सितं कार्यं संरक्ष्य मलरेतसी ॥ २२ ॥
जातमात्रश्चिकित्स्यस्तु नोपेक्ष्यो ऽल्पतया गदः ॥
वह्निशस्त्रविषैस्तुल्यः स्वल्पोपि विकरोत्ययम् ॥ २३ ॥
यावज्जीवं चिकित्स्यस्तु नोपेक्ष्यो भिषजा गदी ॥
कदाचिद्दैवयोगेन दृष्टारिष्टो ऽपि जीवति ॥ २४ ॥
चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्मतिः ॥
स यत्करोति सुकृतं तत्सर्वं भिषगश्नुते ॥ २५ ॥

---

१ वातादयः । २ अंते वायुः मध्ये पित्तं आदौ कफः इति क्रमाद्वयस्यादिषु ज्ञेय । ३ जलवृक्षरहितं देशं । ४ जलवृक्षबहुलं देश । ५ कफयुक्त । ६ द्वौ यत्र समौ तत्साधारणम् । ७ समवातादिक । ८ न्यूनाधिका । ९ यद्वदग्निस्तद्वन्मात्रा देया । १० वीर्यरजःस्थैः । ११ ऋतुसमये । १२ वातादिभिः । १३ वातेन हीना पित्तेन मध्यमा कफेन उत्तमा प्रकृतिर्ज्ञेया । १४ स्वल्पोपि दोष । १५ वैद्येन । १६ अरिष्टो मृत्युसूचकः इति । १७ नां मोचयेति । १८ पुमान् । १९ इत्यनेन पाप न ज्ञेय । २० वैद्यः २१ उपभुंक्ते ।

नैव कुर्वीत लोभेन चिकित्सापुंण्यविक्रयम् ॥
ईश्वराणां वसुमतां लिप्सेतार्थं तु वृत्तये ॥ २६ ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ॥
ततः कर्म भिषक्पश्चाज्ज्ञानपूर्वं समाचरेत् ॥ २७ ॥
कर्मप्रकोपजाः केचित्केचिद्दोषप्रकोपजाः ॥
कर्मदोषोद्भवाः केचिन्मनःकायस्थिता गदाः ॥ २८ ॥
कर्मक्षयात्कर्मकृता दोषजास्त्वयमौषधैः ॥
कर्मदोषोद्भवा यांति कर्मदोषक्षयात्क्षयम् ॥ २९ ॥
यथाशास्त्रं तु निर्णीतो यथा व्याधिश्चिकित्सितः ॥
न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः ॥ ३०
पुण्यैश्च भेषजैः शांतास्ते ज्ञेयाः कर्मदोषजाः ॥
विज्ञेया दोषजास्त्वन्ये केवला वाथ संकराः ॥ ३१ ॥
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ॥
निजागंतुविभेदेन ते च रोगा द्विधा मताः ॥ ३२ ॥
याभिः क्रियाभिर्जायंते शरीरे धातवः समाः ॥
सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम् ॥
स्वहेतूपचिता दोषाः सामा रसपथानुगाः ॥
रसमामं पाचयित्वा कुर्युर्दोषान् पृथक्पृथक् ॥ ३४

१ धनवतां । २ धनं । ३ यो रोगस्तस्यौषधं । ४ कुष्ठार्शआदिका
५ ज्वराऽतीसारादिकाः । ६ प्रमेहश्वासादिकं । ७ नाशं । ८ यथा
९ यो व्याधिः स निश्चितः । १० औषधैः । ११ वातपित्तकफाः ।
र्वसमूहः । १३ वातादीनां यदसमत्वं तदेव रोगत्वं । १४ वातादीन
ष समत्वं तदेव अरोगत्वमिति ज्ञेयम् । १५ एकोत्तरं मृत्युशतम
मन्यस्ते तेष्वेकः कालसंयुक्तः शेषास्त्वागन्तुजाः स्मृता इति धच
२६ उपायैः । १७ कथितेति शेषः । १८ स्वस्वकारणेन संचिताः । १
नादयः । २० आमसहिताः ।

स एव पाचनो ज्ञेयो न च दोषान्विपाचयेत् ॥
दोषपाकाद्धातुपाकान्मरणं सर्वथा नृणाम् ॥ ३५ ॥
विकारनामा कुशलो न जिह्रीयात् कदाचन ॥
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ३६ ॥
दर्शनस्पर्शनप्रश्नैर्व्याधेर्ज्ञानं त्रिधा मतम् ॥
आयुरादि दृशा स्पर्शाच्छीतादि प्रश्नतोऽपरम् ॥ ३७ ॥
स्वभावाद्व्याधयः साध्याः केचिज्जाप्या उपेक्षिताः ॥
साध्या याप्यत्वमायांति याप्याश्चासाध्यतां तथा ॥ ३८ ॥
निवृत्तोपि पुनर्व्याधिः स्वल्पेनायाति हेतुना ॥
दोषैर्मार्गीकृते देहे खेषु सूक्ष्म इवानलः ॥ ३९ ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ॥
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ४० ॥
नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ॥
अनुक्तमपि दोषाणां लिंगैर्व्याधिमुपाचरेत् ॥ ४१ ॥
यथाह तीसटाचार्यः ॥

वातस्य पित्तस्य कफस्य चापि
विकारिणः कार्यवतां हि काये ॥
प्रकोपहेतुः कुपितस्य लिंगं
चिकित्सितं चेति निरूपणीयम् ॥ ४२ ॥

रूक्षैस्तिक्तैः कषायैः कटुभिरनशनैर्वेगसंधारणैश्च
व्यायामैश्च व्यवायैः प्रतरणवलवाद्विग्रहैर्जागरैश्च ॥

१ पाचनेर्श्चैय इति वा पाठः २ वैद्यः ३ लज्जां न कुर्यात्। ४ निश्चला। ५स्वे-
दो ललाटे न न याति वक्षः इत्यादिकं ज्ञानं दर्शनेन भवति। ६ संत्यक्ताः।७ अ
ल्पेतकारणेन। ८ छिद्रेषु। ९ जानीयात्। १० देहिनां। ११ निदानम्। १२ संधा-
नैः। १३ लंघनैः। १४ गुह्यादिमर्दनैः। १५जलस्नानैः। १६ बलिना सह युद्धैः।

श्यामानीवारकंगुप्रभृतिभिरशनैरुल्लसद्भिः पयोदै-
रन्ने जीर्णे च जंतोरिति भवति तनौ मारुतस्य प्रकोपः ४३

कट्वम्लोष्णविदाहि तीक्ष्णलवणक्रोधोपवासातप-
स्त्रीसंपर्कतिलातसीदधिसुरासुक्तारनालादिभिः ॥
भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनां
मध्याह्ने च तथार्धरात्रसमये पित्तप्रकोपो भवेत् ॥ ४४ ॥

गुरुमधुरातिशीतदधिदुग्धनवान्नपय-
स्तिलविकृतीक्षुभक्षणातिदिवाशयनैः ॥
सैमविषमाशनाध्यसनपायसपिष्टकृतै-
रपि च कफः प्रकुप्यति मधौ च दिनादिषु च ॥४५॥

इति प्रकोपकारणैः प्रकोपमेत्यसर्वगाः ॥
समीरणादयस्तनौ रुजः सृजंति जंतुषु ॥ ४६ ॥

वातपित्तकफकोपलक्षणं
सूचितं यदिह सूत्रसंग्रहे ॥
प्रोच्यते तदिह सांप्रतं मया
रुक्परीक्षणमनेन कारयेत् ॥ ४७ ॥

दृशि शिरसि च शंखश्रोत्रनेत्रांतरेषु
भुवि हृदि हनुमन्यास्कंधमूर्धोर्ध्वसंधौ ॥
रुगतिनिशि दिवाल्पा स्यादकस्मात्प्रशांता
भवति हि भुजजंघास्तब्धसंकोचता च ॥ ४८ ॥

---

१ वर्षा कुर्वद्भिः । २ मेघैः । ३ लंघनम् । ४ स्त्रीसंगमः । ५ अल-सी । ६ कांज्याभेदः । ७ कांजी । ८ भोजने कृते सति । ९ पाकं गच्छति सति । १० नवान्नजलसेवनात् । ११ यस्मिन् समये भोजनं करोति तस्मिन् समये कफप्रकोपो ज्ञेयः । १२ भुक्तोपरि यद्भोजनं तत् । १३ दु-[illegible]ः । १४ कथ्यते । १५ अधुना । १६ लक्षणेन ।

कटिविटपयकृत्सुक्कोर्म्नि च प्लीह्नि पृष्ठे
जठरवृषणवक्षःकुक्षिकक्षांतरेषु ॥
प्रसरति गुरुशूलं नाभिवस्तिस्तनेषु
त्रिकगुदवलिगुह्योपांतपक्षद्वयेषु ॥ ४९ ॥
वदनविरसता स्याद्वर्चसः कर्कशत्वं
भवति वपुषि कार्श्यं रात्रिनिद्रानिवृत्तिः ॥
त्वचि च परुषता स्यात्स्याच्च वैषम्यमग्ने-
रिति पवनविकारे लक्षणं प्रोक्तमेतत् ॥ ५० ॥
भ्रममदमुखशोषस्वेदसंतापमूर्छा
मुखनयननखत्वङ्मूत्रविट्पीतता च ॥
प्रलपनमतिसारश्चारुचिश्च ज्वरश्च
तृडतिशिशिरतेच्छा पित्तरोगस्य लिङ्गम् ॥ ५१॥
अङ्गस्य गौरवमपाटवमान्तराग्ने-
रुत्क्लेशता च हृदयस्य मुखप्रसेकः ॥
आलस्यमास्यमधुरत्वमकांडकंडू-
रापांडुता नयनयोरतिरोमहर्षः ॥ ५२ ॥
प्रज्ञोप्लुतिर्वमथुपीनसकासनिद्रा-
तंद्रादयश्चलचुलायनमुल्बणं च ॥
स्यादोष्ठकंठरसनारदमूलतालु-
घ्राणेक्षणश्रवणशष्कुलिकान्तरेषु ॥ ५३ ॥

---

१ तालुदेशे । २ बहुशूलं । ३ नाभेरधोभागः । ४ पृष्ठवंशाधोभागः । ५ नितंबद्वयं । ६ कठोरत्वं । ७ कठोरता । ८ मंदाग्निः । ९ अतिशीतलेच्छा । १० मन्दत्वं । ११ जठराग्नेः। १२ उपस्थितवमनता । १३ लालास्रावः । १४ अनायासकण्डूः । १५ संज्ञानाशः । १६ स्फुरणम् । १७ जिह्वा । १८ दन्तमूलम् । १९ नेत्रे । २० कर्णौ । २१ कक्षा ।

श्लेष्मोद्भवे भवति लिङ्गमिदं विकारे
संसर्गजेषु च गदेषु भवेद्धि दोषम् ॥
जंतोरिदं पवनपित्तकफप्रकोप-
लिङ्गं त्रिदोषजरुजि प्रविभज्य योज्यम् ॥ ५४ ॥

॥ उक्तं च ॥

कफवातौ वातकफौ वातः पित्तं च वृद्धिसमौ ॥
त्रिभिराद्यैस्त्रिभिरंत्यैस्त्रिभिराद्यपरैस्तदन्यैश्च ॥ ५५ ॥
अंत्याद्यावाद्यमाद्यांत्यावंत्यं कोपशमौ मलम् ॥
मध्यमध्येतरौ मध्यं प्रयोगान्नयतस्त्रिकौ ॥ ५६ ॥
आद्यमध्यं नयत्यंत्यं मधुराद्याः शमेतरौ ॥
आद्यं मध्यांत्यमाद्यं च मध्यमांतिममंतिमम् ॥ ५७ ॥
आद्यमध्यं मध्यमांत्यमाद्यं मध्यांतिमं क्रमात् ॥

---

१ मधुराम्ललवणकटुतिक्तकषायाः षड्रसाः तत्र त्रिभिराद्यैः मधुराम्ललवणैः कफो वृद्धिं याति वातः शमं याति इत्यर्थः । २ अंत्यैस्त्रिभिः कटुतिक्तकषायैः वातः वृद्धिं याति कफः शमं याति इत्यर्थः । ३ आद्यपरैः आद्यो मधुरस्तस्मात्परैरम्ललवणकटुकैस्त्रिभिः पित्तं वृद्धिं याति । तदन्यैः मधुरतिक्तकषायैः पित्तं शमं याति । ४ अंत्यत्रिकः कटुतिक्तकषायः आद्यत्रिकः मधुराम्ललवणः एतौ त्रिकौ आद्यं मलं कोपशमौ नयतः । अन्त्येन कोपः । आद्येन शमः । ५ आद्यत्रिकः मधुराम्ललवणः अंत्यः कटुतिक्तकषायः एतौ क्रमेण अंत्यं मलं कफं कोपशमं नयतः । ६ मध्यश्च मध्यौ च मध्यमध्यौ विद्येते यस्मिन्सः । त्रिकस्थो मध्योऽम्लः षट्सु रसेषु मध्यौ लवणकटू अयमम्ललवणकटुकाख्यो मध्यमत्रिकः इतरोऽस्मादन्यमधुरतिक्तकषायाख्य एतौ मध्यं मलं पित्तं कोपशमौ नयतः । अम्ललवणकटुकैः कोपः मधुरतिक्तकषायैः शमः । ७ मधुराद्याः षड्रसाः तेषु मधुरः आद्यं वायुं मध्यं पित्तं शमं नयति । ८ अन्त्यं कफं कोपं नयति । अन्त्यः आद्यं वायुं शमं नयति । ९ मध्यान्त्यं पित्तकफौ कोपं नयति । लवणः आद्यं वायुं शमं नयति । १० मध्यमांतिमं पित्तकफौ कोपं नयति । कटुः अंतिमं कफं शमं नयति । ११ आद्यं वातं मध्यं पित्तं कोपं नयति । १२ तिक्तः मध्यमान्त्यं पित्तकफौ शमं नयति ।

आद्यं दोषं रसाः प्रायः प्रयोगपरिशीलिताः॥५८॥ युग्मं॥
राज्यह्नोरादिमध्यांते पुनश्चांत्याद्यमध्यमे ॥
मध्ये चांते तथादौ च दोषैर्नाल्पातिरुक् क्रमात् ॥ ५९ ॥
भुक्ते जीर्यति जीर्णेन्ने जीर्णे भुक्ते च जीर्यति ॥
जीर्णे जीर्यति भुक्ते च दोषैर्नाल्पातिशूलरुक् ॥ ६० ॥
कफपित्तानिलाः पूर्वमध्यांतेषु व्यवस्थिताः ॥
देहाहोरात्रिवयसां संधिष्वपि कफानिलौ॥ ६१ ॥
आदावंते च दौर्बल्यं विसर्गादानयोर्नृणाम् ॥

---

१ आद्यं वायुं कोपं नयति कषायः मध्यान्तिमं पित्तकफौ शमं नयति। २ लक्षणादिना अभ्यस्ताः। ३ रात्रिश्च अहश्च राज्यहनी तयोरादिमध्यांतेषु भागेषु वातेन रुक् नाल्पातिविशिष्टा भवेत्। राज्यह्नोरादौ न मध्येऽल्पा राज्यन्ते अति अत्यन्तं। राज्यह्नोरादौ पित्तेन रुक् न भवति अन्ते भागेऽल्पा मध्ये भागे अत्यन्तं भवति। तथा राज्यह्नोर्मध्ये चांते तथादौ च कफेन रुक् सर्वरोगग्रहणान्नाल्पातिविशिष्टा भवति। ४ अन्ने भुक्तेऽभ्यवहृते सति जीर्यति पाकं गच्छति जीर्णे पाकं गते सति अन्न इति सर्वत्र सबन्ध्यते तेनायमर्थः। भुक्तेऽन्ने वातशूलरुक् न भवति जीर्यति अल्पा ईषत् भवति जीर्णे चातिभवति। पित्तशूलरुक् जीर्णेन्ने न भुक्तेऽल्पा जीर्यत्यत्यन्तं भवति। श्लेष्मरुक् जीर्णेन्ने न। जीर्यत्यल्पा भुक्ते चाति भवति इति। ५ कफपित्तानिलाः देहाऽहोरात्रिवयसां पूर्वमध्यांतेषु यथासंख्यं व्यवस्थिताः। देहस्य पूर्वभागे शिर आरभ्य वक्षोंते कफः व्यवस्थितः। मध्ये आमाशयमारभ्य नाभ्यन्ते पित्तं व्यवस्थितं। अन्ते नाभेरधोभागे वातो व्यवस्थितः। देहस्य शिरोमूलत्वादेवं भागकल्पना। अह्नस्त्रिधाविभक्तस्य पूर्वभागे कफः मध्याह्ने पित्तं अपराह्णे वायुः। तथा रात्रिर्ज्ञेया। वयसोपि पूर्वभागे बाल्यावस्थायां कफः। मध्ये तरुणावस्थायां पित्तं। अन्ते वृद्धावस्थायां वायुः। देहाहोरात्रिवयसां सन्धिषु कफानिलावेव। देहस्य पूर्वभागमध्यभागयोः सन्धौ उरःसंज्ञकः कफः। मध्यभागांतभागयोः सन्धौ पक्वाशयाख्ये वातः। एतच्च यथासंख्यमित्यानर्त्यं लभ्यते। राज्या साकमह्नःसन्धौ प्रभातसंज्ञे। अह्ना साकं राज्ये सन्धौ प्रदोषसंज्ञे यथाक्रमं कफवातौ व्यवस्थितौ। बाल्यतारुण्ययोः संधौ श्लेष्मा। तारुण्यवार्द्धक्ययोः सन्धौ वायुः इति व्याख्या कथिता। ६ विसर्गो दक्षिणायनं वर्षादयः त्रय ऋतवः। बलस्य विसर्जनाद्धिसर्गश्चोच्यते। आ-

मध्ये मध्यं बलं त्वंते श्रेष्ठमादौ च निर्दिशेत् ॥ ६२ ॥

॥ किं चान्यदपि ॥

हेत्वादिरूपाकृतिसात्म्यजाति-
भेदैः समीक्ष्यातुरसर्वरोगान् ॥
चिकित्सितं कर्षणबृंहणाख्यं
कुर्वीत वैद्यो विधिवत्सुयोगैः ॥ ६३ ॥
दिव्यौषधीनां बहवः प्रभेदा
वृन्दारकाणामिव विस्फुरन्ति ॥
ज्ञात्वेति संदेहमपोस्य धीरैः
संभावनीया विविधप्रभावाः ॥ ६४ ॥
स्वाभाविकागन्तुककायिकान्तरा
रोगा भवेयुः किल कर्मदोषजाः ॥
तच्छेदनार्थं दुरितापहारिणः

---

दानः शिशिराद्यास्त्रय ऋतवः उत्तरायणं। बलस्यादानादादानं चोच्यते। एतयोर्यथाक्रमं आदौ वर्षाख्ये ऋतौ अन्ते घर्मऋतौ नृणां बलहानिं निर्दिशेत् तथा विसर्गस्य मध्ये शरदि आदानस्य मध्ये वसन्ते मध्यं बलं निर्दिशेत्। तथा विसर्गस्यांते हेमन्तर्तौ आदानस्यादि शिशिरे श्रेष्ठं अत्यन्तं बलं निर्दिशेत्। एतेन एतदुक्तं भवति। विसर्गे यथोत्तरं बलमभिवर्धते। आदाने यथोत्तरं क्षीयते। येन विसर्गस्य यावदाद्ये दिवसे बलः। तावदादानस्यांते दिने। यावत् द्वितीये दिने विसर्गस्य तावदादानस्योपांते दिने। अनया युक्त्या विसर्गस्याद्ये ऋतौ वर्षाख्ये यावद्बलं तावदादानस्यान्ते ऋतौ। विसर्गस्य मध्यर्तौ यावता तावदादानस्योपान्त्ये वसन्तर्तौ। यावद्विसर्गस्यांते हेमन्तर्तौ तावदादानस्याद्ये शिशिराख्ये। आरोहावरोहक्रमवान्तस्य वृद्धिक्षयौ भवतः ॥

१ निदानपूर्वरूपोपशमसंप्राप्तय एतैर्भेदैः। २ अष्टौ ज्वरा इति। ३ दृष्ट्वा। कुपिपुटाख्यं। ४ तान् भेदान्। ५ दूरीकृत्य। ६ संयोजनीयाः। ७ ओषधयः। ८ स्वाभाविका रोगाः क्षुत्पिपासादयः। आगन्तुकाभूताभिषंगादयः। कायिका अजीर्णादयः। आंतराः मानसिकाः कामादय इति चतुर्धा। कर्मजाः दोषजाः कर्मदोषजाः इति त्रिधा भवेयुः।

श्रेयोमयान् योगवरान्नियोजयेत्॥६५॥इति शार्ङ्गधरात्॥
तत्र तावदनिलः शममेति स्नेहवस्तिपरिषेकनिरूहैः ॥
भुक्तमात्रबलदेन नराणामोदनेन मृदुमांसरसेन ॥ ६६॥

द्राक्षयात्रिफलया त्रिवृता च
स्रंसनेन रुधिरस्रुतिभिश्च॥
सर्पिषा च सितया पयसा च
स्वादुना भवति पित्तनिवृत्तिः ॥ ६७ ॥
लंघनेन वमनेन यवान्न-
प्राशनेन शिरसश्च विरेकैः ॥
कट्फलादिकवलैरहिमाभि-
श्चाद्भिरत्र शममेति कफश्च ॥ ६८ ॥
इति सूत्रस्थाने चिकित्सा कलिकातः ॥

इति योगतरंगिण्यां ग्रंथावतारिका नाम प्रथमस्तरंगः ॥ १ ॥

---

अथ द्वितीयस्तरंगः ।

॥ प्रथमं परिभाषा ॥

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ॥
अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥ १ ॥
मानं च द्विविधं प्रोक्तं कालिङ्गं मागधं तथा ॥
कालिङ्गान्मागधं श्रेष्ठमिति मानविदो विदुः ॥ २ ॥
त्रसरेणुर्बुधैः प्रोक्तास्त्रिशता परमाणुभिः ॥
त्रसरेणोस्तु पर्यायो नाम्ना वंशी निगद्यते ॥ ३ ॥

---

१ विरेचनं । २ निसोत । ३ विरेचनं । ४ घृतेन । ५ दुग्धेन । ६ नवीनयवभोजनेन । ७ नस्यकर्मभिः । ८ उष्णोदकैः । ९ ग्रन्थात । १० प्रमाणेन ।

जालांतरगतैः सूर्यकरैर्वंशी विलोक्यते ॥
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥ ४ ॥
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः ॥
यवोष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तचतुष्टयम् ॥ ५ ॥
षड्भिस्तु रक्तिकाभिः स्यान्मापको हेमधानकौ ॥
मापैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ॥ ६ ॥
टंकः स एव कथितस्तद्द्वयं कोल उच्यते ॥
क्षुद्रेवो वटकश्चैव द्रङ्क्षणः स निगद्यते ॥ ७ ॥
कोलद्वयं च कर्पः स्यात्स प्रोक्ता पाणिमानिका ॥
अक्षः पिचुः पाणितलं किंचित्पाणिश्च तिंदुकम् ॥ ८ ॥
विडालपदकं चैव तथा पोडशिका मता ॥
करमध्ये हंसपदं सुवर्णं कवलग्रहः ॥ ९ ॥
उदुंवरं च पर्यायैः कर्प एव निगद्यते ॥
स्यात्कर्पाभ्यामर्धपलं शुक्तिरष्टमिका तथा ॥ १० ॥
शुक्तिभ्यां च पलं ज्ञेयं मुपिराम्रं चतुर्थिका ॥
प्रकुञ्चः पोडशी विल्वं पलमेवात्र कीर्त्यते ॥ ११ ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतं च निगद्यते ॥
प्रसृतिभ्यामंजलिः स्यात्कुडवोर्धशरावकः ॥ १३ ॥
अर्धमानं च स ज्ञेयः कुडवाभ्यां च मांणिका ॥
शरावोष्टपलं तद्वत् ज्ञेयमत्र विचक्षणैः ॥ १४ ॥

---

१ यवचतुष्टयं । २ स एव मापकः पर्यायशब्देन हेमधानकौ निगद्येते । ३ क्षुद्रम इत्यपि पाठः । ४ कथिता । ५ मासेकीसरक । ६ सैवपर्यायशब्देन अष्टटंकमिता शुक्तिरिति । ७ पोडशटंकम् पलं ज्ञातव्यमिति शेषः । ८ द्वात्रिंशतटंकानां प्रसृतिः ज्ञेयः । ९ चतुःषष्टिकानां टंकानामंजलिर्ज्ञेयः । १० अष्टाविंशत्युत्तरशतटंकानां माणिकेत्यर्थः । ११ निपुणैः ।

शरावाभ्यां भवेत्प्रस्थ[1]श्चतुःप्रस्थैस्तथाढकम्[2] ॥
भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः ॥ १५ ॥
चतुर्भिराढकैर्द्रोणः[3] कलशो नल्वणो मतः ॥
उन्मानं च घटो राशिर्द्रोणपर्यायसंज्ञकः ॥
द्रोणाभ्यां शूर्पकुंभौ[4] च चतुःषष्टिशरावकः ॥ १६ ॥
शूर्पाभ्यां च भवेद्द्रोणी[5] वाहुगोणी च सा स्मृता ॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ॥ १७ ॥
चतुःसहस्रपलिका पण्णवत्यधिका च सा ॥
पलानां द्विसहस्रं च भार एकः प्रकीर्त्तितः ॥ १८ ॥
तुला पलशतं ज्ञेया सर्वत्रैष विनिश्चयः ॥
मापटंकाक्षविल्वानि कुडवः प्रस्थमाढकम् ॥ १९ ॥
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥
गुंजादिमानमारभ्य यावत्स्यात्कुडवस्थितिः ॥ २० ॥
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ॥
प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः ॥ २१ ॥
मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् ॥
मृद्वृक्षवेणुलोहाद्यैर्भाण्डं यच्चतुरंगुलम् ॥ २२ ॥
विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ॥
यदौषधं तु प्रथमं यस्य योगस्य कथ्यते ॥ २३ ॥
तन्नाम्नैव स योगो हि कथ्यते क्वचिदन्यथा ॥
इति मागधी परिभाषा ॥ अथ कालिंगपरिभाषा ।
यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः ॥

---

१ षट्पञ्चाशदुत्तरद्विशतटंकानां प्रस्थो ज्ञेयः। २ चतुर्विंशतोत्तरसहस्रटंकानामाढकं ज्ञेयम्। ३ षण्णवत्युत्तरचतुःसहस्रटंकानां द्रोणो ज्ञेयः। ४ अष्टसहस्रद्विनवत्यधिकशतटंकानां शूर्पकुंभौ ज्ञेयौ। ५ षोडशसहस्रचतुरशीत्यधिकत्रिशतटंकानां द्रोणी ज्ञेया।

यवद्वयेन गुंजा स्यात्त्रिगुञ्जो वल्ल उच्यते ॥ २४ ॥
मापो गुंजाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् ॥
स्याच्चतुर्मापकैः शाणः सनिष्कष्टङ्क एव च ॥ २५ ॥
गद्याणो मापकैः षड्भिः कर्षः स्याद्दशमापकः ॥
चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ॥ २६ ॥
चतुःपलैश्च कुडवं प्रस्थाद्याः पूर्ववन्मताः ॥

॥ इति कालिंगपरिभाषा ॥ शार्ङ्गधरात् ।

त्रुटिः स्याऽदणुभिः षड्भिस्ताभिर्लिक्षा समीरिता ॥ २७ ॥
ताभिः षड्भिर्भवेद्यूका षड्यूकाभी रजो मतम् ॥
जालांतरगतैसूर्यकरैर्वंशी विलोक्यते ॥ २८ ॥
तस्या नामान्तरं ज्ञेयं त्रसरेणू रजस्तथा ॥

अथ कृष्णात्रेयात्

रजांसि त्रीणि सिंकता ताभिः षोडशभिस्तथा ॥२९॥
सर्षपश्च भवेद्गौरस्ते चाष्टौ तण्डुलं विदुः ॥
तद्द्वयं धान्यकं मापं तद्द्वयं रक्तिका मता ॥ ३० ॥
रक्तिकाद्वितयेनापि वल्लः प्रोक्तो विशारदैः ॥
चतुर्भिश्चण्डिका तैः स्यादेवं मानपरंपरा ॥ ३१ ॥
इति योगतरंगिण्यां परिभाषाकथनं नाम द्वितीयस्तरंगः ।

---

तृतीयस्तरंगः ।

॥ अथ युक्तायुक्तकथनम् ॥

नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु ॥
विनाविडंगकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः ॥ १ ॥
गुडूची कुटजो वासा कूष्माण्डश्च शतावरी ॥

---

१ लिक्षाप्रमाणम् । २वालुका ज्ञेया। ३धान्यम्। ४धान्यशब्देन सर्वान्नग्रहणम्

अश्वगंधासहचरौ शतपुष्पा प्रसारिणी ॥ २ ॥
प्रयोज्या च सदैवार्द्रा द्विगुणां नैव कारयेत् ॥
शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्मसु ॥ ३ ॥
आर्द्रं च द्विगुणं योज्यमेष सर्वत्र निश्चयः ॥
कालेऽनुक्ते प्रभातं स्यादंगेऽनुक्ते जटा भवेत् ॥ ४ ॥
भागेऽनुक्ते हि साम्यं स्यात् पात्रे नुक्ते तु मृन्मयम् ॥
एकमप्यौषधं योगे यस्मिन् यत्पुनरुच्यते ॥ ५ ॥
मानतो द्विगुणं प्रोक्तं तद्द्रव्यं तत्त्वदर्शिभिः ॥
गुणहीनं भवेद्वर्षादूर्ध्वं तद्रूपमौषधम् ॥ ६ ॥
मासद्वयात्तथा चूर्णं हीनवीर्यत्वमाप्नुयात् ॥
हीनत्वं गुटिकालेहौ लभेते वत्सरात्परम् ॥ ७ ॥
हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकात्तथा ॥
औषध्यो लघुपाकाः स्युर्निर्वीर्या वत्सरात्परम् ॥ ८ ॥
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः ॥
व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत्त्यजेत् ॥
अनुक्तमपि यद्युक्तं योजयेत्तत्र तद्बुधः ॥ ९ ॥
॥ इतिशार्ङ्गधरात् ॥
वज्राभावे तु वैक्रान्तं स्वर्णाऽभावे तु माक्षिकम् ॥
हेममाक्षिकजं सत्त्वं मतं हेमसमं गुणैः ॥ १० ॥
विमलामाक्षिकं ज्ञेयं ध्रुवं रजतवद्गुणैः ॥
मुक्ताऽभावे क्षिपेन्नूनं मुक्ताशुक्तिं च तद्गुणाम् ॥ ११ ॥
अभावेभ्रकसत्त्वस्य कान्तलोहं प्रयोजयेत् ॥
कांताभावे तीक्ष्णलोहमित्युक्तं रसदर्पणे ॥ १२ ॥

---

१ मृत्पात्रं । २ यथापूर्वं तथा । ३ चतुर्मासात्परं । ४ क्षुद्रादयोज्ञेयाः । ५स्वर्णमाक्षिकम् । ६ रौप्यमाक्षिकजम् । ७ रौप्यतुल्यम् । ८ एतन्नामकमन्ये ।

अभावे मधुनो योज्यो गुडो जीर्णश्च तद्गुणः ॥
सिताभावे भवेत् खण्डं शाल्यभावे च षष्टिकाः ॥ १३ ॥
असंभवे तु द्राक्षायाः प्रदेयं काश्मरीफलम् ॥
वृक्षाम्लं न भवेत्तत्र दाडिमाम्लं प्रयोजयेत् ॥ १४ ॥
वेतसाम्लस्य चाभावे हरिमन्थाम्लमादिशेत् ॥
अभावे चन्दनस्यापि मेलयेद्रक्तचन्दनम् ॥ १५ ॥
तुगाभावे प्रदातव्या त्वक्क्षीरी तद्गुणा बुधैः ॥
अभावे सति पत्राणां रसादेर्भावनाविधौ ॥
विषमुष्टिकषायेण षड्गुणा भावना भवेत् ॥ १६ ॥

॥ इति गोरक्षमतात् ॥

भेदाजीवककाकोलीद्वन्द्वाऽभावे प्रयोजयेत् ॥
यष्टीविदार्यश्वगंधा बलावाराहिकाथ वा ॥ १७ ॥

॥ इति वैद्यालंकारात् ॥

फलमामंमपुष्टं च त्यज्येद्बिल्वादृते सदा ॥
द्राक्षाबिल्वशिवादीनां फलं शुष्कं गुणोत्तरम् ॥ १८ ॥
आदिशब्दाद्विभीतकपरूषादेरपि ॥ गोरक्षमतात् ॥
अंतःसंमार्जने मोदास्थाने योज्या जवानिका ॥
बहिःसंमार्जने मोदा ह्यजमोदैव गृह्यते ॥ १९ ॥
अंतःसंमार्जने योज्यं वचास्थाने कुलिञ्जनम् ॥
बहिःसंमार्जने सैव प्रयोक्तव्या मनीषिभिः ॥ २० ॥
कृष्णजीरकयोगेन कर्तव्ये भक्ष्यभेषजे ॥

---

१ पुरातनः । २ चामरविशेषः । ३ साठीनामक इति भा० । ४ अनामौ । ५ कभारी(कुंद्ररन) । ६ अम्लवेतसस्येति वा पाठः । ७ वंशलोचनम् ८ यस्य वृक्षस्य पत्राणां रसादेरभावस्तस्य वृक्षस्य कषायेण षड्गुणा भावना देया। पत्राणामित्यत्र 'पित्ताना' मित्येकस्मिन्पुस्तके(?) । ९ तन्नामसन्यात् । १० अपक्वं । ११ लघु ।

तस्य स्थाने प्रदातव्यो जीरकः कुशलैः सदा ॥ २१ ॥
सारश्च खदिरादीनां निंबादीनां त्वचः स्मृताः ॥
फलं च दाडिमादीनां पटोलादेर्दलं मतम् ॥ २२॥
॥ इति वृद्धशौनकात् ॥
क्वचित्पत्रं क्वचिन्मूलं क्वचित्पुष्पं क्वचित्फलम् ॥
क्वचिद्बीजंक्वचित्क्वाथं क्वचिद्वल्कं क्वचिज्जलम् ॥ २३ ॥
क्वचिन्नालं योजनीयं क्षीरं क्षीरं क्वचित्क्वचित् ॥
एकैकस्यौषधस्यैव यथायोगं प्रयोजयेत् ॥ २४ ॥
अर्धं सिंदूररसस्य तैलघृतयोर्लोहस्य भागोष्टमः
संसिद्धाखिललोहचूर्णगुटिकादीनां तथा सप्तमः ॥
यो दीयेत भिषग्वराय सरुजा निर्दिश्य धन्वन्तरिं
देहारोग्यसुखाप्तये निगदितो भागः स धान्वन्तरिः॥२५॥
क्रीतद्रव्यस्य भैषज्यभागश्चैकादशो हि यः ॥
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स कथ्यते ॥ २६ ॥
गृहीत्वाधिकमीशांशाद्यो ऽसमीचीनमौषधम् ॥
दापयेल्लुब्धवद्वैद्यः स स्याद्विश्वासघातकः ॥ २७ ॥
॥ इति वैद्यालंकारात् ॥
इतिश्रीयोगतरंगिण्यांयुक्तायुक्तकथनंनामतृतीयस्तरङ्गः।

---

चतुर्थस्तरंगः।

स्नेहाद्या अथ कथ्यन्ते योगा रोगोपघातकाः ॥
स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा ॥ १ ॥
मज्जा च तं पिबेन्मर्त्यः किंचिदभ्युदिते रवौ ॥

---

१ श्वेतजीरकः । २ रसः । ३ निंबादीनामिति तत्रतत्र ज्ञेय । ४ अर्द्धभागः । ५ रसादेर्भागः । ६ श्रेष्ठवैद्याय । ७ रोगिणा । ८ हृदिध्यात्वा । ९ कथितः । १० अयोग्यम् । ११ मांसस्नेहः । १२ अस्थिमध्यस्नेहः । १३ उदिते सति ।

स्थावरो जंगमश्चेति द्वियोनिः स्नेह उच्यते ॥
तिलतैलं स्थावरेषु जंगमेषु घृतं वरम् ॥ २ ॥
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥
पिवेत्त्र्यहं चतुरहं पञ्चाहं षडहं तथा ॥ ३ ॥
सप्तरात्रात्परं स्नेहः सात्मीभवति सेवितः ॥
दोषकालाग्निवयसां वलं दृष्ट्वा प्रयोजयेत् ॥ ४ ॥
हीनां च मध्यमां ज्येष्ठां मात्रां स्नेहस्य वुद्धिमान् ॥ ५ ॥
अमात्रया तथाकाले मिथ्याहारविहारतः ॥
स्नेहः करोति शोफार्शस्तंद्रानिद्राविसंज्ञताः ॥ ६ ॥
देया दीप्ताग्नये मात्रा स्नेहस्य पलसंमिता॥
मध्यमाथ त्रिकर्षास्यात् जघन्या च द्विकार्षिकी ॥ ७ ॥
केवलं पैत्तिके सर्पिर्वातिके सैंधवान्वितम् ॥
पेयं बहुकफे चापि व्योषक्षारसमन्वितम् ॥ ८ ॥
रूक्षक्षतविषार्तानां वातपित्तविकारिणाम् ॥
हीनमेधास्मृतीनां च सर्पिः पाने प्रशस्यते ॥ ९ ॥
कृमिकोष्ठानिलाविष्टः प्रवृद्धकफमेदसः ॥
पिवेयुस्तैलसात्म्या ये तैलं दाढर्यार्थिनश्च ये ॥ १० ॥
व्यायामकर्षिताः शुष्का रेतोरिक्ता महारुजः ॥
मन्दाग्निमरुतप्राणा वसायोग्या नरा मताः ॥ ११ ॥
क्रूराशयाः क्लेशसहा वातार्ता दीप्तवह्नयः ॥

१ घृततैलाभ्यां यमकः । २ घृततैलवसाभिस्त्रिवृतः । ३ घृततैलवसामज्जाभिर्महान् इति त्रयो भेदाः । ४ घृतं त्र्यहं तैलं चतुरहं वसा पंचाहं मज्जा षडहं एव क्रमेण । ५ स्नेहो घृतादिसेवितः । ६ अहोरात्रेण पच्यते । मांसं अह्नि यामचतुष्टये जीर्यति दिनार्द्धेन द्वियामे जीर्यति इति ज्ञेयम् । ७ व्यायामो मल्लादियुद्धं धनुराकर्षणादि तत्कर्षिताः क्षीणाः । ८ अत्र 'शुष्करेतोरक्ता' इत्यपि पाठः । शुष्कं क्षीण रेतो वीर्यं रक्तं च येषां ते शुष्करेतोरक्ताः । ९ वीर्यहीनाः । १० प्राणोवलम् । ११क्रूरा आशयाः कोष्ठा येषांते कठोरमनसो वा । १२ दुःखसहाः ।

मज्जानमापिबेयुस्ते सर्पिर्वा सर्वतो हितम् ॥ १२ ॥
शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि ॥
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ॥ १३ ॥
नस्याऽभ्यंजनगंडूषैर्मूर्द्धकर्णाक्षितर्पणैः ॥
तैलं घृतं वा युंजीत दृष्ट्वा दोषबलाबलम् ॥ १४ ॥
घृते कोष्णं जलं पेयं तैले यूषः प्रशस्यते ॥
वसामज्जाविधौ मंडमनुपानं सुखावहम् ॥ १५ ॥
वृद्धबालकृशा रूक्षाः क्षीणास्राः क्षीणरेतसः ॥
वातार्तास्तिमिरार्ता ये तेषां स्नेहनमुत्तमम् ॥ १६ ॥
रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम् ॥ १७ ॥

॥ अतिस्निग्धस्य लक्षणमाह ॥

भक्तद्वेषो मुखस्रावो गुदे दाहप्रवाहिका ॥
तंद्रातीसारपांडुत्वं भृशं स्निग्धस्य लक्षणम् ॥ १८ ॥
श्यामाकचणकाद्यैश्च भक्तपिण्याकसक्तुभिः ॥
रूक्षणं कारयेदेतैर्यथादोषं बलाबलम् ॥ १९ ॥
स्नेहे व्यायामसंशीतवेगाघातप्रजागरान् ॥
दिवास्वप्नमभिष्यंदि रूक्षान्नं च विवर्जयेत् ॥ २० ॥

॥ इति शार्ङ्गधरात् ॥

॥ अथ स्नेहपानविधिः ॥

विघ्नेशक्षेत्रपालौ वटुकमपि शुभे वासरे पूजयित्वा
तैलस्याज्यस्यार्किवारचयतिनिपुणःसंस्कृतिसंप्रदायात् ॥

---

१ सर्वेषु रोगेषु। २ दिवसे। ३ ईषदुष्णं। ४ क्षीणरुधिराः। ५ क्षीणवीर्याः। ६ पुरुषाणाम्। ७ अनिस्नेहपीतस्य। ८ गणेशः। ९ भूमिपः। १० भैरवं। ११ दिने। १२ घृतस्य। १३ सुवैद्यः। १४ संस्कारम्। १५ शास्त्रमर्यादायाः।

आदौ वह्निं प्रदद्याद्यदवधि शनैकैः शब्दफेनव्ययः स्या-
त्पश्चान्मृत्पिंडकैस्तद्दशभिरलघुभिर्नीतिपीनैर्विशोध्यम्॥
एकं संस्थाप्य घस्त्रं विधिवदथ पचेद्वासरादग्निमांद्यं
काथैःकल्कैश्च दुग्धैस्तदनुसुरभिभिःशोधयेत्तैर्वि[10]शोध्यम्॥
कस्तूरी चंदनं गै[11]लौजै[12]लैजलदशठीरक्तै[13]पाटीरकुष्ठ-
त्वक्मंजिष्ठातुरुष्कागुरुनखरदलश्वेतकाकोलमुख्यैः २२

॥ इति सारसंग्रहात् ॥

"तैलं कृत्वा कटाहे विमलदृढतरे मंदमंदानिलैस्त-
त्पक्कं निष्फेनभावं व्रजति किल यदा शैत्यभावं ततस्तु॥
मंजिष्ठारात्रिलोध्रैर्जलधरनलिकैः शामलैः साक्षपथ्यैः
शूचीपुष्पांघ्रिनीरैरुपहितमथितस्तैलगंधं जहाति ॥
तैलस्येंदुकलांशकैकविकसाभागास्तु तस्यांऽशिका
ये चान्येपि वरा पयोदरजनीह्रीवेरलोध्रादयः ॥
आम्रजंबूकपित्थानां बीजपूरकबिल्वयोः ॥
शोधनं तिलतैलस्य पल्लवानां तु पंचकम् ॥"
जलस्नेहौषधीनां च प्रमाणं यत्र नोदितम् ॥
तत्र स्यादौषधात्स्नेहःस्नेहात् क्वाथश्चतुर्गुणः ॥ २३ ॥
स्नेहाच्चतुर्गुणं क्वाथ्यं सदा च स्नेहसंविधौ ॥
चतुर्गुणं जलं दत्वा क्वाथः क्वथ्यसमो मतः ॥ २४ ॥

॥ इति चरकात् ॥

कल्काच्चतुर्गुणं स्नेहः स्नेहात्क्वाथ्यं चतुर्गुणम् ॥
क्वाथ्याच्चतुर्गुणं वारि क्वाथः क्वाथ्यसमो मतः ॥ २५ ॥

---

१ यावत्कालम् । २ मंदंमंदं । ३ फेननाशः । ४ मृत्गोलकैः । ५ संस्थापनं कृत्वा । ६ दिनम् । ७ यथाशास्त्रम् । ८ तदनंतरम् । ९ सुगंधितद्रव्यैः । १० शुद्धतैलम् । ११ कर्पूरः । १२ नागरम् । १३ रक्तचंदनम् । १४ क्वाथद्रव्यात् ।

मृंदौ चंतुर्गुणं देयं कोठिनेऽष्टगुणं जलम् ॥
कठिनात्कठिने द्रव्ये वारि षोडशभागिकम् ॥ २६ ॥
स्नेहकल्को यदाऽगुल्यावर्तितो वर्तिवद्भवेत् ॥
वह्नौ क्षिप्ते च नोशब्दस्तदा सिद्धं विनिर्दिशेत् ॥ २७ ॥

॥ अन्यच्च ॥

शब्दस्योपरमे प्राप्ते फेनस्योपशमे तथा ॥
गंधवर्णरसादीनां संपत्तौ सिद्धिमादिशेत् ॥ २८ ॥
घृतस्यैवं विपकस्य संसिद्धिं कुशलो भिषक् ॥
फेनोद्गमे च तैलस्य शेषं घृतवदादिशेत् ॥ २९ ॥

इति योगरत्नावलीतः ॥

अकल्कयोग्यद्रव्याणां कठिनानां विचारतः ॥
क्वाथो विधीयतेन्येषां कल्क एव भिषङ्मतः ॥ ३० ॥

इति वैद्यालंकारात् ॥

आदौ संचारयेत् क्वाथं पश्चात्कल्कं ततः पयः ॥
ततोन्यत्सुरभि द्रव्यमेष स्नेहविधौ क्रमः ॥ ३१ ॥

इति मतिमुकुरात् ॥

क्षीरं स्नेहसमं दद्यादनुक्ते स्नेहसंविधौ ॥
शक्रद्रसं मांसरसं मूत्रं सौवीरकादिकम् ॥ ३२ ॥
स्नेहादष्टगुणं देयं जलं च द्विगुणं क्षिपेत् ॥
अर्धावशिष्टः कर्तव्यः पाको गंधांबुकं ततः ॥ ३३ ॥
चन्द्रकस्तूरिकादीनां सहस्रांशं प्रयोजयेत् ॥
पुष्पाणि गन्धनिर्यासं सिद्धे शीतेवतारिते ॥ ३४ ॥

इति चरकात् ॥

---

१ [illegible] । २ [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] ।
६ [illegible] । ७ [illegible] ।

दृषत्पिष्टो भवेत्कल्कः क्राथोग्निक्वथितो मतः ॥
स्नेहपाकास्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ॥ ३५॥
ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् ॥
मध्यपाकस्य संसिद्धिः कल्के नीरसकोमले ॥ ३६ ॥
ईषत्कठिनकल्कश्च स्नेहपाको भवेत्खरः ॥
तदूर्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः ॥ ३७ ॥
अतिपाकश्च निर्वीर्यो वह्निमांद्यकरश्च सः ॥
नस्यार्थे स्यान्मृदुः पाको मध्यमः सर्वकर्मसु ॥ ३८॥
अभ्यंगार्थे खरः प्रोक्तो युंज्यादेवं यथोचितम् ॥
घृततैलगुडादींस्तु साधयेन्नैकवासरे ॥ ३९ ॥
प्रकुर्वन्त्युषिता ह्येते विशेषाद्गुणसंचयम् ४०॥ शार्ङ्गधरात्
इति योगतरंगिण्यां स्नेहपाकविधिर्नाम चतुर्थस्तरंगः ॥

---

पञ्चमस्तरंगः।

अथ पंच कर्माणि । तत्र प्रथमं स्वेदविधिः
स्वेदश्चतुर्विधः प्रोक्तस्तापोष्णस्वेदसंज्ञकौ ॥
उपनाहो द्रवस्वेदः सर्वे वातार्तिहारिणः ॥ १ ॥
स्वेदौ तापोष्णजौ प्रायः श्लेष्मघ्नौ समुदीरितौ ॥
उपनाहस्तु वातघ्नः पित्तसंज्ञे द्रवो हितः ॥ २॥
महाबले महाव्याधौ शीते स्वेदो महान्मतः ॥

---

१ नस्यकर्मणि । २ पाकः । ३ तीक्ष्णः पाकः । ४ घृतादीनैकदिनेनकारयेत । ५ रात्रौ वसिताः । ६ गुणसमुहम् । ७ तापोष्मौ एतौद्वौस्वेदसंज्ञितौ भवतः । उपनाहोद्रवःस्वेदःएतौद्वौ एतौद्वौ एवं चत्वारः सर्वेतेवातहारिणो भवति । चतुर्विधस्वेदस्यवातनाशकत्वेपि विशेषमाह । अन्यतरसंसृष्टेवातमिश्रितेपि द्रवः स्वेदो विहित इति सुश्रुताभिप्रायः । केवलपित्तेतु सर्वएवस्वेदानिषिद्धाः शीतजलावगाह एव प्रशस्तः । ८ स्वेदः । ९ पित्तस्य योगे । १० अधिकः ।

दुर्बले दुर्बलस्वेदो मध्यमे मध्यमो मतः ॥ ३ ॥
" येषां नस्यं प्रदातव्यं वस्तिश्चापि हि देहिनाम् ॥
शोधनीयाश्च ये केचित्पूर्वं स्वेद्याश्च ते मताः ॥ "
स्वेद्या ऊर्ध्वं त्रयोपीह भगंदर्यर्शसस्तथा ॥
अश्मर्यां चातुरो जंतुः शमयेच्छास्त्रकर्मणः ॥ ४ ॥
पश्चात्स्वेद्यो हृते शल्ये मूढगर्भगदे तथा ॥
कोले प्रसूताऽकाले वा पश्चात्स्वेद्या नितंबिनी ॥ ५ ॥
सर्वान्स्वेदान्निवाते च जीर्णाहारे च कारयेत् ॥
स्विद्यमानशरीरस्य हृदयं शीतलैः स्पृशेत् ॥ ६ ॥
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ॥
अजीर्णी दुर्बलो मेही क्षतक्षीणः पिपासितः ॥ ७ ॥
अतीसारी रक्तपित्ती पांडुरोगी तथोदरी ॥
मदार्तो गर्भिणी चैव न हि स्वेद्या विजानता ॥ ८ ॥
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत् ॥
मृदुस्वेदं प्रयुंजीत तथा हृन्मुष्कदृष्टिषु ॥ ९ ॥
अतिस्वेदात्संधिपीडा दाहस्तृष्णा क्लमो भ्रमः ॥
पित्तासृक्पिडकाकोपस्तत्र शीतैरुपाचरेत् ॥ १० ॥
तेषु तापाभिधः स्वेदो वालुकावस्त्रपाणिभिः ॥

॥ अथ ऊष्मस्वेदमाह ॥

---

१ स्वल्पः । २ नाधिकोनाल्पः । ३ अपिशब्दात्पूर्वमपि । ४ कालेनवमभासादमे प्रसूता । ५ अकाले नवमासात्पूर्वं प्रसूता । ६ निर्वातस्थाने । ७ पुंसः । ८ कमलकदलीपत्राद्यैः । ९ स्नेहस्विन्नस्य । १० उदरक्षतक्षीणः । ११ वैद्येन । १२ तस्य निर्माणांतरके लिखितं । अंगारैःखदिराद्यैर्निर्धूमैःवालुकां तप्तां कृत्वा एरंडपत्रांतरितंस्वेदःपाणिकंदुकवस्त्राणांदूरामिना उष्णं कृत्वा स्वेदांगार मृत्पात्रे स्थापयित्वा स्वेदःकर्तव्यः । १३ वालुकादेःस्विन्नस्यचिरेकेसतिवमनंकृतेसति हृदयंशीतलैश्चंदनादिभिःस्पृशेत् । १४ लोहपिंडटकाटादिभिस्तप्तैः यः स्वेदः स ऊष्मस्वेदः । १५ चतुर्विधस्वेदेषु ।

प्रस्तरैरम्लसिक्तैश्च कायेरल्लकवेष्टिते ॥ ११ ॥
अथ वा वातनिर्णाशिद्रवक्राथरसादिभिः ॥
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च ॥१२॥
विमुद्र्यास्यं त्रिखंडां च धातुजां काष्ठजामथ ॥
षडंगुलास्यां गोपुच्छां नाडीं युंज्याद्विहस्तिकाम् ॥ १३ ॥
सुखोपविष्टमभ्यक्तं गुरुप्रावरणावृतम् ॥
हस्तिशुंडिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ १४ ॥
॥ अपर ऊष्मस्वेदप्रकारः ॥
पुरुषायाममात्रं वा भूमिमुत्कीर्य खादिरैः ॥
काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः ॥ १५ ॥
वातघ्नपत्रैराच्छाद्य शयानं स्वेदयेन्नरम् ॥
एवं माषादिभिः स्विन्नैः शयानं स्वेदमाचरेत् ॥ १६ ॥
तथोपनाहस्वेदं च कुर्याद्वातहरौषधैः ॥
प्रदिग्धदेहं वातार्तं क्षीरमांसरसान्वितैः ॥ १७ ॥
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः ॥
उपग्राम्यानूपमांसैर्जीवनीयगणेन च ॥ १८ ॥
दधिसौवीरकक्षीरवीरतर्वादिना तथा ॥
कुलत्थमाषगोधूमरतसीतिलसर्षपैः ॥ १९ ॥
शतपुष्पादेवदार्वाशेफालीस्थूलजीरकैः ॥
एरंडमूलबीजैश्च रास्नामूलकशिग्रुभिः ॥ २० ॥
मिसिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः ॥

---

१ [illegible] २ पत्थरैः । ३ [illegible] । ४ [illegible]
५ [illegible] । ६ [illegible] । ७ [illegible]
८ [illegible] ९ [illegible] । १० अभ्यक्तस्य । ११ [illegible]
१२ [illegible] । १३ [illegible] । १४ कांजी इतिभा०
१५ [illegible] इतिभा० । १६ [illegible] इतिभा० । १७ [illegible] ।

प्रसारिण्यश्वगंधाभ्यां बलया दशमूलकैः ॥ २१ ॥
गुडूच्या वानरीबीजैर्यथालाभं समाहृतैः ॥
क्षुण्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ॥ २२ ॥
महाशाल्वणसंज्ञोयं योगः सर्वानिलार्तिजित् ॥
द्रवस्वेदस्तुवातघ्नद्रव्यक्काथेन पूरितम् ॥ २३ ॥
कटाहं कोष्णकं चापि सूपविष्टोवगाहयेत् ॥
तस्य विधानमाह ।
नाभेः षडंगुलं यावन्मग्नः क्काथस्य धारया ॥ २४ ॥
कोष्णया स्कंधयोः सिक्तः स्निग्धैः स्निग्धतनुर्नरः ॥
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् ॥ २५ ॥
एकांतरे व्यंतरे वा स्नेहो युक्तोवगाहने ॥
शिरामुखैर्लोमकूपैर्धमनीभिश्च तर्पयेत् ॥ २६ ॥
शरीरे बलमाधत्ते युक्तं स्नेहोवगाहने ॥
जलसिक्तस्य वर्धते यथामूलेंकुरास्तरोः ॥ २७ ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते ॥
नातः परतरः कश्चिदुपायो वातनाशनः ॥ २८ ॥
कर्पासास्थिकुलत्थिकातिलयवैर्माषांतसीपोंघिका-
मुद्गैरंडपुनर्नवायुगलकैर्धान्याम्लसिक्तैः समैः ॥

---

१ 'खिरेया'इतिभा०। २ 'कचफरी'इ०भा०।३ ग्रामैः। ४ कुट्टितैः। ५ स्वेदितैः। ६ वातघ्नदशमूलाद्यंद्रवंतत्क्काथेनपूरितम्। ७ घृततैलाभ्यंगः। ८ स्वेदाभ्यंतरेकिंकुर्यादित्याह ।. सम्यक्स्विन्नंसम्यक्स्वेदितंपुनःविमृदितंघृततैलाभ्यंगंपश्चात्शनैःउष्णांबुनास्नानंकुर्यादितिपूर्वक्रिययासंबंधः अनभिष्यंदिस्रोतोरोधिभोजयेत् ।व्यायामंभमायंनकारयेत्। सुश्रुतेचतुर्विधएवस्वेदःकथितः। चरकवाग्भटादौत्रयोदशविधः। मन्यज्ञानार्थंतदपिलिख्यते। यदुक्तंवाग्भटे । संकरप्रस्तरोनाडीपरिषेकोवगाहनं । जेता कोष्णघनः कर्षूकुटीकुंभीतयाचमूः। कूपोहोलाकइत्येतेस्वेदायांतित्रयोदश। एषांलक्षणं वाग्भटेदर्शितम् । ९ पुंसः। १० 'उ[illegible]'इतिभा०। ११ 'साठीचावल'। १२ होशाटी।

स्वेदो व्रीहिभवो बुधैर्निगदितो वातामयानां हितो-
हन्यात्पृष्ठगतां रुजं त्रिकगतां पार्श्वांघ्रिकट्यूरुगाम्॥ २९
शीतशूलव्युपरमे स्तंभगौरवनिग्रहे ॥
दीप्तेऽग्नौ मार्दवे जाते स्वेदनाद्विरतिर्मता ॥ ३० ॥
इति योगतरंगिण्यांस्वेदविधिकथनंनाम पञ्चमस्तरंगः।

षष्ठस्तरंगः।

॥ अथ वमनविधिः ॥

शरत्काले वसंते च प्रावृट्काले च देहिनाम् ॥
वमनं रेचनं चैव कारयेत्कुशलो भिषक् ॥ १ ॥
बलवंतं कफव्यासं हृल्लासादिनिपीडितम्॥
तथा वमनसात्म्यं च धीरचित्तं च वामयेत् ॥ २ ॥
विषदोषे स्तन्यरोगे मंदाऽग्नौ श्लीपदे ऽर्बुदे ॥
हृद्रोगकुष्ठवीसर्पमेहाजीर्णभ्रमेषु च ॥ ३॥
विदारिकापचीकासश्वासपीनसवृद्धिषु ॥
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ॥ ४ ॥
नासाताल्वोष्ठपाके च कर्णस्रावे द्विजिह्वके ॥
गलशुंड्यामतीसारे पित्तश्लेष्मगदे तथा ॥ ५ ॥
मेदोगदेरुचौ चैव वमनं कारयेद्भिषक् ॥
न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः ॥ ६ ॥
नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः ॥
मदार्तो बालको रूक्षः क्षुधितश्च निरूहितः ॥ ७ ॥
उदावर्त्यूर्ध्वरक्ती च दुश्छर्द्यः केवलानिली ॥

१ मोन्निमा । २ निवृत्ते सति । ३ मादा गति । ४ स न य म्रात्यागमनेन्मुख- दोषभात्वा अन्यथाप्यस्मद्विषयेऽस्वदर्शनाय । यथा तेन प्रयासेन । भिषज ग्रो- धनं प्राड्‌रज्यैं इत्येवसर्वदा । पद्मगन्धेयधास्यदोषस्यसमुदीरणम् । ८ प्रवी- ण । ६ वैद्यः । ७ वमनसहजम् । ८ मातुर्धोद्धरे ।

पांडुरोगी कृमिव्यासः पठनात्स्वरघातकः ॥ ८ ॥
एतेप्यजीर्णव्यथिता वाम्या ये विषपीडिताः ॥
कफव्यासाश्च ते वाम्या मधूकक्काथपानतः ॥ ९ ॥
सुकुमारं कृशं बालं वृद्धं भीरुं न वामयेत् ॥
पीत्वा यवागूमाकंठं क्षीरतक्रदधीनि च ॥ १० ॥
असात्म्यैः श्लेष्मलैर्भोज्यैर्दोषानुत्क्लेश्य देहिनः ॥
स्निग्धस्विन्नाय वमनं दत्तं सम्यक्प्रवर्तते ॥ ११ ॥
वमनेषु च सर्वेषु सैंधवं मधुना हितम् ॥
बीभत्सं वमनं दद्याद्विपरीतं विरेचनम् ॥ १२ ॥
क्काथद्रव्यस्य कुडवं स्थापयित्वा जलाढकम् ॥
अर्धभागावशिष्टं च वमनेष्वपि चारयेत् ॥ १३ ॥
क्काथपाने नवप्रस्थाः श्रेष्ठा मात्रा प्रकीर्तिता ॥
मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी ॥१४॥
कल्कचूर्णावलेहानां त्रिपलं श्रेष्ठमात्रया ॥
मध्यमं द्विपलं विद्यात्कनीयस्तु पलं भवेत् ॥ १५ ॥
वमने चापि वेगाः स्युरष्टौ पित्तांत उत्तमाः ॥
षड्वेगा मध्यवेगाश्च चत्वारस्त्ववरा मताः ॥ १६ ॥
वमने च विरेके च तथा शोणितमोक्षणे ॥
सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ १७ ॥
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादु हिमैर्जयेत् ॥
सुस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् ॥ १८ ॥
कृष्णाराठफलं सिंधुकफे कोष्णजलैः पिबेत् ॥
पटोलवासानिंबैश्च पित्ते शीतं जलं पिबेत् ॥ १९ ॥

---

१ भक्तनीकृत्य । २ सघण । ३ घृणारहितम् । ४ चतु प्रस्थं । ५ पित्तनाशे
६ मदनफल । ७ जलमित्यपिपाठ ।

सश्लेष्मवातपीडायां सक्षीरं मदनं पिबेत् ॥
अजीर्णे कोष्णपानीयं सिंधुं पीत्वा वमेत्सुधीः ॥ २० ॥
वामनं पाययित्वा तु जानुमात्रासने स्थितम् ॥
कंठमेरंडनालेनस्पृशंतं वामयेद्भिषक् ॥ २१ ॥
प्रसेको हृद्ग्रहः कोठः कंडूर्दुश्छर्दिते भवेत् ॥
अतिवांते भवेत्तृष्णा हिक्कोद्गारौ विसंज्ञता ॥ २२ ॥
जिह्वानिःसर्पणं चाक्ष्णोर्व्यावर्तिर्हनुसंहतिः ॥
रक्तच्छर्दिष्ठीवनं च कंठपीडा च जायते ॥ २३ ॥
वमनस्यातियोगे तु मृदु कुर्याद्विरेचनम् ॥
वमनांतःप्रविष्टायां जिह्वायां कवलग्रहः ॥ २४ ॥
स्निग्धाम्ललवणैर्हृद्यैर्घृतक्षीररसैर्हितः ॥
फलान्यम्लानि खादेयुस्तस्य चान्येग्रतो नराः ॥ २५॥
निःसृतां तु तिलैर्द्राक्षाकल्कलिप्तां प्रवेशयेत् ॥
व्यावृतेक्ष्णोर्घृताभ्यक्ते पीडयेच्च शनैःशनैः ॥ २६॥
हनोर्मोक्षे स्मृतः स्वेदो रक्ते छर्दिविधौ पुनः ॥
धात्री रसांजनोशीरलाजचंदनवारिभिः ॥ २७ ॥

द्यैश्च जांगलरसैः कृत्वा यूषं च भोजयेत् ॥ ३० ॥
तंद्रा निद्रास्यदौर्गंध्यं पांडुश्च ग्रहणीगदः ॥
सुवांतस्य न पीडायै भवंत्येते कदाचन ॥ ३१ ॥
अजीर्णे शीतपानीयं व्यायामं मैथुनं तथा ॥
स्नेहाभ्यंगान्प्रदेहांश्च दिनैकं वर्जयेत्सुधीः ॥ ३२ ॥
इति श्रीयोगतरंगिण्यां वमनविधिकथनं नाम षष्ठस्तरंगः।

॥ सप्तम स्तरंगः ॥

॥ अथ विरेकविधिः ॥

स्निग्धस्विन्नस्य वांतस्य दद्यात्सम्यग्विरेचनम् ॥
अवांतस्य त्वधःस्रस्तो ग्रहणीं छादयेत्कफः ॥ १ ॥
मंदाग्निं गौरवं कुर्याज्जनयेद्वाप्रवाहिकाम् ॥
अथ वा पाचनैरामं बलासं च विपाचयेत् ॥ २ ॥
पित्ते विरेचनं युंज्यादामोद्भूते गदे तथा ॥
उदरे च तथाध्माने कोष्ठाशुद्धौ विशेषतः ॥ ३ ॥
दोषाः कदाचित्कुप्यंति जिता लंघनपाचनैः ॥
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ ४ ॥
बालवृद्धावतिस्निग्धः क्षतक्षीणोभयान्वितः॥
श्रांतस्तृषार्तः स्थूलश्च गर्भिणी च नवज्वरी ॥ ५ ॥
नवप्रसूता नारी च मंदाग्निश्च मदात्ययी ॥
शल्यो धृतश्च रूक्षश्च न विरेच्या विजानता ॥ ६ ॥

---

१ गरमित्यपिपाठः । २ स्नेहाभ्यंगमकोपं च द्वितीयपाठः । ३ तैलमर्दनं विषूच्यादौ प्रशस्तं न कृत्रिमवमने । ४ शुष्कैरंडादिभिः पाचयेत् यद्वा स्नेहजैर्घृतदुग्धादिभिः । तथा स्वेदैः पिंडिटकादिभिः स्निग्धस्य स्वेदितस्य वमनं कार्यमिति विधिः । ५ पश्चाद्विरेको वांतस्येति सुश्रुतवचनं अस्यार्थः वांतं कृतं सम्यक्वमनं पश्चात्संसृष्टं पश्चात्स्यक्तवमनं पुनस्त्र्यहं संस्नेहितं पुनस्त्र्यहं उष्णं कृतस्वेदं पुनस्त्र्यहं लघुभुक्तं षोडशेह्नि षोडशो दिवसे विरेचयेत् ।

जीर्णज्वरी गरव्यासो वात्तरक्ती भगंदरी ॥
अर्शःपांडूदरग्रंथीहृद्रोगारुचिपीडिताः ॥ ७ ॥
योनिरोगप्रमेहार्ता गुल्मप्लीहव्रणार्दिताः ॥
विद्रधिच्छर्दिविस्फोटविसूचीकुष्ठसंयुताः ॥ ८ ॥
कर्णनासाशिरोवक्त्रगुदमेहामयान्विताः ॥
प्लीहशोफाक्षिरोगार्ताः कृमिक्षारानिलार्दिताः ॥ ९ ॥
शूलिनो मूत्रघातार्ता विरेकार्हा नरा मताः ॥
वहुपित्तो मृदुः प्रोक्तो वहुश्लेष्मा च मध्यमः ॥ १० ॥
वहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ॥
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे तु मध्यमा ॥ ११ ॥
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः ॥
मृदुर्द्राक्षापयश्चारुतैलैरपि विरिच्यते ॥ १२ ॥
मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते ॥
क्रूरस्नुक्पयसाहेमक्षीरीदंतीफलादिभिः ॥ १३ ॥
मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफांतका ॥
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः ॥ १४ ॥
द्विपलं श्रेष्ठमाख्यातं मध्यमं तु पलं भवेत् ॥
पलार्धं च कषायाणां कनीयस्तु विरेचनम् ॥ १५ ॥
कल्कमोदकचूर्णानां कर्षं मध्वाज्यलेहतः ॥
कर्षद्वयं पलं वापि देयो रोगाद्यपेक्षया ॥ १६ ॥
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्वाथादिभिः पिबेत् ॥
त्रिफलाक्वाथगोमूत्रैः पिबेव्योषं कफार्दितः ॥ १७ ॥

---

१ कोष्ठः । २ एरण्डादितैलैः । ३ आदिशब्दात् इन्द्रवारुणित्रपुसेण्यादयः ।
४ त्रिंशद्वारमलोत्सर्गैः । ५ विचारणात् ६ पित्ताधिक्ये ।

त्रिवृत्सैंधवशुंठीनां चूर्णमम्लैः पिबेन्नरः ॥
वातार्दितो विरेकाय जांगलानां रसेन वा ॥ १८ ॥
एरंडतैलं त्रिफलाक्वाथेन द्विगुणेन वा ॥
युक्तं पीतं पयोभिर्वा न चिरेण विरिच्यते ॥ १९ ॥
त्रिवृता कौटजं वीजं पिप्पली विश्वभेषजम् ॥
समृद्वीकारसः क्षौद्रं वर्षाकाले विरेचनम् ॥ २० ॥
त्रिवृद्दुरालभोदीच्यशर्करामुस्तचंदनम् ॥
द्राक्षांवुना सयष्टयाह्वं शीतलं च घनात्यये ॥ २१ ॥
त्रिवृता जीरकं पाठा अजाजी सरलं वचा ॥
हेमक्षीरी च हेमंते चूर्णमुष्णांवुना पिबेत् ॥ २२ ॥
पिप्पली नागरं सिंधुः श्यामा त्रिवृतया सह ॥
लिहेत्क्षौद्रेण शिशिरे वसंते च विरेचनम् ॥ २३ ॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥
अभया मरिचं शुंठी विडंगामलकानि च ॥२४॥
पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च ॥
एतानि समभागानि दंती च त्रिगुणा भवेत् ॥ २५ ॥
त्रिवृदष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ॥
मधुना मोदकान्कृत्वा कर्षमात्रप्रमाणतः ॥ २६ ॥
एकैकं भक्षयेत्प्रातः शीतं चानुपिबेज्जलम् ॥
तावद्विरिच्यते जंतुर्यावदुष्णं न सेवते ॥ २७ ॥
यानाहारविहारेषु भवेन्निर्यंत्रणः सदा ॥

---

१ निंबुकादिभिः । २ दुग्धैः । ३ निसोत । ४ इंद्रयवम् । ५ धमासो । ६ नेत्रवाला । ७ शरदि । ८ जीरास्याह । ९ चीड । १० गोरू । ११ पिंपायसो । १२ तजपत्रज । १३ केचिदित्यादीन्नुर्गाना-गयुक्तानित्याहुः । १४ निर्भयः ।

विपमज्वरमंदाग्निपांडुकासभगंदरान् ॥ २८॥
वातामकुष्ठगुल्माशोंगलगंडभ्रमोदरान् ॥
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ॥ २९ ॥
वातरोगांस्तथाध्मानं मूत्रकृच्छ्राणि चाश्मरीम् ॥
पृष्ठपार्श्वरुजं जानुजंघोदररुजं जयेत् ॥ ३० ॥
सततं शीलनादेषः पलितानि विनाशयेत् ॥
अभया मोदका ह्येते रसायनमनुत्तमम्॥ ३१ ॥
इत्यभयामोदकः ॥
मृद्वीका कटुरोहिणी जलधरः शंपाकमज्जा शिवा
कृष्णा मूलपटोलिके त्रिवृदिलावृश्चीयपत्रं समम् ॥
संक्वाथ्याशु निपीत एष तु गणः संरेचयेदाश्वयं
तांबूलाशिनमग्निसेविनमिलागेहस्थितं मानवम् ॥३२॥
पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी ॥
सुगंधि किंचिदाघ्राय तांबूलं शीलयेद्वरम् ॥ ३३ ॥
निवातस्थो न वेगांश्च धारयेन्न स्वपेत्तथा ॥
शीतांबु न स्पृशेत्क्वाऽपि कोष्णं नीरं पिबेन्मुहुः॥ ३४ ॥
यत्लासौषधपित्तानि वारि वांते यथा व्रजेत् ॥
रेकात्तथा मलं पित्तं भेषजं च कफो व्रजेत् ॥ ३५ ॥
दुर्विरिक्तस्य नाभेस्तु स्तब्धत्वं कुक्षिशूलता ॥
पुरीषवातसंगं च कंडूमण्डलगौरवम् ॥ ३६ ॥
विदाहोरुचिराध्मानं भ्रमश्छर्दिश्च जायते ॥ ३७ ॥
तं पुनः पाचनैः स्नेहैः पक्त्वा संस्नेह्य रेचयेत ॥

---

१ या रसायनवरा॰ स्मृताः पाठ॰ । २ कुटकी । ३ अमलतास । ४ इलायची । ५ तांबूलभक्षिण । ६ अग्नितापनं । ७ वांतिरेचितम् । ८ आरग्वधादिभिः । ९ घृतपानाद्यैः । १० आमे । ११ स्नेहनकृत्वा ।

तेनास्योपद्रवा यांति दीप्ताग्नेर्लघुता भवेत् ॥ ३८ ॥
विरेकस्यातियोगेन मूर्छाभ्रंशो गुदस्य च ॥
शूलं कफातियोगः स्यान्मांसधावनसंनिभम् ॥ ३९ ॥
मेदोनिभं जलाभासं रक्तं चापि विरिच्यते ॥
तस्य शीतांबुभिः सिक्त्वा शरीरं तंडुलांबुभिः ॥ ४० ॥
मधुमिश्रैस्तथोशीरैः कारयेद्वमनं मृदु ॥ ४१ ॥
सहकारत्वचः कल्को दध्ना सौवीरकेण वा ॥
पिष्टो नाभिप्रलेपेन हंत्यतीसारमुल्बणम् ॥४२॥
केचिद्विरेकातिरेके ग्रहणार्थं पथ्यमाहुः।
अजाक्षीरं रसं वापि वैष्किरं हारिणं तथा ॥
शालिभिः षष्टिभिः स्वल्पं मसूरैर्वापि भोजयेत् ॥ ४३ ॥
शीतैः संग्राहिभिर्द्रव्यैः कुर्यात्संग्रहणं भिषक् ॥
लाघवे मनसस्तुष्टावनुलोमं गतेनिले ॥ ४४ ॥
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि ॥
इंद्रियाणां बलं बुद्धेः प्रसादो वह्निदीप्तिता ॥ ४५ ॥
धातुस्थैर्यं बलस्थैर्यं भवेद्रेचनसेवनात् ॥
प्रवातसेवां शीतांबु स्नेहाभ्यंगमजीर्णताम् ॥ ४६ ॥
व्यायामं मैथुनं चैव न सेवेत विरेचितः ॥
शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत्कृताम् ॥
जंघालविष्किराणां वा रसैः शाल्योदनं हितम् ॥ ४७ ॥
इति शार्ङ्गधरात् ॥
शंभोर्बीजं सटंकं बलिमरिचयुतं शृंगवेरं च तुल्यं

---

१ आधिक्येन । २ आम्रत्वचः । ३ पाययेत् । ४ कुक्कुटाद्यमांसं रस वा । ५ सूक्ष्मं । ६ देहस्य सति । ७ स्वमार्गं प्राप्ते सति । ८ एरंडशुंठीधान्यजातं ९ नेत्रादीनां । १० जांगलकुक्कुटादीनां । ११ पारदं । १२ गंधकः । १३ सोंठ

योज्यं नैकुंभबीजं शिखिगणवलिनं मर्दितं याममेकं।
भुक्तं गुंजाद्विमात्रं शिशिरजलयुतं त्यक्ततप्तंसमुच्चै-
रिच्छाभेदी रसोयं प्रबलमलहरः सर्वरोगैकहर्ता ॥ ४८

इति सारसंग्रहात् ॥

"व्योपवेरैलामुस्तविडंगं पत्रमखिलसममत्रलवंगम्॥
सर्वेभ्यो द्विस्त्रिवृताकंदं प्रबलमलहरमुष्णकबंधम् ॥
शिवा कृष्णामूलं त्रिकटुकमजाजी जलधर-
त्रिवृद्धात्रीभूमीतरुपटुविडंगामरसुमम् ॥
दलंकुष्ठंहिंगुर्वेलनइतिसांपिण्यमृदुलं
जलैरावेग्युंतैर्मलहरमिदंसूष्णपयसा ॥"
जैपालेन समं सूतव्योपटंकणगंधकम् ॥
नाराचः स्याद्रसो मापमात्रः सर्पिःसितायुतः ॥ ४९ ॥
हंति संग्रहमानाहमामशूलं नवज्वरम् ॥
वेलाज्वरं विरेकेण शीतलांबुनिषेवणात् ॥ ५० ॥
इति नाराचो रसः रसरत्नप्रदीपात् ।
शुंठी तीक्ष्णरसेंद्रटंकणवलिप्रोक्तं समं तन्निधा ॥
कुंभीबीजयुतं विमर्द्य सभवेदिच्छाविभेदी रसः ॥ ५१ ॥
वल्लः शर्करयाऽधिकृपचुलुकं पुंसः सुखं रेचये-
न्निःशेषमलदोषमेव विनिहंत्युच्चैर्यथेमं हरिः ॥ ५२ ॥
इतिश्रीयोगतरंगिण्यां विरेकविधिर्नाम सप्तमस्तरंगः ॥

अथ वस्तिविधिः ॥

वस्तिर्द्विधानुवासाख्यो निरूहश्च ततः परम् ॥

---

१ जमालगोटा । २ उष्णजलं न पिवेत् । ३ त्रिकटु । ४ पवन । ५ अथवा एक नाम । ६ उष्णजल । ७ जीरे । ८ भुम्यामले । ९ लवंग १० पवन । ११ चित्रक । १२ जेचुलवीयेन्द्रलभामें । १३ मिरच । १४ गन्धक । १५ जमालगोटा ।

ः स्नेहैर्दीयते स स्यादनुवासननामकः ॥ १ ॥
कषायक्षीरतैलैर्वा निरूहः स निगद्यते ॥
बस्तिभिर्दीयते यस्मात्तस्माद्बस्तिरिति स्मृता ॥ २ ॥
मृगाऽजशूकरगवां महिषस्यापि वा भवेत् ॥
मूत्रकोशस्तु बस्तिः स्यादलाभे चान्यचर्मजः ॥ ३ ॥
नेत्रं कार्यं सुवर्णादि धातुमृद्वृक्षवेणुभिः ॥
नलै दंतैर्विषाणाग्रैर्मणिभिर्वा विधीयते ॥ ४ ॥
आतुरांगुष्ठमानेन मूले स्थूलं विधीयते ॥
कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम् ॥ ५ ॥
मुद्गच्छिद्रयुतं वक्रे गोपुच्छसदृशं दृढम् ॥
षडंगुलमितं तच्च किंवा स्याद्द्वादशांगुलम् ॥ ६ ॥
योजयेत्तत्र बस्तिं च बंधद्वयविधानतः ॥
उत्तमस्य पलैः षड्भिर्मध्यमस्य पलैस्त्रिभिः ॥ ७ ॥
पलेनार्धेन हीनस्य युक्ता मात्राऽनुवासने ॥
भोजयित्वा यथाशास्त्रं कृतचंक्रमणं ततः ॥ ८ ॥
उत्सृष्टानिलविण्मूत्रं योजयेत्स्नेहबस्तिना ॥
सुप्तस्य वामपार्श्वे वा वामजंघाप्रसारिणः ॥ ९ ॥
आकुंचितान्यजंघस्य नेत्रं स्निग्धे गुदे न्यसेत् ॥
वामेन पाणिना बस्तिकंठमालंब्य धीरधीः ॥ १० ॥

---

१ यस्मात्वस्तिभिरडकोशाद्यैः दीयतेगुददेशेतस्मात्वस्तिरितिस्मृत। २ गुदप्रवेशनलिका। २ रूप। ३ नरसल। ४ हस्तिदंतैः। ५ सूर्यकांतादिभिः। ६ एकवर्षादारभ्ययावत्षड्वर्षं तावत्षडंगुलमानं नेत्रंभवति। ततः षड्वर्षात् यावत् द्वादशवर्षं स्यात् तावत् अष्टमित अष्टांगुलप्रमाण नेत्र स्यात् ततः पर द्वादशवर्षानंतरं द्वादशभिः अंगुलैर्नेत्रं ईप्सितं प्राप्यतां। ७ उत्तमबलपुरुषस्य। ८ सार्धपलेन। ९ अतिस्निग्ध। १० इतस्ततश्चालितं। ११ बस्तिमुख। १२ रुद्ध्वा।

वस्तिं संपीडयेत्पश्चात्मध्यवेगोन्यपाणिना ॥
जंभाकासक्षवादींश्च वस्तिकाले न कारयेत् ॥ ११ ॥
त्रिंशन्मात्रामितः कालः प्रोक्तो वस्तेस्तु पीडने ॥
जाते विधाने तु ततः कुर्यान्निद्रां यथासुखम् ॥ १२ ॥
सतैलः सपुरीपश्च स्नेहः प्रत्येति यस्य तु ॥
उपद्रवं विना चैव स सम्यगनुवासितः ॥ १३ ॥
अनेन विधिना देयाः सप्त वाष्टौ नवापि वा ॥
अनायाते त्वहोरात्रे स्नेहं संशोधनैर्हरेत् ॥ १४ ॥
अतिसंक्षेपतः प्रोक्तो वस्तिरेषाऽनुवासनः ॥
इत्यनुवासनवस्तिः । अथ निरूहवस्तिः ॥
निरूहस्यापरं नामप्रोक्तमास्थापनं बुधैः ॥
स्वस्थानस्थापनादोपधातूनां स्थापनं मतम् ॥ १५ ॥
निरूहस्य प्रमाणं तु प्रस्थं पादोत्तरं मतम् ॥
मध्यमं प्रस्थमुद्दिष्टं हीनं च कुडवास्त्रयः ॥ १६ ॥
अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली ॥
नानुवास्यस्तु कुष्ठी वै मेही स्थूली तथोदरी ॥ १७ ॥
न स्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्युताः ॥
शोकमूर्च्छारुचिभयाश्वासकासक्षयातुराः ॥ १८ ॥
अतिस्निग्धः क्लिष्टदोपः क्षतोरस्कः कृशस्तथा ॥
आध्मानच्छर्दिहिक्कार्शःकासश्वासप्रपीडितः ॥ १९ ॥
गुदे शोफातिसारार्तो विसूचीकुष्ठसंयुतः ॥
गर्भिणी मधुमेहीचनास्थाप्यश्च जलोदरी ॥ २० ॥

१ प्रवेशयेत् । २ निश्चलपुमान् । ३ दक्षिणहस्तेन । ४ जानुमंडमायेष्टचतुर्थांशच्छोटिकयायुत । एवमात्राभिर्वेदेशमर्यैर्बस्तिनिश्चयः इत्युक्त
५ 'सप्त चाष्टौ च वस्तयः' इति वा पाठः । ६ वरणाधिक्यम् ।

वातव्याधावुदावर्ते वातासृग्विषमज्वरे ॥
मूर्छातृष्णोदरानाहमूत्रकृच्छ्राश्मरीषु च ॥ २१ ॥
वृद्ध्यसृग्दरमंदाग्निप्रमेहेषुनिरूहणम् ॥

मगधामधुकाभयविल्ववचा-
मिसिपुष्करमूलसटीशिखिभिः ॥
मदनामरदारुयुतैर्विपचे-
त्पयसागुदवस्तिषुतैलमिदम् ॥ २२ ॥

गुडतितिडिकाकुडवस्तुभवेदपिचात्रमूत्रकुडवद्वितयम् ॥
मिसिरामठराठकसिंधुयुतंनृनिरूहणंहिविहितंमुनिभिः॥

इतिदिङ्मात्रोनिरूहवस्तिः ॥

अतः परं प्रवक्ष्यामिवस्तिमुत्तरसंज्ञितम्॥
द्वादशांगुलमानेन नेत्रं वा समकर्णिकम् ॥ २४ ॥
मालतीपुष्पवृंताभं छिद्रं सर्षपनिर्गमम् ॥
पंचविंशतिवर्षाणामधोमात्रा द्विकार्षिकी ॥ २५ ॥
तदूर्ध्वं पलमात्रा हि स्नेहस्यापि भिषग्वरैः॥
स्थितस्य जानुमात्रे च पीठेऽन्विष्य शलाकया ॥ २६ ॥
स्निग्धयामेढ्रमार्गे च ततो नेत्रं नियोजयेत् ॥
अनुवासक्रमः सर्वोऽप्यन्यो वापि निवेदितः ॥ २७ ॥
स्त्रीणांदशांगुलं नेत्रं स्थूलं प्रोक्तं कनिष्ठया ॥
मुद्गच्छिद्राननं योज्यं योन्यंतश्चतुरंगुलम् ॥
द्व्यंगुलं मूत्रमार्गे तु सूक्ष्मं नेत्रं नियोजयेत् ॥
मूत्रकृच्छ्रविकारेषु बालानामेकमंगुलम् ॥ २८ ॥

---

१ मद्दुया। २ गोमुत्र। ३ हिंग। ४ मदनफल। ५ नलिकालक्षणम्। ६ मध्येकृतकर्णिक कमलपत्रकर्णिकावन्मध्यमाग। ७ पर्चविंशतेरूर्द्ध्वस्नेहस्यपल०। ८ छिद्रकृत्वा। ९ निरूह.। १० मेढ्रे।

स्वेदावरोधः संतापः सर्वांगग्रहणं तथा ॥
युगपद्यत्र रोगे तु स ज्वरः परिकीर्तितः ॥ १५ ॥
इति सामान्यज्वरलक्षणम्॥अथ वातज्वरलक्षणम्॥
वेपथुर्विषमो वेगः कंठौष्ठमुखशोषणम् ॥
निद्रानाशः क्षवस्तंभो गात्राणां रौक्ष्यमेव च ॥ १६ ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढविट्कता ॥
शूलाध्माने जृंभणं च भवंत्यनिलजे ज्वरे ॥ १७ ॥
अथ पित्तज्वरलक्षणम् ॥
वेगस्तीक्ष्णोतिसारश्च निद्राल्पत्वं तथा वमिः ॥
कंठोष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ १८ ॥
प्रलापो वक्त्रकटुता मूर्छा दाहो मदस्तृषा ॥
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥ १९ ॥
अथ श्लेष्मज्वरलक्षणम् ॥
स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ॥
शुक्लमूत्रपुरीषत्वं स्तंभस्तृप्तिस्तथैव च ॥ २० ॥
गौरवं शीतमुत्क्लेदो रोमहर्षोतिनिद्रता ॥
अंगेषु पिडिकाः शीताः प्रसेकश्छर्दितंद्रिके ॥ २१ ॥
कंडूप्रलापउष्णाभिलाषिता वह्निमार्दवम् ॥
प्रतिश्यायोरुचिः कासः कफजेक्ष्णोश्च शुक्लता ॥ २२ ॥
इति श्लेष्मज्वरलक्षणम् ॥
अथ वातपित्तज्वरलक्षणम् ॥
तृष्णा मूर्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ॥
कंठास्यशोषो वमथू रोमहर्षोरुचिस्तमः॥
पर्वभेदश्च जृंभा च वातपित्तज्वराकृतिः ॥ २३ ॥

---
१ स्विद्यते अनेन इति स्वेदः अग्निस्तस्यावरोधः । २ क्रमः ।

छर्दिस्तृष्णा च मूर्च्छा च तथा पानात्ययादयः ॥
दाहाख्यश्च तथोन्मादो ह्यपस्मारोनिलामयः ॥ ३ ॥
वातरक्तमुरुस्तंभमामवातोथ शूलरुक् ॥
पक्तिजं शूलमानाहमुदावर्तोथ गुल्मरुक् ॥ ४ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाश्मरी ॥
प्रमेहो मधुमेहश्च पिडकाश्च प्रमेहजाः ॥ ५ ॥
मेदोदोषोदरं शोथो वृद्धिश्च गलगंडकः ॥
गंडमालापची ग्रंथी ह्यर्बुदं श्लीपदं तथा ॥ ६ ॥
विद्रधी व्रणशोथौ च द्वौ व्रणौ भग्नन्नाडिकौ ॥
भगंदरोपदंशौ च शूकदोषस्त्वगामयः ॥ ७ ॥
शीतपित्तमुदर्दश्चोत्कोठकश्चाम्लपित्तकम् ॥
विसर्पश्च सविस्फोटस्तथैव च मसूरिका ॥ ८ ॥
क्षुद्रास्यकर्णनासाक्षिशिरस्त्रीबालकामयाः ॥
विषं चेत्ययमुद्देशः संग्रहेस्मिन्प्रकीर्तितः ॥ ९ ॥
तत्र क्रमप्राप्तस्य प्रथमं ज्वरस्य लक्षणम् ॥
देहेंद्रियमनस्तापी सर्वरोगाग्रजो वली ॥ १० ॥
ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा ॥
दक्षापमानसंक्रुद्धरुद्रनिश्वाससंभवः ॥ ११ ॥
ज्वरोष्टधा पृथग्द्वंद्वसंघातागंतुजः स्मृतः ॥
मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः ॥ १२ ॥
वहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥
श्रमोरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ॥ १३ ॥
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥
जृंभांगमर्दौ गुरुता रोमहर्षोरुचिस्तमः ॥ १४ ॥
अप्रहर्षश्च शीतं च भवंत्युत्पत्स्यति ज्वरे ॥

कृशत्वं नातिगात्राणां सततं कंठकूजनम् ॥ ३३ ॥
कोठानां श्यामरक्तानां मंडलानां च दर्शनम् ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ ३४ ॥

अथ भल्लूकमतात्रयोदश सन्निपाता लिख्यंते ॥

ह्युल्वणैकोल्वणैः षट् स्युर्हीनमध्याऽधिकैश्च षट् ॥
समैश्चैको विकारास्ते सन्निपातास्त्रयोदश ॥ ३५ ॥
तृष्णा तंद्रा भ्रमः कासस्तालुशोषो ज्वरोऽरुचिः ॥
आनाहो गात्रसंभेदः श्वासकंपश्रमभ्रमाः ॥ ३६ ॥
विद्गाख्ये सन्निपाते स्याल्लिंगं पित्तानिलोल्वणे ॥
संभेदो दक्षिणे पार्श्वे ह्रदि शीर्षे गलग्रहः ॥ ३७ ॥
दाहोंतःशीतता वाह्ये निष्ठीवः कफपित्तयोः ॥
हिक्का प्रमीलकः श्वासो निद्रा कंठप्रतापकः ॥ ३८ ॥
तृष्णा पुरीषसंभेदो वदने तिक्ततारुचिः ॥
कफपित्तात्मके चैतल्लक्षणं भल्लसंज्ञके ॥ ३९ ॥
क्षुण्णाशो जठरे दाहः कटिवस्त्योश्च दूयनम् ॥
शिरोगौरवमालस्यं निद्रा शीतज्वरो रुजा ॥ ४० ॥
मन्यास्तंभः प्रवांतिश्च तृष्णायाश्च विनिग्रहः ॥
सन्निपाते शर्कराख्ये कफवातोल्वणे भवेत् ॥ ४१ ॥
मूर्छाग्लानिर्ज्वरो हिक्का तृष्णा दाहो वलक्षयः ॥
उरःसादोऽतिनिद्रा च स्फुरणं गुदनिसृतिः ॥ ४२ ॥
पर्वशूलं प्रलापश्च विण्मूत्रं शोणितप्रभम् ॥
पिडिकोद्वेष्टनं शूलं वस्तिकर्षः प्ररोदनम् ॥ ४३ ॥

---

१. अर्द्धोन्मीलितलोचनः। २ कउसतापः। ३ वहुता। ४ भुकनहीलगे
५ रुधिरसमम्। ६ वस्तौ तोदः।

अथ वातश्लेष्मज्वरलक्षणम् ॥

स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ॥
संतापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ २४ ॥

इति वातश्लेष्मज्वरलक्षणम् ॥

अथ श्लेष्मपित्तज्वरलक्षणम् ॥

लिप्ततिक्तास्यता तंद्रा मोहः कासोरुचिस्तृषा ॥
मुहुर्दाहो मुहुः शैत्यं श्लेष्मपित्तज्वराकृतिः ॥ २५ ॥

इति श्लेष्मपित्तज्वरलक्षणम्

सामान्यतो विशेषात्तु जृंभात्यर्थं समीरणात् ॥
पित्तान्नयनयोर्दाहः कफान्नान्नाभिनंदनम् ॥ २६ ॥
सर्वलिंगसमावायः सर्वदोषप्रकोपजे ॥
रूपैरन्यतराभ्यां च संसृष्टं द्वंद्वजं विदुः ॥ २७ ॥

अथ संनिपातज्वरलक्षणम् ॥

क्षणे दाहः क्षणे शीतमस्थिसंधिशिरोरुजा ॥
सस्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ २८ ॥
सस्वनौ सरुजौ कर्णौ कंठः शूकैरिवावृतः ॥
तंद्रा मोहः प्रलापश्च कासः श्वासो रुचिर्भ्रमः ॥ २९ ॥
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥
सदा वा नैव वा निद्रा महास्वेदोथ नैव वा ॥ ३० ॥
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्तांगता परम् ॥ ३१ ॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥
शिरसोलुंठनं तृष्णा निद्रानाशो हृदि व्यथा ॥ ३२ ॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥

ऽयोलाकृतिः स विज्ञेयस्त्र्यहादर्वाङ्न सिध्यति॥ ५५॥
मध्यक्षीणाधिका यत्र कुर्युर्वातादयः क्रमात्॥
स्वंस्वं रूपं स्वशक्त्या च जिह्वां स्तब्धां सुकर्कशाम्॥५६
कंठकूजनमालस्यं मुखमालक्तकोपमम्॥
शूकपूर्णगलत्वं च शुष्ककंठोष्ठतालुकः॥ ५७॥
अंतर्दाहं गुदभ्रंशं वाग्भ्रंशं दृष्टिनिग्रहम्॥
सरक्तकफनिष्ठीवं कृच्छ्रात्स्तोकं मुहुर्मुहुः॥ ५८॥
प्रमीलश्वासकासानां प्रत्यहं परिवर्धनम्॥
अनिष्टेच्छा मनोग्लानिः पार्श्वे बाणहतोपमे॥ ५९॥
कफस्याकृष्यमाणस्य हृदयादप्रवर्तनम्॥
पार्श्वघातं तथा कांडैस्तुद्यते भिद्यते भृशम्॥ ६०॥
एष कर्कटको नाम सन्निपातः सुदारुणः॥
वृद्धमध्यमहीनास्तु कुर्युर्वातादयः क्रमात्॥ ६१॥
एकपक्षाभिघातं च यत्र लिंगं स्वकंस्वकम्॥
कंपमूर्छाभ्रमायासविलापारतिमोहनम्॥ ६२॥
संमोहक इति ख्यातः सन्निपातोतिकष्टदः॥
हीनप्रवृद्धमध्याख्या यत्र वातादयः क्रमात्॥ ६३॥
कुर्वंत्यतोनेकगदं स्वंस्वं लिंगं च शक्तितः॥
कफपित्तांशजांस्तेभ्यो निर्गमः स्फोटसंभवः॥ ६४॥
सर्वस्रोतःप्रपाकश्च संग्रामाख्ये ज्वरे मतः॥
प्रवृद्धहीनमध्यस्था यत्र वातादयःक्रमात्॥ ६५॥
स्वंस्वं लिंगं प्रकुर्वंति विलापायासकंपनम्॥
मन्यास्तंभं च मृत्युं च मूर्छामोहारतिभ्रमम्॥ ६६॥
सन्निपातः सविज्ञेयस्तज्ज्ञैः क्रकचसंज्ञितः॥

---

१ नामा। २महाज्वर। ३पुंसः। ४बाणैः। ५'विलासे' त्यपि पाठः। ६ नामा।

दाहः सर्वांगसंभेदो दर्शनस्य च निग्रहः ॥
लिंगं विस्फुरकाख्ये तु सन्निपातेनिलोल्वणे ॥ ४४ ॥
बहिरंतर्ज्वरो दाहः शीतयोगात्कफानिलौ ॥
कुरुतः कुपितौ श्वासकासहिक्काप्रमीलकान् ॥ ४५ ॥
पर्वभेदं विसूचीं च प्रलापं गौरवं क्रमम् ॥
नाभिपार्श्वे रुजा तस्य छिन्नः श्वासः प्रवर्तते ॥ ४६
स्रोतोभ्यः शोणितावृत्तिः शूलः श्वासस्तृपा भृशम् ॥
स्यादहोरात्रजीवित्वं पित्ताढ्ये शीघ्रकारिणि ॥ ४७ ॥
तंद्रा शीतज्वरो दाहो हृद्ग्रहो मधुरास्यता ॥
अरुचिर्गौरवालस्ये श्लेष्मनिष्ठीवनं भृशम् ॥ ४८ ॥
तृप्तिर्मूर्छा वमिस्तृष्णा दृष्टिवाक्छ्रोत्रनिग्रहः ॥
कफस्य निग्रहात्पित्तं कुर्यात्सोपद्रवं ज्वरम् ॥ ४९ ॥
पित्तस्य निग्रहात्क्रुद्धो मेदोमज्जास्थितोनिलः ॥
हृद्भेदं बहिरायासं कृत्वा हंत्युपवासतः ॥ ५० ॥
अन्न चेत्स्नाति भुंक्ते वा त्रिरात्रं नैव जीवति ॥
भवेत्फंफणके रूपं सन्निपाते कफोल्वणे ॥ ५१ ॥
मध्यक्षीणाधिकाः कुर्युः पित्तवातकफाः क्रमात् ॥
मध्यं दाहं ज्वरं नित्यं स्वल्पशूलं विसंज्ञताम् ॥ ५२ ॥
मन्यायां हृदये कंठे मस्तके वदने रुजम् ॥
हिक्कांगगौरवं ग्लानिं वाक्संगं तनुसंगताम् ॥ ५३ ॥
प्रमीलं च कटीतोदं कासं श्वासं च जत्रुरुक् ॥
उत्पाद्य कर्णमूलं च शूलं शांतिं गता अपि ॥ ५४ ॥
कुर्वंति कर्णमूलाख्यं पिडिकां कर्णमूलजाम् ॥

१ नेत्रस्य । २ नाशः । ३ पुंस० । ४ रुधिरप्रवृत्तिः । ५ नाभि । ६ खेद । ७ लघनात् । ८ स्नान कुरुते ९ नाभि । १० मूर्छत्व ११ तंद्रा । १२ मकटीकृत्य ।

क्रमादसाध्यः खलु कृच्छ्रसाध्यः
सुखेन साध्यो मुनिभिः प्रदिष्टः ॥ ७७ ॥
त्रयः प्रकुपिता दोषा-ऊरःस्रोतोनुगामिनः ॥
आमावबद्धा ग्रथिता बुद्धींद्रियमनोगताः ॥ ७८ ॥
जनयंति महाघोरमभिन्यासं ज्वरं दृढम् ॥
तेन संजीयते रोगी गतसर्वेंद्रियक्रियः ॥ ७९ ॥
प्रत्याख्येयः स भूयिष्ठं कश्चिदेवात्र सिध्यति ॥
अभिचाराभिषंगाभ्यामभिघाताभिशापतः ॥ ८० ॥
आगंतुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥
श्यावास्यता विषकृते तथातीसार एव च ॥ ८१ ॥
भक्तारुचिः पिपासा च तोदश्च सह मूर्छया ॥
औषधीगंधजे मूर्छा शिरोरुग्वमथुस्तथा ॥ ८२ ॥
कामजे चित्तविभ्रंशस्तंद्रालस्यमभोजनम् ॥
भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥ ८३ ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥
भूताभिषंगादुद्वेगो हास्यरोदनकंपनम् ॥ ८४ ॥
कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः ॥
भूताभिषंगात्कुप्यंति भूतसामान्यलक्षणाः ॥ ८५ ॥
दोषोल्पो हितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ ८६ ॥
यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च ॥
वेगतश्चापि विषमः स ज्वरो विषमो मतः ॥ ८७ ॥
संततः सततोन्येद्युस्तृतीयकचतुर्थकौ ॥
संततो रसरक्तस्थः सततो रक्तधातुगः ॥ ८८ ॥
अन्येद्युष्कं प्रकुरुते दोषं पिशितधातुगः ॥

मध्यप्रवृद्धहीनाश्च यत्र वातादयः क्रमात् ॥ ६७ ॥
स्वंस्वं लिंगं प्रकुर्वंति स्तब्धदृष्टिश्च मानवः ॥
अंतःपाकं यकृत्प्लीहहृत्क्लोमांत्रोदरेषु च ॥ ६८ ॥
पूयस्रावं गुदास्याभ्यां शीर्णदंतगतिर्नृणाम् ॥
मर्मांतरहतस्येव शयनं च विशेषतः ॥ ६९ ॥
पाकलाख्यः सविज्ञेयो सन्निपातोतिदारुणः ॥
वृद्धा वातादयो यत्र स्वैःस्वैर्लिंगैः समन्विताः ॥ ७० ॥
उच्छ्वासपरतां कुर्युर्मूकतां स्तब्धतां दृशः ॥
आस्यदंतश्रुतेर्नाशं स्तब्धांगत्वं विसंज्ञताम् ॥ ७१ ॥
जीवनं च त्र्यहेर्तीते स ज्ञेयः कूटपालकः ॥
कूटपालकिनं दृष्ट्वा व्योहरंत्यल्पबुद्धयः ॥
गृहभूतपिशाचाद्यैर्विषाद्यैर्वापि वीक्षितम् ॥ ७२ ॥

इति त्रयोदश सन्निपाताः ॥

दोषे प्रवृद्धे नष्टेग्नौ सर्वसंपूर्णलक्षण. ॥
सन्निपातज्वरोसाध्यः कृच्छ्रसाध्यस्ततोन्यथा ॥ ७३ ॥
सप्तमे दिवसे प्राप्ते दशमे द्वादशेपि वा ॥
पुनर्घोरतरो भूत्वा प्रशमं याति हंति वा ॥ ७४ ॥
पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् ॥
हंति विमुंचति पुरुषं त्रिदोषजो धातुमलपाकात् ॥७५॥
सप्तमी द्विगुणा यावन्नवम्येकादशी तथा ॥
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ ७६ ॥

ज्वरस्य पूर्वं ज्वरमध्यतो वा
ज्वरांततो वा श्रुतिमूलशोथः॥

१ ताल्वोः । २ गर्हित । ३ ऊर्ध्वश्वासम् । ४ नवमा ५ कथयति ।

हिक्काश्वासतृषायुक्तो मूढो विभ्रांतलोचनः ॥
सततोच्छ्वासहीनश्च म्रियंते ज्वरपीडितः ॥ १०२ ॥
देहोलघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्टवमव्यथत्वम् ॥
स्वेदः क्षवः प्रकृतियोगिमनोन्नलिप्सा
कंपश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ १०३ ॥

इति श्रीयोगतरंगिण्यां संक्षेपतो ज्वरनिदाननिरूपणं नामैकोनविंशस्तरंगः ॥ १९ ॥

अथ क्रमप्राप्तस्य प्रथमं ज्वरस्य चिकित्सा ॥

ज्वरे लंघनमेवादावुपदिष्टमृते ज्वरात् ॥
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥ १ ॥
आमाशयस्थो हत्वाग्निं सामोमार्गान्पिधापयन् ॥
विदधाति ज्वरं दोषस्तस्माल्लंघनमाचरेत् ॥ २ ॥
अनवस्थितदोषाग्नेर्लंघनं दोषपाचनम् ॥
ज्वरघ्नं दीपनं कांक्षारुचिलाघवकारकम् ॥ ३ ॥
बलाविरोधिना चैनं लंघनेनोपपादयेत् ॥
बलाधिष्ठानमारोग्यं यदर्थोयं क्रियाक्रमः ॥ ४ ॥

चक्रदत्तात् ॥

न लंघयेत्मारुतजे ज्वरे च
क्षयोद्भवे च क्षुधिते च जंतौ ॥
न गुर्विणीदुर्बलबालवृद्धान्
भीतांस्तृपार्त्तानपि सोर्ध्ववातान् ॥ ५ ॥

आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥

---

१ उद्गारसहितान् वा श्वासयुक्तान् ।

मेदोगतस्तृतीयाख्यमस्थिमज्जागतः पुनः ॥ ८९ ॥
कुर्याच्चातुर्थिकं घोरमंतकं रोगसंकरम् ॥
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥ ९० ॥
संतत्या यो विसर्गी स्यात्संततः स निगद्यते ॥
अहोरात्रे सततको द्वौ कालावनुवर्तते ॥ ९१ ॥
अन्येद्युष्कस्त्वहोरात्रमेककालं प्रवर्तते ॥
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥ ९२ ॥
इत्यादयस्तु विज्ञेया ज्वरा नानाविधा बुधैः ॥
श्वासोमूर्छारुचिच्छर्दिस्तृष्णातीसारविड्ग्रहाः॥ ९३॥
हिक्काकासांगभेदाश्च ज्वरस्योपद्रवा दश ॥
तंद्रा लाला प्रसेकश्च स्तब्धता क्षुत्प्रणाशता ॥ ९४ ॥
हृल्लासो मूत्रभूयस्त्वं सामज्वरलक्षणम् ॥
सामे न भेषजं देयं निरामे तद्विचारतः ॥ ९५ ॥
दाहः स्वेदो भ्रमस्तृष्णा कंपविड्भेदसंज्ञता ॥
कूजनं चातिवैगंध्यमाकृतिर्ज्वरमोक्षणे ॥ ९६ ॥
स्वेदो लघुत्वं शिरसः कंडूः पाको मुखस्य च ॥
क्षवथुश्चान्नकांक्षा च ज्वरमुक्तस्य लक्षणम् ॥ ९७ ॥
विगतक्लमसंतापमव्यथं विमलेंद्रियम् ॥
युक्तं प्रकृतिसत्वाभ्यां विद्यात्पुरुषमज्वरम् ॥ ९८ ॥
दोषप्रकृतिवैकृत्यं लघुता ज्वरदेहयोः ॥
इंद्रियाणां च वैमल्यं दोषपाकस्य लक्षणम् ॥ ९९ ॥
निद्रानाशो हृदि स्तंभो विष्टंभो गौरवारुचिः ॥
अरतिर्बलहानिश्च धातूनां पाकलक्षणम् ॥ १०० ॥
हतप्रभेंद्रियं क्षाममरोचकनिपीडितम् ॥
गंभीरं तीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ॥ १०१ ॥

धारापातेन विध्वंभि दुर्जरं पवनापहम् ॥ १६ ॥
शृतशीतं त्रिदोषघ्नं बाष्पातभावशीतलम् ॥
दिवाशृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ॥ १७ ॥
रात्रौ शृतं तु दिवसे गुरुत्वमधिगच्छति ॥
मूर्छापित्तोष्मदाहेषु विषोत्थे च मदात्यये ॥ १८ ॥
श्रमक्लमपरीते च मार्गोत्थे वमथौ तथा ॥
ऊर्ध्वगे रक्तपित्ते च शीतमंभः प्रशस्यते ॥ १९ ॥
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥
मंदाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥
व्रणे च मधुमेहे च पानीयं मंदमाचरेत् ॥ २० ॥

मदनपालात् ॥

पानीयं पानीयं शरदि वसंते च पानीयं ॥
नादेयं नादेयं शरदि वसंते च नादेयम् ॥ २१ ॥

स्फुटम् ॥

उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमा ॥
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥ २२ ॥
कर्षं चूर्णस्य कल्कस्य गुटिकानां च सर्वशः ॥
द्रवशुक्त्यावलेढव्यः पातव्यश्च चतुर्द्रवः ॥
मात्रामधुघृतादीनां क्वाथस्नेहेषु चूर्णितात् ॥ २३ ॥
द्विचत्वारिंशता माषैरष्टादशकवंथकैः ॥

---

१ गलेलात् पीमे। २ जलको धूम नलिकसे। ३ लघु। ४ जल। ५ पानार्हं भवति निर्मलत्वात् त्रिदोषघ्नत्वात् विशेषतः पित्तघ्नत्वाच। ६ रक्षणीय अल्प पेयम्। ७ नद्या भव। ८ अपि तु देय उक्त हि तत्रांतरे। वर्षावसंतसमये कोप वारि प्रशस्यते। अभः शरदि ताडाग नादेय ऋतुषुत्रिषु। नद्युद्भव ऋतुषु त्रिष्वपि हेमंतशिशिरग्रीष्मेषु देय॥ ९ न माषम्। १० पुस। ११ अर्द्धपल। १२ चूर्णिते इति चूर्णवदिति च पाठौ।

मध्यं द्वादशरात्रं तु पुराणमत उत्तरम् ॥ ६ ॥
ज्वरितं ज्वरमुक्तं वा दिनांते भोजयेल्लघु ॥
श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ॥ ७ ॥
वातजः सप्तरात्रेण दशरात्रेण पित्तजः ॥
श्लेष्मजो द्वादशाहेन ज्वरः पाकं प्रपद्यते ॥ ८ ॥
दोषाणामेव सा शक्तिर्लंघने या सहिष्णुता ॥
न हि दोषक्षये कश्चित्सहते लंघनं महत् ॥ ९ ॥
नवज्वरे दिवास्वापस्नानभोजनमैथुनम् ॥
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥ १० ॥
निर्वातभवनावासमुष्णवारिनिषेवणम् ॥
अभूरिजल्पं निःक्रोधकामशोकं च रोगिणम् ॥
कारयेत्सुखसंपत्त्यै शीघ्रं वैद्यो विचक्षणः ॥ ११ ॥
इति चक्रदत्तात् ॥
कफमेदोनिलामघ्नं दीपनं बस्तिशोधनम् ॥
कासश्वासज्वरहरं पथ्यमुष्णोदकं सदा ॥ १२ ॥
यत्क्वाथ्यमानं निर्वेगं निःफेनं निर्मलं भवेत् ॥
अर्द्धावशिष्टं भवति तदुष्णोदकमुच्यते ॥ १३ ॥
तत्पादहीनं पित्तघ्नमर्द्धहीनं च वातजित् ॥
कफघ्नं पादशेषं च पाचनं लघु दीपनम् ॥ १४ ॥
शारदं चार्धपादोनं पादहीनं च हैमनम् ॥
शिशिरे च वसंते च ग्रीष्मे चार्द्धावशेषितम् ॥ १५ ॥
विपरीते ऋतौ तद्वत्प्रावृष्यष्टावशेषितम् ॥
भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति ॥ १६ ॥
अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ॥

---

१ मध्याह्ने । २ अम्लदिनम् ।

पृथौ वातज्वरे सर्वलिंगे सप्तमवासरे ॥ ३३ ॥

इति वातज्वरे गुडूच्यादिः ।

शालिपर्णी वला द्राक्षा गुडूची सारिवा तथा ॥
आसां क्वाथं पिबेत्कोष्णं तीव्रवातज्वरच्छिदम् ॥ ३४ ॥

इति शालिपर्ण्यादिः ॥

किरातब्दामृतोदीच्यवृहतीद्वयगोक्षुरैः ॥
सस्थिराकलसीविश्वैः क्वाथो वातज्वरापहः ॥ ३५ ॥

इति किरातादिः ॥

'रसं विषं गंधकतालटंकणं
कटुत्रजैपालफलत्रिकं समम् ॥
विमर्द्य भृंगस्य रसेन कल्पिता
वटी वरा सर्वगदान्निहंति ॥ ३६ ॥
रोगे यदिष्टं त्वनुपानमात्रा
देया वटी तेन समा भिषग्भिः ॥
पाश्चात्यदेशागतयोगिनेय-
मुक्तानुयुक्तानुभवेन पश्चात् ॥ ३७ ॥
अश्वकंचुकीरसः" ॥

काश्मरीसारिवाद्राक्षात्रायमाणामृताभवः ॥
कषायः सगुडः पीतो वातज्वरविनाशनः ॥ ३८ ॥

इति काश्मर्यादिः । इति वातज्वरचिकित्सा । अथ पैत्ते ॥

कट्फलेंद्रयवारिष्टतिक्तामुस्तैः शृतं जलम् ॥
पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम् ॥ ३९ ॥

इति कट्फलादिः ॥

---

१ [illegible] । २ मोथा । ३ साठाशी । ४ पृष्टिपर्णी । ५ [illegible]

दुरालभापर्पटकप्रियंगु-
भूनिंबवासाकटुरोहिणीनाम् ॥
क्वाथं पिबेच्छर्करयावगाढं
तृष्णास्रपित्तज्वरदाहयुक्तः ॥ ४० ॥
योगशतात् ॥
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ॥
किं पुनर्यदि पूज्येत चंदनोशीरधान्यकैः ॥ ४१ ॥
वृंदात् ॥ इति पित्तज्वरचिकित्सा ॥ अथ श्लेष्मजे ॥
बीजपूरशिफापथ्यानागरग्रंथिकैः शृतम् ॥
सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ ४२ ॥
इति बीजपूरादिः ॥
भूनिंबनिंबपिप्पल्यः सटी शुंठी शतावरी ॥
गुडूची बृहती चेति क्वाथो हन्यात्कफज्वरम् ॥ ४३ ॥
इति भूनिंबादिः ॥
आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ॥
सर्वज्वरभयातंकभेदी दीपनपाचनः ॥ ४४ ॥
इत्यामलक्यादिः ॥
कट्फलं पौष्करं कृष्णा शृंगी च मधुना सह ॥
श्वासकासहरः श्रेष्ठो प्रोक्तो लेहकफांतकृत् ॥ ४५ ॥
इति चतुर्भद्रावलेहिका वृंदात् ॥
छिन्नोद्भवांबुधरधन्वयवासविश्वै-
र्दुःस्पर्शपर्पटकमेघकिराततिक्तैः ॥
मुस्ताटरूषकमहौषधधन्वयासैः

१ कुटकी । २ बिजोरेकी जड । ३ कोप । ४ कंटकारी । ५ मोथा । ६ अडूसा ।

क्राथं पिबेदनिलपित्तकफज्वरेषु ॥ ४६ ॥
पृथक्पृथक् त्रिभिश्चरणैः कथितैः क्राथैर्वातादिषु योगाः॥
अमृतारिष्टकचंदनपद्मकधानोद्भवः क्राथः ॥
ज्वरहृल्लासच्छर्दिस्तृष्णादाहारुचीर्हन्यात् ॥ ४७ ॥
सर्वज्वरे गुडच्यादिः योगशतात् ॥ इति श्लेष्मज्वरचिकित्सा ॥

अथ वातपित्तज्वरे ॥
पर्पटाब्दामृतोदीच्यकैरातैः साधितं जलम् ॥
पंचभद्रमिदं प्रोक्तं वातपित्तज्वरापहम् ॥ ४८ ॥
शार्ङ्गधरात् ॥
त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः ॥
शृतमंबु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ४९ ॥
वृंदात् ॥ अथ वातश्लेष्मज्वरे ॥
क्षुद्राशुंठीगुडूचीनां कषायः पौष्करस्य च ॥
कफवाताधिके पेयो ज्वरे वापि त्रिदोषजे ॥ ५० ॥
इति क्षुद्रादिः ॥
आरग्वधकणामूलमुस्तातिक्ताभयाकृतः ॥
क्राथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम् ॥ ५१ ॥
इत्यारोग्यपंचकम् ॥
अथ पित्तश्लेष्मजे ॥
अमृतारिष्टकटुकामुस्तेंद्रयवनागरैः ॥
पटोलचंदनाभ्यां च शृतं पिप्पलिचूर्णयुक् ॥
अमृताष्टकमेतत्तु पित्तश्लेष्मज्वरापहम् ॥ ५२ ॥
इत्यमृताष्टकं शार्ङ्गधरात् ॥

---

१ धान्योद्भव इत्यपिपाठ. । २ अमलतास ।

दुरालभापर्पटकप्रियंगु-
भूनिंबवासाकटुरोहिणीनाम् ॥
क्काथं पिबेच्छर्करयावगाढं
तृष्णास्रपित्तज्वरदाहयुक्तः ॥ ४० ॥
योगशतात् ॥
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ॥
किं पुनर्यदि पूज्येत चंदनोशीरधान्यकैः ॥ ४१ ॥
वृंदात् ॥ इति पित्तज्वरचिकित्सा ॥ अथ श्लेष्मजे ॥
वीजपूरशिफापथ्यानागरग्रंथिकैः शृतम् ॥
सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ ४२ ॥
इति वीजपूरादिः ॥
भूनिंबनिंबपिप्पल्यः सटी शुंठी शतावरी ॥
गुडूची बृहती चेति क्काथो हन्यात्कफज्वरम् ॥ ४३ ॥
इति भूनिंबादिः ॥
आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ॥
सर्वज्वरभयातंकभेदी दीपनपाचनः ॥ ४४ ॥
इत्यामलक्यादिः ॥

क्वाथं पिबेदनिलपित्तकफज्वरेषु ॥ ४६ ॥
पृथक्पृथक् त्रिभिश्चरणैः क्वथितैः क्वाथैर्वातादिषु योगाः॥
अमृतारिष्टकचंदनपद्मकधानोद्भवः क्वाथः ॥
ज्वरहृल्लासच्छर्दिस्तृष्णादाहारुचीर्हन्यात् ॥ ४७ ॥
सर्वज्वरे गुडूच्यादिः योगशतात् ॥ इति श्लेष्म-
ज्वरचिकित्सा ॥

अथ वातपित्तज्वरे ॥
पर्पटाब्दामृतोदीच्यकैरातैः साधितं जलम् ॥
पंचभद्रमिदं प्रोक्तं वातपित्तज्वरापहम् ॥ ४८ ॥
शार्ङ्गधरात् ॥
त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूपकैः ॥
शृतमंबु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ४९ ॥
वृंदात् ॥ अथ वातश्लेष्मज्वरे ॥
क्षुद्राशुंठीगुडूचीनां कषायः पौष्करस्य च ॥
कफवाताधिके पेयो ज्वरे वापि त्रिदोषजे ॥ ५० ॥
इति क्षुद्रादिः ॥
दार्व्यब्दुदार्तिकफलात्रिकैच क्षुद्रा[illegible]
क्वाथं विदध्याज्ज्वरसान्निपाते निश्चेतनेपुंसि विबोधनार्थम्
योगशतात् ॥
कट्फलं पौष्करं शृंगी व्योषं यासश्च कारवी ॥
श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥ ६६
एषावलेहिका हंति संनिपातं सुदारुणम् ॥
हिक्कां श्वासं च कासं च कंठरोगं च घुर्घुरम् ॥
एतयोऽन्यं कफोद्रेके चूर्णमार्द्रकजै रसैः ॥ ६७ ॥

---
१ देवदारु । २ गजपिप्पली । ३ कुटकी । ४

दुरालभापर्पटकप्रियंगु-
भूनिंबवासाकटुरोहिणीनाम् ॥
क्वाथं पिबेच्छर्करयावगाढं
तृष्णास्रपित्तज्वरदाहयुक्तः ॥ ४० ॥
योगशतात् ॥

एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ॥
किं पुनर्यदि पूज्येत चंदनोशीरधान्यकैः ॥ ४१ ॥
वृंदात् ॥ इति पित्तज्वरचिकित्सा ॥ अथ श्लेष्मजे ॥

बीजपूरशिफापथ्यानागरग्रंथिकैः शृतम् ॥
सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ ४२ ॥
इति बीजपूरादिः ॥

भूनिंबनिंबपिप्पल्यः सटी शुंठी शतावरी ॥
गुडूची बृहती चेति क्वाथो हन्यात्कफज्वरम् ॥ ४३ ॥
इति भूनिंबादिः ॥

आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ॥
सर्वज्वरभयातंकभेदी दीपनपाचनः ॥ ४४ ॥

भार्ग्यब्दकुस्तुंबुरुत्रिवृदातीविषया पुष्करत्रायमाणः
पाठाव्याघ्रीकलिंगैस्त्रिफलसटियुतैः कल्पितैस्तुल्यभागैः
क्वाथो द्वात्रिंशनामा त्रिकदशकमितान्सन्निपातान्निहंति
श्वासं शूलं च हिक्कां कसनगुदरुजाध्मानमन्यारुजश्च ॥
ऊरुस्तभांत्रवृद्धिं गलगदमरुतं सर्वसंधिग्रहार्तिं
हन्यादेकोपि सिंहो गजनिवहमिव प्रस्फुरद्दानधारम् ॥ ६०
इत्यारोग्यदर्पणतो द्वात्रिंशको भार्ग्यादिः ॥

१ नीम । २ मुलहेटी । ३ अरलू । ४ मोथा । ५ कुटकी । ६ इंद्रायण । ७ जवासा । ८ अरलू । ९ बिजोरे । १० त्रयोदशमितान् । ११ वातम् । १२ प्रच्युतमदधारम् ।

एतैरुद्धूलनं शस्तं त्रिरोषोत्थे ज्वरे नृणाम्
अतंस्यास्तरणं शस्तं सन्निपातभवे नृणाम् ॥ ७५ ॥
इति सारसंग्रहात् ॥
लंघनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ॥
अवलेहोंजनं चैव प्राक् प्रयोज्यं त्रिदोपजे ॥ ७६ ॥
खर्परभ्रष्टपटस्थितकांजिकसंसिक्तवालुकास्वेदः॥
शमयति वातकफामयमस्तकशूलांगभंगादीन् ॥ ७७ ॥
सैंधवं श्वेतमरिचं सर्पपाः कुष्ठमेव च ॥
वस्तमूत्रेण पिष्टानि नस्यात्संज्ञाकराणि च ॥ ७८ ॥
आर्द्रकस्य रसोपेतं सैंधवं सकटुत्रयम् ॥
आकंठं धारयेदास्ये निष्ठीवेच्च पुनःपुनः ॥ ७९ ॥
लीनोप्याकृष्यते श्लेष्मा लाघवं चास्य जायते ॥
शिरीषबीजगोमूत्रकृष्णामरिचसैंधवैः ॥ ८० ॥
अंजनं स्यात्प्रबोधाय सरसोनाशिलावचैः ॥
रसस्थे रससंशुद्धी रक्तस्थे रक्तमोक्षणम् ॥ ८१ ॥
मांसस्थे रेचनं शस्तं मेदस्थे चासहिष्णुता ॥
रेचनं वमनं स्वेदश्चास्थिस्थे स्वेदमर्दने ॥
मज्जाशुक्राश्रयं दृष्ट्वा तमसाध्यं ज्वरं वदेत् ॥ ८२ ॥
इति योगरत्नावल्याम् ॥
सिद्धार्थको वचा हिंगु करंजः सुरदारु च ॥
मंजिष्ठा त्रिफला श्वेता कंटभी त्वक्कटुत्रयम् ॥ ८३ ॥
प्रियंगुश्च शिरीपं च निशा दार्वी समांशतः ॥
अजामूत्रेण संपिष्टो गोमूत्रैर्वाथ चूर्णितः ॥

१ अरतिको त्रिगेना। २ कदाचित् इत्यर्थः। ३ लेहयन। ४ मनशिल। ५ लघनादिना। ६ कटेरी।

इत्यष्टांगावलेहिका ॥
दशमूली सटी शृंगी पौष्करं सदुरालभा ॥
शुंठी कटुजबीजं च पटोलं कटुरोहिणी ॥ ६८ ॥
अष्टादशांग इत्येष सन्निपातज्वरापहः ॥
काशहृद्ग्रहपार्श्वार्त्तिश्वासहिक्कावमीहरः ॥ ६९ ॥
इति दशमूलेष्वष्टादशांगः ॥
चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ॥
किराततिक्तादिगणः प्रयोज्यः
शुद्ध्यर्थिने वा त्रिवृताविमिश्रः ॥ ७० ॥
इति चतुर्दशांगः ॥
किरातं नागरं मुस्तं गुडूची चेत्ययं गणः ॥
वृंदात् ॥
भूनिंबकारवीतिक्तावचाकट्फलजं रजः ॥
उद्धूलनं त्रिदोषोत्थे स्वेदाभिष्यंदिनि ज्वरे ॥ ७१ ॥
मरिचं पिप्पली शुंठी पथ्या लोध्रं सपौष्करम् ॥
भूनिंबकटुकाकुष्ठं कारवींद्रयवा सटी ॥ ७२ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥
प्रस्वेदे कंठरोधे च संधिमर्दनमिष्यते ॥
एतदुद्धूलनं श्रेष्ठं सन्निपातहरं परम् ॥ ७३ ॥
स्वेदोद्गमे भ्रष्टकुलत्थचूर्णैरुद्धूलनं शस्तमिति ब्रुवंति ॥
चूर्णं शकृद्दोर्लवणस्य भांडं स्वेदापहं गुंठनमुत्तमं हि ७५
वृंदात् ॥
यवानिका वचा शुंठी पिप्पली कारवी तथा ॥

१ कटेरी। २ जवासा। ३ क्वाथः। ४ मुस्तमित्यपिपाठः। ५ जीर्णमित्यपिपाठः।

इति सारसंग्रहात् ॥
कुलत्थं कट्फलं शुंठी कारवी च समांशकैः ॥
सुखोष्णं लेपनं कार्यं कर्णमूले मुहुर्मुहुः ९३ ॥
बीजपूरकमूलत्वग्वह्निर्मंथस्तथैव च ॥
नागरं देवदारुश्च रास्ना वह्निश्च योजितः ॥
एभिः प्रलेपनं श्रेष्ठं गलशोथविनाशनम् ॥ ९४ ॥
इति वृंदात् ॥
शरपुंखाशिफातुंबीसकृष्णा विषमुष्टिभिः ॥
प्रलेपो वा हिडंबीभिः श्वयथौ कर्णमूलजे ॥ ९५ ॥
इति शार्ङ्गधरात् ॥
शुष्कां च स्फुटितां जिह्वां द्राक्षया मधुपिष्टया ॥
प्रलेपयेत्सघृतया सन्निपातज्वरे गदे ॥ ९६ ॥
यवकोलकुलत्थानां मुद्गमूलकशुंगयोः ॥
एकैकं मुष्टिमादाय पचेदष्टगुणे जले ॥ ९७ ॥
पंचमुष्टिक इत्येष वात्तपित्तकफापहः ॥
शस्यते गुल्मशूलेषु श्वासे कासे क्षये ज्वरे ॥ ॥९८
इति पंचमुष्टिकः ॥
सन्निपाते प्रकंपंतं विलपंतं च यो घृतम् ॥
भोजयेत्पाययेद्वापि स वैद्याख्यां कथं व्रजेत् ॥ ९९ ॥
सन्निपातेषु दाहार्तं यः सिंचेच्छीतवारिणा ॥
आतुरः स कथं जीवेद्भिषग्वा स कथं भवेत् ॥ १०० ॥
मृत्युना सह योद्धव्यं सान्निपातं चिकित्सता ॥
यस्तु तत्र भवेज्जेता स जेता यमसंगरे ॥ १०१ ॥

---

१ अरणि। २ पेषित इत्यपिपाठः। ३शरपोखाकी जड। ४ कुचला। ५ सारसंग्रहादपि।

सर्वज्वरं निहंत्याशु सिद्धार्थादिः प्रलेपतः ॥ ८४ ॥
इति सिद्धार्थकादिः ॥
रसविषमरिचमहेशप्रियफलभस्मैकभूचतुर्वसुभिः ॥
भागैर्मितसुद्धूलनमिदममितस्वेदशैत्यहरम् ॥ ८५ ॥
सारसंग्रहात् ॥
तप्तायोलांछनं पश्चात्तालुपूकं त्रिदोषजे ॥
रुद्राभिषेकभूदेवभोजनग्रहजाप्यतः ॥
मंत्ररक्षादिभिः कार्या सन्निपातप्रतिक्रिया ॥ ८६ ॥
अथ संधिगादीनां चिकित्सा ॥
सन्निपातज्वरस्यांते कर्णमूले सुदारुणः ॥
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥ ८७ ॥
न रक्तेन विना वृद्धिर्ज्वरे वा सन्निपातके ॥
दोषः प्रशममायाति क्वाथपाचनकादिभिः ॥ ८८ ॥
दोषे प्रशमितेप्यत्र रक्तं नैव विलीयते ॥
तेन संजायते शोथः कर्णमूले सुदारुणः ॥ ८९ ॥
तस्मात्तत्र प्रतीकारं कुर्याद्रक्तावसेचनैः ॥
जलौकालांबुशृंगैश्च ततः स्याल्लेपनं हितम् ॥ ९० ॥
यदा पाको भवेत्तत्र व्रणवत्क्षेपजं तदा ॥
कर्कटस्य च मांसेन स्वेदनं वंधनं तथा ॥
कर्णमूलभवे शोथे हितादपि हितं मतम् ॥ ९१ ॥
सिद्धार्थसैंधववचागृहधूमविश्वैः
पिष्टैर्जलेन निशया सहितं च सूक्ष्मम् ॥
लेपो हितो रुधिरनाशकरः प्रतीतः ॥
शोफव्रणस्य शमनः सरुजस्य कर्णे ॥ ९२ ॥

१ बिल्वभस्म। २ ब्रह्माडेषु। ३ निशा। ४ करकेण।

रक्तचंदनभूनिंबपटोलवृषपौष्करैः ॥
कटुकेंद्रयवारिष्टभार्गीपर्पटकैः समैः ॥
क्वाथं प्रातर्निषेवेत सर्वशीतज्वरच्छिदम् ॥ ११२ ॥
शार्ङ्गधरात् ॥

दार्वीदारुकलिंगलोहितलताशम्याकपाठासटी-
शौंडीवीरकिरातवारणकणात्रायंतिकापद्मकैः ॥
उग्राधान्यकनागराब्दसरलैः शृंगीबृंबुसिंहीशिवा-
व्याघ्रीपर्पटदर्भमूलकटुकानंतामृतापौष्करैः ॥ ११३ ॥
धातुस्थं विषमं त्रिदोषजनितं चैकाहिकं द्व्याहिकं
क्वाथो हंति तृतीयकं ज्वरमयं चातुर्थकं भूतजम् ॥११४
इत्यारोग्यदर्पणतो दार्व्यादिः ॥

निदग्धिकानागरिकामृतानां
क्वाथं पिबेन्मिश्रितपिप्पलीकम् ॥
जीर्णज्वरारोचककासशूल-
श्वासाग्निमांद्यार्दितपीनसेषु ॥ ११५ ॥
इति योगशतात् ॥

न शाम्यति ज्वरो यस्तु पक्षादूर्ध्वं शरीरिणाम् ॥
मंदवेगानुबंधश्च स ज्ञेयो जीर्णतां गतः ॥ ११६ ॥
कासजीर्णज्वरश्वासहृत्पांडुकृमिरोगहृत् ॥
जीर्णज्वरेग्निसादे च शस्यते गुडपिप्पली ॥ ११७ ॥

त्रिभिरथ परिवृद्धं पंचभिः सप्तभिर्वा
दशभिरथ विवृद्धं पिप्पलीवर्द्धमानः ॥
इति पिबति पुमान्यस्तस्य न श्वासकास-

---

१ इंद्रजो। २ मजीठ। ३ अमल। ४ पींपराखस। ५ गजपीपर कुंजरकणा इति पाठः। ६ वच। ७ सेहजनो। ८ कटेरी।

सन्निपातार्णवे मग्नं योऽभ्युद्धरति मानवम् ॥
कस्तेन न कृतो धर्मः कां च पूंजां न सोऽर्हति ॥ १०२॥

अथ विषमज्वरे ॥

अभिचाराभिशापोत्थौ ज्वरौ होमादिभिर्जयेत् ॥
दानस्वस्त्ययनातिथ्यैरुत्थानग्रहपीडजौ ॥ १०३ ॥
औषधीगंधविषजौ विषपित्तप्रसाधनैः ॥
जयेत्कषायैर्मतिमान्सर्वगंधकृतं ज्वरम् ॥ १०४ ॥
क्रोधजे पित्तजित्कार्या आर्यसद्वाक्यमेव च ॥
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥ १०५ ॥
हर्षणैश्च शमं यांति कामशोकभयज्वराः ॥
भूतविद्यासमुद्दिष्टैर्बंधावेशनताडनैः ॥
जयेद्भूताभिषंगोत्थं मनःशांत्यैव मानसम् ॥ ०१६ ॥

इति वृंदात् ॥

पटोलत्रिफलानिंबद्राक्षाशंम्याकवालकैः ॥
क्राथः सितामधुयुतो जयेदैकाहिकं ज्वरम् ॥ १०७ ॥
गुडूचीधान्यमुस्ताभिश्चंदनोशीरनागरैः॥
सितामधुयुतः क्राथस्तृतीयज्वरनाशनः ॥ १०८ ॥
देवदारुशिवावासाशालिपर्णीमहौषधैः ॥
धात्रीयुतैः शृतं शीतं दद्यान्मधुसितायुतम् ॥ १०९ ॥
चातुर्थिके ज्वरे श्वासे कासे मंदानले तथा ॥
मुस्ताक्षुद्रामृताशुंठीधात्रीक्राथः समाक्षिकः ॥ ११० ॥
पिप्पलीचूर्णयुक्सर्वविषमज्वरनाशनः ॥
क्षुद्राधान्यकशुंठीभिर्गुडूचीमुस्तपद्मकैः ॥ १११ ॥

---

१. देवतापराधः । २ प्रस्तारनैरित्यपिपाठः । ३ ज्वरेइतिशेषः, । क्रोधतः इति च पुस्तकान्तरे पाठः । ४ अमलतास ।

जीर्णज्वरे तथाजीर्णे समे वा विषमेऽपि वा ॥
सर्वज्वरं निहंत्याशु दावो वनमिवानलः ॥ १२६॥
इति सर्वज्वरारिः ॥
त्र्यूषणं पंचलवणं शतपुष्पा द्विजीरकम् ॥
क्षारत्रयं समांशेन चूर्णमेषां पलत्रयम् ॥ १२७ ॥
शुद्धं सूतं पलं चाभ्रं गंधकं च पलंपलम्॥
आर्द्रकस्य रसैः खल्वे दिनमेकं विमर्दयेत् ॥ १२८ ॥
वीरभद्रो रसः ख्यातो माषैकः सन्निपातजित् ॥
चित्रकार्द्रकसिंधूत्थमनुपानं जलैः सह ॥
पथ्यं क्षीरोदनं देयं द्विवारं च रसो हितः ॥ १२९ ॥
इति सन्निपातहरो वीरभद्राख्यो रसः ॥
ब्रह्मास्त्रमथ वक्ष्यामि सद्यः प्रत्ययकारकम् ॥
भस्म सूतं त्रिगंधं च तत्समं गरलं त्वहेः ॥ १३० ॥
त्रिभिः समं विषं योज्यं मरिचं सर्वतुल्यकम् ॥
वराहकेकिमाहिषपित्तैः सप्तविभावितम् ॥ ॥ १३१
लांगल्या देवदाल्या च ज्वालामुख्यार्द्रकद्रवैः ॥
एकविंशतिधा भाव्यं प्रत्येकं घर्मशोषितम् ॥१३२॥
द्विगुंजामात्रनस्येन मृतमुत्थापयेद्धुतम् ॥
दध्यन्नं सस्तितं पथ्यमुपचाराश्च शीतलाः ॥ १३३ ॥
सर्वोदरगदघ्नोयमसाध्यमपिसाधयेत् ॥
अस्थिशूलानि सर्वाणि नाशयत्येव सर्वथा ॥ १३४ ॥
इति ब्रह्मास्त्रो रसः॥

---

१ सोंफ। २ सज्जी,जवाखार, सुहागो। ३ विष्म्। ४ सूकरः
५ मोर। ६ कलिहारी ७ बंदाल। ८ अगनबुटी। ९ भक्त।

ज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ ११८ ॥
इति वृंदात् ॥
उर्णनाभिस्थजालेन कज्जलं ग्राहयेत्ततः ॥
अंजयेन्नेत्रयुगलं त्र्याहिकं तु ज्वरं जयेत् ॥ ११९ ॥
उलूकदक्षिणः पक्षः सितसूत्रेण वेष्टितः ॥
वंधितो वामकर्णे तु हरत्येकाहिकं ज्वरम् ॥ १२० ॥
भृंगराजजटा बद्धा कर्णे रात्रिज्वरापहा ॥
सर्वज्वरहरी श्वेतमंदारस्य च मूलिका ॥ १२१॥
तुरंगरिपुमूलं वा श्वेतं शीतज्वरापहम् ॥
विवस्रेणोद्धृता देवीमूलिका कर्णवंधनात् ॥
चातुर्थिकं ज्वरं हंति द्रोणपुष्पीरसोंजनात् ॥ १२२ ॥
ॐनमोभगवते रुद्राय नमः ॥
क्रोधेश्वराय नमो ज्योतिःपतंगाय नमोनमः ॥
तिडिरुद्रआज्ञापयति स्वाहा॥
अनेन सप्तजप्तैस्तु सर्षपैः सप्त ताडयेत् ॥
चातुर्थिकज्वरान्मुक्तो नरो भवति सर्वथा ॥ १२३ ॥
इत्यारोग्यदर्पणतः ॥
अथ रसमार्गेणो ज्वरचिकित्सा ॥

एकभागो रसो भागद्वयं शुद्धं च गंधकम् ॥
विषस्य च त्रयो भागाश्चतुर्भागा हिमावती ॥ १२४ ॥
जैपालजाः पंच भागा निवुद्रवविमर्दिताः ॥
क्रमिघ्नप्रमिता वट्यः कार्या सर्वज्वराच्छिदः ॥१२५॥
ऽंगवेरेण दातव्या वटिकैका दिनानने

१ श्वेताकस्य। २ जटा। ३ कनेर। ४ सहदेवी। ५ विडंगसमगुटिका। ५ आर्द्रकारसेन। ६ प्रभातसमये।

एकाहिकं द्व्याहिकं च त्र्याहिकं च चतुर्थकम् ॥
विषमं च त्रिदोषोत्थं हंति सद्यो न संशयः ॥ १४३ ॥
इतिमहाज्वरांकुशरसः ॥
सूतं गंधकमभ्रकं समलवं सूतार्द्धभागं विषं
तत्तुल्यं जयपालमम्लमृदितं तद्गोलकं वेष्टितम् ॥
पत्रैर्मंजुभुजंगवल्लिजनितैर्निक्षिप्य खाते पुटं
दत्वा कुक्कुटसंज्ञकं सह दलैः सचूर्ण्य तत्र क्षिपेत् ॥१४४॥
भागार्धं जयपालबीजममृतं तत्तुल्यमेकीकृतं
गुंजानागरसिंधुचित्रकयुतं सर्वज्वरान्नाशयेत् ॥
शूलं संग्रहणीगदं सजठरं दध्यन्नसंसेविनां
सर्वव्याधिवतां नृणां हिततमश्चिंतामणिर्नामतः॥१४५॥
इति चिंतामणिरसः ॥
खंडं कृत्वा विषं कृष्णं सार्कदुग्धेल्पभांडके ॥
सकांजिके सगरले क्षिप्त्वा चुल्ल्यां निधापयेत् ॥ १४६ ॥
सप्ताहतः समुद्धृत्य श्लक्ष्णचूर्णीकृतं च तत् ॥
सूचिकाभरणो नाम रसो गुप्ततमो भुवि ॥ १४७ ॥
संज्ञानाशे विचेष्टे च वल्लः कांजिकपेषितः ॥
ब्रह्मरंध्रे प्रयोक्तव्यो महामोहप्रणाशनः ॥ १४८ ॥
इति सूचिकाभरणो रसः ॥
रसदरददिनेशं फेनगंधेन युक्तं
मुनिदिनमिति खल्वे विश्वतोयेन घृष्टम् ॥
ज्वरहरमिह सूतं वल्लमात्रप्रमाणं

---

१ समंसमम् । २ विषतुल्यम् । ३ निंबुरसेन मर्दितम् । ४ ताम्बूलेन. । ५ गर्ते । ६ सूतार्द्धं । ७ विषम् । ८ प्रमाण । ९ सिंगरफ । १० ताम्रम् । ११ समुद्रफेनः । १२ सप्तदिनपर्यंतम् ।

रसं गंधं विषं ताम्रं त्रिकटु त्रिफला तथा ॥
कटुका च त्रिवृद्दंती हेमाह्वा टंकणं विषम्॥ १३५ ॥
एतानि समभागानि सर्वांशं दंतिजं फलम् ॥
चूर्णयित्वा तु तत्सम्यङ् मर्दयेद्दार्त्रिकांवुना ॥ १३६ ॥
दंतीक्वाथैस्ततः सम्यग्वटी टंकार्धमानतः ॥
विनोदविद्याधर इत्याख्यातस्तरुणज्वरम् ॥ १३७ ॥
शूलं गुल्मं तथा पांडुं ग्रहण्यर्शःक्रमीञ्जयेत् ॥
अजीर्णमामवातं च गुल्मोदरगदांस्तथा ॥ १३८ ॥
इति विद्याधरो रसः ॥
शंभोः कंठविभूषणं समरिचंदैत्येंद्ररक्तं रसैः
पक्षौसागरलोचने हिमरुचिभागैस्तथार्धौ रविः ॥
खल्वांतः खलुमर्दयेद्द्रविजलैर्गुंजाप्रमाणोऽशितः
प्रोद्दंडज्वरदंतिदर्पदलने पंचाननोऽसौ रसः ॥ १३९ ॥
पथ्यं च देयं दधिभक्ततक्रं
सिंधूत्थपथ्यासितया समेतम् ॥
गंधानुलेपो हिमतोयपानं
दुग्धं च देयं शुभदाडिमी च ॥ १४० ॥
इति रसमंजरीतः पंचाननो रसः ॥
शुद्धंसूतं विषं गंधं धूतबीजं त्रिभिः समम् ॥
चतुर्णां द्विगुणं व्योषं हेमक्षीरीविभावितम् ॥ १४१ ॥
चतुर्वारं घर्मशुष्कं चूर्णं गुंजाद्वयोन्मितम् ॥
जंबीरकस्य मज्जाभिरार्द्रकस्य रसेन वा ॥ १४२ ॥
महाज्वरांकुशो नाम समस्तज्वरनाशनः ॥

१ सेहुंडदुग्धेन। २ विषम्। ३ नवक्षीरताल। ४ कर्पूरः। ५ ताम्रः। ६ अर्कजल।

चंद्रशेखरस्यान्यन्नामउदकमंजरीत्यपिपठंति॥
समेभ्यो रसटंकेभ्यो द्विगुणाञ्जयपालकान् ॥
पिष्ट्वा नवज्वरे देयं वल्लं जंभांभसास्य च ॥ १५७ ॥
चिंचाक्षारेण खंडेन शीतज्वरविनाशकृत् ॥
आध्मानामानिलहरः सितागुडयुतो रसः ॥
अयं रसोपि सहसा पुत्रस्यापि न कथ्यते ॥ १५८ ॥
इति शीतारिः सारसंग्रहात् ॥
तुत्थं टंकणसूतकं विपवलिं सरखर्परं तालकं
चूर्णं खल्वतले विमर्द्य गुटिका सत्कारवेल्लद्रवैः॥
गुंजार्द्धप्रमिता च शुद्धसितया सा पर्णखंडेन वा
एकद्वित्रिचतुर्थकज्वरहरः शीतारिनामा रसः ॥ १५९ ॥
इति शीतारिनामरसः ॥
रसकयुगलभागं वह्निजं भागमेकं
द्वितयमपि सुखल्वे मर्दयेन्म्रक्षणेन ॥
भवति घृतविमुक्तो निंबुनीरेण यावत्
ज्वरहरसुपकुल्यामालिनीप्राग्वसंतः ॥ १६० ॥
जीर्णज्वरे धातुगतेतिसारे रक्तान्विते रक्तजपित्तरोगे ॥
घोरव्यथे पित्तकृते च दोषे वलप्रदो दुग्धयुतं च पथ्यम् ॥
प्रदरं नाशयत्याशु तथा दुर्नामशोणितम् ॥
विषमं नेत्ररोगं च गजेंद्रमिवकेसरी ॥ १६२ ॥
इति लघुमालिनीवसंतः ॥
स्वर्णं मुक्ता दरदमरिचं भागवृद्ध्या प्रयोज्यं
खर्परपर्शो प्रथमनवनीतेननिम्बुना च ॥

---

१ जमीकरीरसेन ।२ आमवातः। ३ करेला । ४ खपरिया । ५ मरिचम् । ६ नवनीतेन । ७ पीपर मधुकुल्यमित्य पिपाठः । ८ रक्तप्रसितरोगे ।

प्रथमजनितदाहं पाययेदार्द्रकेण ॥१४९॥

इति सर्वज्वरहरो रसः ॥

पलं चुक्रं कुष्ठं पिचुयुगमितं सैंधवकणे
तदर्धं प्रत्येकं करतलमितं जातिफलकम् ॥
कटोस्तैलं पक्वं कुडवमितमग्नावधिभृतं
तदेतच्चुक्राद्यं शमयति विषूचिं च सगदाम् ॥ १५० ॥

विषूचिकायां चुक्राद्यं तैलम् ॥

अष्टौ तालकमेतदर्द्धममलं शंबूकचूर्णं क्षिपेत्
पश्चादत्र नवांशको वरशिखी सर्वं पुनः पेषयेत् ॥
तोयैस्तच्च कुमारिकादलभवैः पक्वं गजाख्ये पुटे-
प्येकद्वित्रिचतुर्थशीतहरणः शीतांकुशोऽयं रसः ॥१५१॥
ज्वरं धातुगतं चित्तभ्रमं पित्तास्रजान्गदान् ॥
रक्तातिसारग्रहणीदुर्नामास्राणि नाशयेत् ॥१५२॥
गुंजाद्वयमितं दद्यात्सितया सहवारिणा ॥
सजीरकेण दध्यन्नं पथ्यं शीतज्वरांकुशे ॥ १५३॥

इति महाशीतज्वरांकुशो रसः ॥

शुद्धसूतसमं गंधं मरिचं टंकणं तथा ॥
चतुस्तुल्यसिता योज्या मत्स्यपित्तेन भावयेत् ॥१५४॥
त्रिदिनं मर्दयेत्तेन रसोयं चंद्रशेखरः ॥
द्विगुंजमार्द्रकद्रावैर्देयः शीतोदकं पुनः ॥ १५५ ॥
तक्रभक्तं च वृंताकं पथ्यं तत्र निधापयेत् ॥
त्रिदिनाच्छ्लेष्मपित्तोत्थमत्युष्णं नाशयेज्ज्वरम् ॥१५६॥

---

१ चूक। २ षोडशमाषमितम्। ३ शंखचूर्णं। ४ लीलायोषा। ६ दुग्धोदनम् दध्योदन वा।

इति लाक्षादितैलम् ॥

लाक्षाहरिद्रामंजिष्ठाकल्कैस्तैलं विपाचयेत् ॥
षड्गुणेनारनालेन दाहशीतज्वरापहम् ॥ १७१ ॥

इति लघुलाक्षादितैलम् ॥

तैलं लाक्षारसं क्षीरं पृथक्प्रस्थं समं पचेत् ॥
चतुर्गुणेरिते क्काथे द्रव्यैरेतैः पलोन्मितैः ॥ १७२ ॥
लोध्रकट्फलमंजिष्ठामुस्तकेसरपद्मकैः ॥
चंदनोत्पलयष्ट्याह्वैस्तैलं गंडूषधारणात् ॥ १७३ ॥
दंतरोगाः प्रणश्यंति लेपात्सर्वज्वराञ्जयेत् ॥
एतल्लाक्षादिकं तैलं बलपुष्टिप्रदीप्तिदम् ॥ १७४ ॥

इति लाक्षाद्यं तैलम् ॥

लाक्षामधुकमंजिष्ठामूर्वाचंदनशारिवा ॥
तैलं षट्चरणं नाम चाभ्यंगाज्ज्वरनाशनम् ॥ १७५ ॥

इति षट्चरणं तैलम् ॥

द्राक्षा मूर्वा हरिद्रे द्वे मंजिष्ठा चेंद्रवारुणी ॥
बृहती सैंधवं कुष्ठं रास्ना मांसी शतावरी ॥ १७६ ॥
आरनालाढकेनात्र तैलं प्रस्थं विपाचयेत् ॥
तैलमंगारकं नाम सर्वज्वरविमोक्षणम् ॥ १७७॥

इत्यंगारकतैलं वृंदात् ॥

अथ ज्वरहराणि चूर्णानि ॥

धात्रीशिवासैंधवचित्रकाणांकणायुतानां समभागचूर्णं॥
जीर्णज्वरारोचकवह्निमांद्ये सविड्ग्रहे शस्तमिति प्रतिज्ञा

इत्यामलक्यादिचूर्णम् ॥

तालीशोपर्णविश्वपिप्पलितुगाः कर्षाभिवृद्धास्त्रुटिः

१ कमलगट्टा मुलेहटी २ मुलेहटी। ३ मिरच। ४ इलायची।

यावत्स्नेहो व्रजति निचयं मर्दयेत्तावदेव
गुंजामात्रा मधुचपलया सर्वरोगे वसंतः ॥ १६३ ॥
जीर्णज्वरे धातुगतेतिसारे रक्तान्विते रक्तजविष्ठरोगे ॥
घोरव्यथे पित्तभवे विकारे वल्लद्वयं दुग्धयुतं च पथ्यम् ॥
वसंतो मालतीपूर्वः सर्वरोगहरः शिशोः ॥
गर्भिण्यै देयमेतच्च जयंतीपुष्पकैर्युतं ॥
सर्वज्वरहरं श्रेष्ठं गर्भपालनमुत्तमम् ॥ १६५ ॥

इतिवृहन्मालतीवसंतः ॥

अथ जीर्णज्वरे तैलानि ॥

सुवर्चिकानागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः ॥
तैलंज्वरेषड्गुणतक्रसिद्धमभ्यंजनाच्छीतविदाहनुत्स्यात्
दध्नः ससारकस्य स्यात्षड् तक्रे तक्रमुत्तमम् ॥ १६६ ॥

इति षड्तक्रतैलम् ॥

अथानुभूतं लाक्षादितैलमुच्यते ॥

लाक्षाप्रस्थं क्वाथयित्वा चतुःप्रस्थमिते जले ॥
पादशेषं जलं नीत्वा तैलप्रस्थे विनिक्षिपेत् ॥ १६७ ॥
तैलाच्चतुर्गुणं मस्तु गोदध्नश्चात्र निःक्षिपेत् ॥
शतपुष्पामश्वगंधां हरिद्रां देवदारु च ॥ १६८ ॥
रेणुकां कटुकां मूर्वां कुष्ठं च मधुयष्टिकाम् ॥
मुस्तं च चंदनं रास्नां प्रत्येकं कर्षसंमितम् ॥ १६९ ॥
कल्कीकृत्य क्षिपेत्तैले ततो मृद्वग्निना पचेत् ॥
तस्याभ्यंगात्प्रणश्यंति सर्वेऽपि विषमज्वराः ॥
कंडूशूलांगदौर्गंध्यमंगस्फोटादिकाञ्जयेत् ॥ १७० ॥

---

१ ढोढीपुष्पैः । २ फिटकरी । ३ मनीठ । ४ तैलात्षड्गुणं तक्रं तेन सिद्धम् । ५ मस्तुसहितस्य ।

त्रिकपृष्ठकटीवातपार्श्वशूलनिवारणम् ॥
शीतांबुना पिबेद्धीमान्सर्वज्वरनिवारणम् ॥ १८९ ॥
सुदर्शनं यथा चक्रं दानवानां विनाशनम् ॥
तथा सर्वज्वराणां च चूर्णमेतद्विनाशनम् ॥ १९० ॥

इति सुदर्शनं चूर्णम् ॥

चूर्णं षोडशकुंजराब्धिनयनक्ष्मामानभाजः सिता
वांशी मागधिकात्रुटिस्त्वच इह क्षौद्राज्ययुक्तं प्रगे ॥
लीढं हंति सितोपलादिकमिदं सर्वांगदाहं क्षयम् ॥
पार्श्वार्तिं ज्वरवातपित्तकसनश्वासाग्निमांद्यारुचीः १९१

इति सितोपलाद्यं चूर्णम् ॥

कट्फलं मुस्तकं तिक्ता सटी शृंगी च पौष्करम्॥
मधुना चूर्णमेतेषां शृंगवेररसेन वा ॥ १९२ ॥
लिहेज्ज्वरहरं कंठ्यं कासश्वासारुचिच्छिदम् ॥
वायुं छर्दिं तथा शूलं क्षयं चैव व्यपोहति ॥१९३॥

इति कट्फलादिचूर्णं शार्ङ्गधरात् ॥

इति दिङ्मात्रमाख्यातमं ज्वराणां हि चिकित्सितम् ॥
संप्रत्ययं सानुभवं संप्रदायाद्गुरोरिह ॥ १९४ ॥

इतिश्रीयोगतरंगिण्यां ज्वरचिकित्सानाम
विंशतितमस्तरंगः ॥ २० ॥

---

अथैकविंशस्तरंगः

अथातीसारचिकित्सा॥

संशम्यायांधातुरग्निप्रवृद्धोवर्चोमिश्रोवायुनाधःप्रणुन्नः ॥

---

१ वंशलोचन । २ दालचीनी । ३ प्रभातसमये । ४ संक्षेपमात्रम् । ५ विश्वासयुक्तम् । ६ अपांधातुरित्यादिना समाधकरणेनजलमूत्रस्वेदभेदकफपित्तरक्तादयो माद्याः ।

कर्पाद्धां त्वगपि प्रकामधवला द्वात्रिंशकर्पासिता ॥
तालीसाद्यमिदं सुचूर्णमरुचावाध्मानमंदानल-
श्वासच्छर्द्यतिसारशोषकसनप्लीहज्वरे शस्यते॥ १७९।

इति तालीसाद्यं चूर्णं ॥

त्रिफला रजनीयुग्मं कंटकारीयुगं सटी ॥
त्रिकटु ग्रंथिकं मूर्वा गुडूची धन्वयासकः ॥ १८० ॥
कटुका पर्पटं मुस्तं त्रायमाणं च वालकम् ॥
निंबं पुष्करमूलं च मधुयष्टी च वत्सकः ॥ १८१ ॥
यवानींद्रयवा भार्गी शिग्रुबीजं सुराष्ट्रजा॥
वचा त्वक्पद्मकोशीरचंदनातिविषावलाः ॥ १८२ ॥
शालिपर्णी पृष्ठिपर्णी विडंगं तगरं तथा ॥
चित्रको देवकाष्ठं च चव्यं पत्रं पटोलजम् ॥ १८३ ॥
जीवकर्षभकौ चैव लवंगं वंशलोचनम् ॥
पुंडरीकं च काकोल्यौ पत्रकं जातिपत्रकम्॥ १८४ ॥
तालीशपत्रं च तथा समभागानि चूर्णयेत् ॥
सर्वचूर्णस्य चार्धांशं कैरातं प्रक्षिपेत्सुधीः ॥ १८५ ॥
एतत्सुदर्शनं नाम चूर्णं दोषत्रयापहम्॥
ज्वरांश्च निखिलान्हन्यान्नात्र कार्या विचारणा॥ १८६॥
पृथग्द्वंद्वागंतुजांश्च धातुस्थान्विषमज्वरान् ॥
सन्निपातोद्भवांश्चापि मानसानपि नाशयेत् ॥ १८७ ॥
शीतज्वरं त्रिदोषादीन्मोहं तंद्रां तृषां तथा ॥
श्वासं कासं च पांडुं च हृद्रोगं हंति कामलाम् ॥ १९८॥

---

१ अतिश्वेता। २ नेत्रवाला। ३ कुडेकी छाल। ४ फिटकरी। ५ दालचीनी। ६ देवदारु। ७ श्वेतकमलम्। ८ पदज। ९ जावत्री। १० चिरायतो।

पुरीषं भृशदुर्गंधि पिच्छिलं चामसंज्ञितम्॥ ८ ॥
एतान्येव तु लिंगानि विपरीतानि यस्य वै ॥
लाघवं च विशेषेण तस्य पक्कं विनिर्दिशेत् ॥ ९ ॥
शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ॥
छर्दिं मूर्छां च हिक्कां च दृष्ट्वाऽतीसारिणं त्यजेत् ॥ १० ॥
सासृक्सगुह्यगुदवंक्षणवस्तिशूल
मामातिसारमनिलप्रतिबद्धविट्कम्॥
दोषानुरूपविहितैरिह लंघनाद्यैः
पेयादिभिस्तमवलोक्य भिषक्चिकित्सेत् ॥ ११ ॥
प्राक्पंचकोलकजलप्लुततंडुलाभिः
पेयाभिरप्यथ पृथग्लघुलाजमंडैः॥
मृद्वोदनैर्मधुरदाडिमयूपयुक्तै-
रामातिसारशमनैरुपदिष्टपथ्यैः ॥ १२ ॥
मुस्तमोचरसलोध्रधातकीपुष्पबिल्वगिरिकौटजैः समैः॥
चूर्णितैः सगुडतक्रसेवितैस्त्रिस्रगाजलरयोपि रुध्यते १३
॥ इति गंगाधरचूर्णम्
विश्वाभयाघनवचातिविषामराह्वा ॥
क्वाथो थ विश्वजलदातिविषाकृतो वा ॥
आमातिसारशमनः कथितः कषायः
शुंठीघनप्रतिविषाऽमृतवल्लिजो वा ॥ १४ ॥
सहरीतकिप्रतिविषारुचकं सवचं सहिंगु सकलिंगयवम्॥
इति यत्कलिंगयवषट्कमिदं रुधिरातिसारगुदशूलहरम्॥
॥ इति चिकित्साकालिकातः॥

१ शोफम्। २ बेल गिरी। ३ नदीजलवेगोपि। ४ देवदारु।
५ मोथा। ६ गुडूची। ७ इंद्रजो।

सरंत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधं तं वदंति॥१
एकैकशः सर्वशश्चापि दोषैः-
शोकेनान्यः षष्ठ आमेन चोक्तः॥
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः॥
विसंगमाध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि
अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः॥
शकृदामं सरुक्छब्दं मारुतेनातिसार्यते ॥३॥
पित्तात्पीतं नीलमालोहितं वा
तृष्णामूर्छादाहपाकोपपन्नम् ॥
शुक्लं सांद्रं सकफं श्लेष्मदुष्टं
विस्रं शीतं हृष्टरोमा मनुष्यः ॥ ४॥
तैस्तैर्भावैः शोचतोल्पाशनस्य
बाष्पोष्मा वै वह्निमाविश्य जंतोः॥
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात्काकणंतीप्रकाशम् ॥ ५ ॥
निर्गच्छेद्वै विड्भिमिश्रं त्वविड्वा
निर्गंधं वा गंधवद्वातिसारः॥
शोकोत्पन्नो दुश्चिकित्स्यो ऽतिमात्रं
रोगो वेगैः कष्ट एष प्रदिष्टः॥ ६ ॥
तंद्रायुक्तो मोहमासाद्य शोषी
वर्चः कुर्यान्नैकरूपं तृषार्तः॥
सर्वोद्भूते सर्वलिंगोपपत्तिः
कृच्छ्रोपायः प्रोक्त एषोत्र नूनम्॥ ७ ॥
संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ॥

१ अर्धकनिष्ठरोन लघुकरणाच्छंदोनिच्छेदोनदोषाय ।

मृद्वेष्टितादग्निविपाचिताद्रसं
पिबेदतीसारहरं समाक्षिकम् ॥ २४ ॥
इत्युक्तया कल्पनया वटादिना
कल्कीकृतेनोदरगेण तित्तिरेः ॥
प्रकल्पितः स्यात्पुटपाकजो रसः
सशर्करः क्षौद्रयुतोतिसारजित् ॥ २५ ॥
॥ इति चिकित्सातः ॥
कासमर्दकजं मूलं घृष्ट्वा तंदुलवारिणा ॥
दीयते पलकामात्रा व्योघ्रवालातिसारिणी ॥ २६ ॥
प्रपचेत्सार्पिषा पथ्या लोहपात्रेतियत्नतः ॥
शिशिरा सा प्रदातव्या चातिसारिणि दुर्बले ॥ २७ ॥
शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ॥
क्वाथे पादावशेषेस्मिन्पूते लेहं पुनः पचेत् ॥ २८ ॥
सौवर्चलयवक्षारविडसैंधवपिप्पली ॥
धातकींद्रयवाजाजीचूर्णं दत्वा पलद्वयम् ॥ २९
लिह्याद्बदरमात्रं च शीतं क्षौद्रेण संयुतम् ॥
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥ ३० ॥
॥ इति कुटजावलेहः ॥
कुटजस्य पलं ग्राह्यमष्टभागजले शृतम् ॥
तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥ ३१ ॥
कुटजक्वाथतुल्योत्र दाडिमस्य रसो मतः ॥

---

१ वृक्षेण। २ कशोदी। ३ पुरातन नवीन ४ पल। ५ सेर६४गोणीनाम। ६ जीरे। ७ कर्षप्रमाणम्। ८ भागावशेषितम् इति पाठः। ९ अनाररसयुक्त।

गुडूच्यतिविषाधान्यशुंठीविल्वाब्दवालकैः ॥
पाठाभूर्निंबकुटजैश्चंदनोशीरपद्मकैः ॥ १६ ॥
कषायः शीतलः पेयो ज्वरातीसारशांतये ॥
हृल्लासारोचकच्छर्दिपिपासादाहनाशनम् ॥ १७ ॥
उत्पलं दाडिमत्वक्च पद्मकेसरमेव च ॥
पिबेत्तंदुलतोयेन ज्वरातीसारशांतये ॥ १८ ॥
उशीरं वालकं मुस्तं विल्वं धान्यकमेव च ॥
समंगाधातकीलोध्रं विश्वंपाचनदीपनम् ॥ १९ ॥
हंत्यरोचकपिच्छामविबंधं सातिवेदनम् ॥
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ २० ॥
अवेदनं सुसंपक्वं दीप्ताग्नेः सुचिरोत्थितम् ॥
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ २१ ॥
स्निग्धं घनं कुटजकल्कमजंतुजग्ध-
मादाय तत्क्षणमतीव च पेषयित्वा ॥
जंबूपलासपुटतंदुलतोयसिक्तं
बद्धं कुशेन च बहिर्घनपंकलिप्तम् ॥ २२ ॥
सुस्विन्नमेतदुपपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात् ॥
कृष्णात्रिपुत्रमतपूजित एष योगः
सर्वातिसारशमने स्वयमेव संज्ञः ॥ २३ ॥
॥ इति वृंदात् ॥
श्रीपर्णिपर्णावृतदीर्घवृंतजं-
त्वक्पीडकातंदुलनारिकल्किताद् ॥

१ मनोज्ञ । २ पत्र । ३ आत्रेय । ४ राजा । ५ बिल्वपत्र । ६ कुटजत्वक्

त्र्यक्षं त्र्यूपणतश्च पंचलवणं सार्द्धं त्रिकर्षं पृथक् ॥
तच्छ्रक्रासनचूर्णतुल्यनिहतं तत्सर्वमेकीकृतं
खादेच्छाणमितं सकांजिकपलं मंदाग्न्यतीसाराजित् ॥
इति लाइचूर्णम् ॥
दीप्यौ क्षारत्रयाग्नित्रिकटुगजकणावेल्लभल्लातकोग्रा
द्वे जीरे हिंगुकुष्ठाखिलपटुरसगंधाभ्रधूमोत्तमाश्च ॥
एतेषां तुल्यभागं रज उदितमतीसारशूलग्रहण्या-
नाहप्लीहप्रमेहानलहतिषु बृहल्लाइचूर्णं प्रशस्तम् ॥४२॥
इति बृहल्लाइचूर्णं योगरत्नावलीतः ॥
स्नानावगाहमभ्यंगं गुरुस्निग्धान्नभोजनम् ॥
व्यायाममग्निसंतापमतीसारी विवर्ज्जयेत् ॥ ४३ ॥
इति वृंदात् ॥
इति योगतरंगिण्यां अतीसारचिकित्सा-
नामैकविंशस्तरंगः ॥ २१ ॥

द्वाविंशस्तरंगः ।

अथ संग्रहणी ॥
अतीसारे निवृत्तेपि मंदाग्नेरहिताशिनः ॥
भूयः संदूषितो वह्निर्ग्रहणीमपि दूषयेत् ॥ १ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्छितैः ॥
सा दुष्टा बहुशो भुक्तमाममेव विमुंचति ॥ २ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ॥
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ३ ॥
षष्ठी पित्तधरा नाम या कला परिकीर्तिता ॥

---

१ त्रिकर्षमागम् । २ अजवायन अजमोद । ३ चेतगिरी । ४ वन । ५ पंचलवण । ६ धुमसो । ७ कथिनम् । ८ महाविदु ।

यावल्लपसिकाभासं शृतं तमुपकल्पयेत् ॥ ३२ ॥
तस्यार्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ॥
अवश्यमरणीयोपि मृत्योर्याति न गोचरम् ॥ ३३ ॥

॥ इति लघुकुटजावलेहः ॥

यवानीपिप्पलीमूलचातुर्जातकनागरैः ॥
मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः ॥ ३४ ॥
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ॥
त्रिगुणैः षड्गुणासितैः कपित्थाष्टगुणीकृतैः ॥ ३५ ॥
चूर्णातिसारग्रहणीक्षयगुल्मगलामयान् ॥
कासश्वासारुचीर्हिक्कां कपित्थाष्टमिदं जयेत् ॥ ३६ ॥

इति कपित्थाष्टकम् ॥

यथा शृतं भवेद्वारि तथातीसारनाशनम् ॥
अतीसारं निहंत्येव शतभागशृतं जलम् ॥ ३७ ॥
यथा शृतं तथा क्षीरमतीसारेषु पूजितम् ॥
चिरोत्थितेषु तत्पेयं त्रिभागजलसाधितम् ॥ ३८ ॥
अमृतं तन्निरामेस्यात्सामे तीसारकेविषम्॥
सूतं गंधं त्रिकटुकं दीप्यकं जीरकद्वयम्॥ ३९ ॥
सौवर्चलं सैंधवं तु रामठं विडमेव च ॥
शक्रासनस्य चूर्णं तु चूर्णतुल्यं प्रदापयेत्॥
संग्रहं गूलमानाहं हन्यात्सानातिसारजित् ॥ ४० ॥

इति लाईचूर्णम् ॥

कर्षं गंधकमर्द्धपारदमुभौ कुर्याच्छुभां कज्जलीं

---

१ चीतो। २ मोथा ३ जीरो। ४ अम्लवेता याइमिली। ५ अज मोद। ६ दुग्धम्। ७ त्रिगुणजलेन। ८ अजमोद। ९ इंद्रयवस्य।

पचेद्वंस्थीः सार्द्धं घृततिलजगुंठ्यग्निकुडवैः ॥
संमावाप्याजाजीमरिचचंपलादीप्यकपलं
लिहन्नेतां हंति ग्रहणिमनलं दीपयति च ॥ ११ ॥

इति तक्रहरीतकी वृंदात् ॥

भूनिंबकौटजकटुत्रिकमुस्ततिक्ताः
कर्षांशकाः सशिखिमूलपिचुद्वयाः स्युः ॥
त्वक्कौटजीपलचतुष्कमिता गुडांभः
पीतं नृणामिह हरेद्ग्रहणीविकारान् ॥ १२ ॥

इति चिकित्सातः ॥

जातीफललवंगैलापत्रत्वङ्नागकेसरैः ॥
कर्पूरचंदनतिलत्वक्क्षीरीतगरामलैः ॥
तालीसपिप्पलीपथ्यास्थूलजीरकचित्रकैः ॥ १३
शुंठीविडंगमरिचैः समभागैर्विचूर्णितैः ॥
यावंत्येतानि सर्वाणि दद्याद्भंगां च तावतीम् ॥ १४ ॥
सर्वचूर्णसमा देया शर्करा च भिषग्वरैः ॥
कर्षमात्रं ततः खादेन्मधुना प्लावितं सुधीः ॥ १५ ॥
अस्य प्रभावाद्ग्रहणीकासश्वासारुचिक्षयाः ॥
वातश्लेष्मप्रतिश्यायाः प्रशमं यांति वेगतः ॥ १६ ॥

॥ इति जातीफलादिचूर्णम् ॥

तालीसोग्रतुंगापडूपणनिशाविल्वाजमोदासटी-
चातुर्जातलवंगधातुकिविषाजातीफलं दीप्यकम् ॥
पाठामोचरसोलपंचलवणाजाजीद्वयं वेल्लकं

१अस्थिरहिताः। २ तेल। ३ त्रिभिः कुडवै। ४ एकीकृत्य। ५ मोरशिखाकी जड। ६ दालचीनी। ७ इंद्रजो। ८ वंशलोचन। ९ प-नियो। १० वेलगिरी।

पक्वामाशयमध्यस्था ग्रहणीं तां विदुर्बुधाः ॥ ४ ॥

॥ उक्तं च ॥

अथामसंचयादेव जायते ग्रहणीगदः ॥
क्वचिदामं क्वचित्पक्वं सार्यते विट्सरुग्द्रवम् ॥ ॥ ५ ॥
पक्षाद्वा द्वादशाहाद्वा विंशतेर्वा दिनात्परम् ॥
मासाद्वापि भवेत्कोपो ग्रहणीरुजि मानवे ॥ ६ ॥
ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ॥
अतीसारोक्तविधिना तस्यामं च विरेचयेत् ॥ ७ ॥
इति वृंदात् ॥

विश्वादिभिः सरुजि पाचनमत्र शस्तं
मुस्तादिभिर्भवति संग्रहणं ततश्च ॥
स्याद्दीपनं तदनु च ग्रहणीविकारे
कल्याणकारिभिरिति ग्रहणी चिकित्स्या ॥ ८ ॥
पाठाधान्ययवान्यजाजिहवुपाचव्याग्निसिंधूद्भवैः
सश्रेयस्यजमोदकीटरिपुभिः कृष्णाजटातंदुतैः ॥
सव्योपैः सफलत्रिकैः सत्रुटिभिस्त्वक्पत्रकैरौषधै-
रित्यक्षप्रमितैः सतैलकुडवैः सार्धत्रिवृन्मुष्टिभिः ॥ ९ ॥
एतैरामलकीरसस्य तुलया सार्धं तुलार्द्धं गुडा-
त्पक्त्वं भिषजावलेहवदयं प्राग्भोजनाद्भक्षितः ॥
ये केचिद्ग्रहणीगदाः सगुदजाः कासाः सशोषामयाः
सश्वासश्वयथुस्वरोदररुजः कल्याणकस्ताञ्जयेत् ॥१०॥

॥ इति कल्याणकावलेहः ॥

त्रिंकांशे तक्रस्य द्विकुडवपटौ पॅप्पिरभयाः

---

१ वा विपाचयेत् इति पाठ.। २ सहरीतकी ३ वायविडंग। ४ पीपरामूल। ५ एलाभिः सह। ६ दालचीनी पत्रज। ७ निशोत। ८ १२प्रमाणे। ९ सेर१२। १० साठभर६०।

अंभोधिपंक्तिकरशैलधराद्यविंश-
त्यंशैर्विचूर्णिततमैर्ग्रहणीकपाटः ॥ २५ ॥
वल्लोस्य हंति मधुना सह जीरकेण
भुक्तोतिसारमपि संग्रहणीमुदग्राम् ॥
आमं विपाच्य सहसा जनयत्यवश्यं
वैश्वानरं जठरवर्तिनमर्तिभाजः ॥ २६ ॥

इति ग्रहणीकपाटः ॥

रसेंद्रगंधातिविषाभयाभ्रं क्षारत्रयं मोचरसो वचा च ॥
जेयाच जंबीररसेन पिष्टः पिंडीकृतः स्याद्ग्रहणीकपाटः॥
तस्यार्द्धमाषं मधुना प्रभाते शंबूकभस्माभियुतं निहंति॥
उग्रं ग्रहण्यामयमग्निमांद्यं क्षैण्यामयं श्वासमुरःक्षतंच २७
॥ इति अपरो ग्रहणीकपाटः योगरत्नावलीतः ॥
पिच्छिलानि कठोराणि गुरूण्यन्नानि यानि च॥
आमकृंति न सेव्यानि ग्रहणीरोगिभिः क्वचित् ॥ २८ ॥
इति योगतरं० ग्रहणीचिकित्सानामद्वाविंशस्तरंग॥२२

त्रयो विंशस्तरंगः।

॥ अथार्शः ॥

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च॥
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ॥
मांसांकुरान्नपानादौ कुर्वंत्यर्शांसि ताञ्जगुः ॥ २ ॥
विष्टंभोन्नस्य दौर्बल्यं कुक्षेराटोप एव च ॥
कार्श्यमुद्गारबाहुल्यं सक्थिसादोल्पविट्कता ॥ ३ ॥
ग्रहणीदोषपांड्वर्तेराशंका चोदरस्य च ॥

१ भगा। २ ण्य क्षय इति पाठः।

वृक्षाम्लाम्लवरापलाशतरुजं मांस्यंबुदं वालकम्॥१७॥
ऐंद्रीब्रह्मसुवर्चला दृढपदी कुष्ठं समस्तं समं
वल्या सर्वसमा जयाखिलसमा मत्स्यंडिका वासिता॥
चूर्णोयं ग्रहणीक्षयादिकसनश्वासारुचिप्लीहरु-
ग्दुर्नामातिसृतिज्वरार्तिपवनस्थौल्यप्रमेहप्रणुत्॥१८॥
तीव्रापस्मृतिपांडुगुल्मजठरश्लेष्मोत्थपित्तोद्भवो-
न्मादध्वंसविधायको विजयते सर्वामयध्वंसकः॥
वालानां च विशेषतो हितकरः सुस्पष्टवाणीप्रदः
पुष्ट्यायुर्वलकांतिधीस्मृतिमहामेधाविलासप्रदः॥२०॥

इति तालीसाद्यं चूर्णम्॥

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च॥
व्योपहिंग्वजमोदा च चव्यं चैकत्र कारयेत्॥२१॥
गुटिका मातुलुंगस्य दाडिमस्य रसेन वा॥
कृता विपाचयत्यामं दीपयत्याशु चानलम्॥२२॥

इति चित्रकादिगुटिका॥

ग्रहणीरोगिणस्तक्रं संग्राहि लघुदीपनम्॥
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपनम्॥२३॥
श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः॥
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति॥२४॥

इति वृंदात्॥

शुद्धाहिफेनवलिसूतकपर्दभस्म-
हालाहलोपणविशुद्धसुवर्णवीजैः॥

---

१ त्रिफला। २ पलाशपुष्पम्। ३ मोथा। ४ इन्द्रायणी। ५ इं-
द्रहर हुलहुल। ६ बहुफरी। ७ शतावर्या। ८ भगा। ९ स्वेतखांड।
१० अपक्वबिल्वम् आम फल शलाटुः स्यादिति हैमः। ११ पीपर। १२ शु-
द्धधत्तूरवीजैः।

अंभोधिपंक्तिकरशैलधराधविंश-
त्यंशैर्विचूर्णिततमैर्ग्रहणीकपाटः ॥ २५ ॥
वल्लोस्य हंति मधुना सह जीरकेण
भुक्तोतिसारमपि संग्रहणीमुदग्राम् ॥
आमं विपाच्य सहसा जनयत्यवश्यं
वैश्वानरं जठरवर्तिनमर्तिभाजः ॥ २६ ॥

इति ग्रहणीकपाटः ॥

रसेंद्रगंधातिविषाभयाभ्रं क्षारत्रयं मोचरसो वचा च ॥
जंया च जंबीररसेन पिष्टः पिंडीकृतः स्याद्ग्रहणीकपाटः॥
तस्यार्द्धमाषं मधुना प्रभाते शंबूकभस्माभियुतं निहंति॥
उग्रं ग्रहण्यामयमग्निमांद्यं क्षैण्यामयंश्वासमुरःक्षतंच२७
॥ इति अपरो ग्रहणीकपाटः योगरत्नावलीतः ॥
पिच्छिलानि कठोराणि गुरूण्यन्नानि यानि च॥
आमकंति न सेव्यानि ग्रहणीरोगिभिः क्वचित् ॥ २८ ॥
इति योगतरं० ग्रहणीचिकित्सानामद्वाविंशस्तरंगः॥२२

त्रयो विंशस्तरंगः।

॥ अथार्शः ॥

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च॥
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ॥
मांसांकुरानपानादौ कुर्वंत्यर्शांसि ताञ्जगुः ॥ २ ॥
विष्टंभोन्नस्य दौर्बल्यं कुक्षेराटोप एव च ॥
कार्श्यमुद्गारबाहुल्यं सक्थिसादोल्पविट्कता ॥ ३ ॥
ग्रहणीदोषपांडुत्वैराशंका चोदरस्य च॥

---

१ भगा। २ ण्यं क्षय इति पाठः।

पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ४ ॥
गुदांकुरा वह्वनिलाः शुष्काश्चिमिचिमान्विताः ॥
म्लानाः श्यावारुणास्तब्धा विषमाः परुषाः खराः ॥५॥
मिथो विसंदृशा वक्रास्तीक्ष्णा विस्फुटितानना: ॥
बिंबीकर्कंधुखर्जूरकार्पासीफलसन्निभाः॥ ६ ॥
केचित्कदंबपुष्पाभाः केचित्सिद्धार्थकोपमाः ॥
शिरःपार्श्वांसकट्यूरुवंक्षणाभ्यधिकव्यथाः ॥ ७ ॥
क्षवथूद्गारविष्टंभहृद्ग्रहारोचकप्रदाः ॥
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ॥ ८ ॥
रुक्फेनपिच्छानुगतं विड्बद्धमुपवेश्यते ॥
कृष्णत्वग्नष्टविण्मूत्रनेत्रवक्त्रः प्रजायते ॥ ९ ॥
गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥ १० ॥
तन्वस्रस्राविणो रक्तास्तनवो मृदवस्तथा ॥
शुकजिह्वा यकृत्पिंडजलौकावक्त्रसंनिभाः ॥ ११ ॥
दाहपाकज्वरस्वेदतृण्मूर्छारतिमोहदाः ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ॥ १२ ॥
यवमध्या हरित्पीता हारिद्रत्वङ्नखादयः ॥
श्लेष्मोल्वणा महामूला घना मंदरुजः सिताः ॥ १३ ॥
उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कंड्वाढ्याः स्पर्शनप्रियाः॥
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥
वंक्षणानाहिनः पायुबस्तिनाभिविकर्षिणः ॥ १५ ॥
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः॥

१ परस्परभिन्नरूपाः। २ कंडूरी। ३ बेर। ४ खंडं इति पाठः।

महकृच्छ्राशिरोजाड्यशिशिरज्वरकारिणः ॥ १६ ॥
क्लैब्याग्निमार्दवच्छर्दिरामप्राया विकारदाः ॥
वसाभाः सकफप्रायाः पुरीषाः सप्रवाहिकाः ॥ १७ ॥
न स्रवंति न भिद्यंते पांडुस्निग्धत्वगादयः ॥
सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ॥ १८ ॥
रक्तोल्वणा गुदे कीलाः पित्ताकृतिसमन्विताः ॥
वटप्ररोहसदृशा गुंजाविद्रुमसन्निभाः ॥ १९ ॥
तेत्यर्थं दुष्टमुष्णं च गाढविट्प्रपीडिताः ॥
स्रवंति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ २० ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः ॥
हीनवर्णबलोत्साहो हतौजाः कलुषेंद्रियः ॥ २१ ॥
विट्श्यावं कठिनं रूक्षमधोवायु र्न गच्छति ॥
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ॥ २२ ॥
बाह्यायां तु वलौ जातान्येकदोषोल्वणानि च ॥
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ २३ ॥
द्वंद्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ २४ ॥
सहजानि त्रिदोषाणि यानि चाभ्यंतरां वलिम् ॥
जायंतेऽर्शांसि संसृत्य तान्यसाध्यानि निर्दिशेत् ॥ २५ ॥
हस्तादिशोफैर्हृत्पार्श्वशूलैश्छर्दिज्वरादिभिः ॥
तृष्णया गुदपाकेन निहन्युर्गुदजा नरम् ॥ ॥
मेढ्रादिष्वपि जायंते दुर्नामानि नृणामिह ॥ २६ ॥
तत्रार्शसामुपदिशंति चतुःप्रकार-
मारोग्यमेकमगदैरपरं च शस्त्रैः ॥

१ औषधैः।

क्षारेण चान्यदनलेन चतुर्थमित्थ-
मित्यागमैकंकृतिनः किल शुश्रुताद्याः ॥ २७ ॥
स्यादौषधैरचिरजेषु चिरोद्गतेषु
क्षारेण च क्षतजपित्तसमुद्भवेषु ॥
स्थूलेषु वातकफजेष्वनलेन शस्त्रैः
सत्त्वाधिकस्य बलिनश्च सतश्चिकित्सा ॥ २८ ॥

इति चिकित्सातः ॥

अर्शोऽतिसारग्रहणीविकाराः
प्रायेण चान्योन्यनिदानभूताः ॥
सन्नेऽनले संति न संति दीप्ते
रक्षेदतस्तेषु विशेषतोऽग्निम् ॥२९॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ॥
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः ॥ ३० ॥
पित्तातिसारवह्निन्नवर्चांस्यर्शांस्युपाचरेत् ॥
उदावर्तविधानेन गाढविट्कानि चासकृत् ॥ ३१ ॥
प्रवृत्तबहुलास्राणि पित्तशोणितनाशनैः ॥
विड्विबंधे हितं तक्रं यवानीविश्वसंयुतम् ॥ ३२ ॥
न प्ररोहंति गुदजाः प्रायस्तक्रसमाहताः ॥
तिलं भल्लातकं पथ्या गुडश्चेति समांशकम् ॥ ३३ ॥
दुर्नामश्वासकासघ्नं प्लीहपांडुज्वरापहम्॥
मरिचमहौषधचित्रकशूरणभागा यथोत्तरं द्विगुणाः॥
सर्वसमो गुडभागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥ ३४ ॥
ज्वलनं ज्वलयति जाठरमुन्मूलयति प्रशूलगुल्मगदान्॥

---

१ शास्त्रनिपुणाः। २ अग्निना। ३ पराक्रमाधिकस्य। ४ मंदे सति। ५नष्टा। ६ अग्निम्। ७ उदरविकारम्।

निःशेषयति श्लीपदमर्शांसि नाशयत्याशु ॥ ३५ ॥
मृल्लिप्तं सौरणं कंदं पक्त्वाग्नौ पुटपाकवत् ॥
अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ ३६ ॥
नवनीततिलाभ्यासात्केसरनवनीतशर्कराभ्यासात् ॥
दधिरसमथिताभ्यासाद्गुदजाः शाम्यंति रक्तवहाः॥ ३७॥
शिरीषबीजं द्वौ क्षारौ लांगली सैंधवं वचा॥
स्नुहीक्षीरेण पिष्टानि गवां पित्तेन भावयेत् ॥ ३८ ॥
अर्शांसि लेपयेत्तेन सप्तरात्रं पुनःपुनः ॥
लिप्तान्येतानि सर्वाणि विनश्यंति न संशयः ॥ ३९ ॥
यथा सर्वाणि कुष्ठानि हतः खदिरबीजकौ ॥
तथा ह्यर्शांसि सर्वाणि वृक्षकोरुष्करौ हतः ॥ ४० ॥
हरिद्रायाः प्रयोगेण प्रमेहा इव षोडश ॥
क्षाराग्निभ्यां निवर्तंते तथा दृश्या गुदोद्भवाः ॥ ४१ ॥
इति वृंदात् ॥
भागाः षोडश वृद्धदारुसहितात्कंदात्कृतात्कर्कशा-
दष्टौ चित्रकमूलतश्च तुलिताः स्युस्तालमूलीयुतात् ॥
तालीसत्रिफलाविडंगमगधाविश्वोपकुल्याजटा-
भल्लातैश्च चतुष्पलैर्द्विपलकैरेलालवंगोपणैः ॥ ४२ ॥
इत्येभिः सकलैर्गुडद्विगुणितैः कुर्याद्विपङ्मोदका-
न्यैर्भुक्तैर्न नृणां भवंति गुदजा न प्लीहपांड्वामयाः ॥
नो गुल्मग्रहणीगदोदररुजः कोष्ठे न शूलानि च
श्वासश्लीपदशोफविद्रधियकृद्ध्रंथ्यर्बुदादीनि च ॥ ४३ ॥
इति शूरणपिंडिका ॥

१ भक्षयेत्। २ तक्रपानात्। ३ विजेसार। ४ साउ। ५ भिलावे। ६ चीतो। ७ जीमीकंद। ८ गजपीपर।

पथ्यादलस्य गुरुणः पलपंचकं स्या-
देकं पलं च मरिचादपि जीरकाच्च ॥
कृष्णातदुद्भवजटाचविकाग्निशुंठ्यः
कृष्णादिपंचकमिदं पलतः प्रवृद्धम् ॥ ४४॥
एतैररुष्करपलाष्टकसंयुतैः स्या-
त्कंदस्त्वरुष्करफलाद्द्विगुणः प्रकल्प्यः ॥
स्याद्यावशूककुडवार्द्धमतः समस्ता-
द्योज्यो गुडो द्विगुणितो वटकीकृतश्च ॥
कांकायनेन मुनिना गदितः किलायं
श्रेयस्करेण वटकोऽत्र गुदामयेषु ॥
क्षाराग्निशस्त्रयतनैरपि ये न सिद्धाः
सिध्यंत्यनेन वटकेन गुदामयास्ते ॥ ४६ ॥
इति कांकायनवटकः चिकित्सातः ॥
सिंधूत्थं देवदाल्याश्च वीजं कांजिकपेषितम् ॥
गुदांकुरान्प्रलेपेन पातयत्युल्बणानि च ॥ ४७ ॥
शुंठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्धितमूर्द्धमंत्यात् ॥
खादेदिदं समसितं गुदजाग्निमांद्य-
गुल्मारुचिश्वसनकंठहृदामयेषु॥ ४८ ॥
इति समशर्करं चूर्णम् ॥
सनागरारुष्करवृद्धदारुकं गुडेन यो मोदकमत्युदारकम्॥
अशेषदुर्नामकरोगदारकं करोति वृद्धिं सहसैव दारकं ४९
इति चतु:समो मोदकः योगरत्नावलीतः ॥

---

१ बडोइरको नकल। २ भिलाय। ३ जिमीकद। ४ यशाल। ५नागकेशर। ६ विधायरो। ७ अग्निम्।

देवदालीकषायेण शौचमाचरतां नृणाम् ॥
किं वा तद्रूमसेवाभिः कुतः स्युर्गुदजांकुराः ॥ ५० ॥
तसायोलांछनं केचिद्दुर्नामघ्नं बुधा जगुः ॥
तक्रं सकृष्णं पिवतां दुर्नामश्रवणं कुतः ॥ ५१ ॥

अथ रसः ॥

भागः शुद्धरसस्य भागयुगुलं गंधस्य लोहाभ्रयोः
षड्विल्वाग्निदलोपणात्रयरजो दंती च भागैः पृथक् ॥
पंच स्युः स्फुटटंकणस्य च यवक्षारस्य सिंधूद्भवा
भागाः पंच गवां जलं सुविमलं द्वात्रिंशदेतत्पचेत् ॥ ५२
स्नुग्दुग्धं च गवां जलावधि शनैः पिंडीकृतं तद्भजे-
द्वौ माषौ गुदकीलकाननजटाच्छेदे कुठारो ह्ययं ॥ ५३ ॥

इत्यर्शःकुठारो रसः रसरत्नप्रदीपात् ॥

शुद्धं वलिं रससमं सुदृढं विमर्द्य
सर्पिःप्लुतं द्विगुणबोलरजोविमिश्रम् ॥
तावत्पचेद्द्रवति लोहमये च याव-
त्पात्रे क्षिपेच्च कदलीदलयुग्ममध्ये ॥ ५४ ॥
जातो रसः पर्पटिकाभिधानः समस्तदुर्नामकरोगहारी॥
संसेवितो वल्लचतुष्कमात्रमार्तस्य पुंसस्तनुपुष्टिकारी ५५

इति वोलवद्धरसः ॥

मृतं सूताभ्रलोहार्कविषं गंधं समंसमम् ॥
सर्वतुल्यांशभल्लातफलमेकत्र चूर्णयेत् ॥ ५६ ॥
द्रवैः सूरणकंदोत्थैः खल्वे मर्द्यं दिनत्रयम् ॥
मापमात्रं लिहेदाज्यैरसाध्यार्शांसि नाशयेत् ॥

---

१ पत्रज। २ त्रिभागः। ३ बोजावोल। ४ ताम्रेश्वर।

रसो नित्योदितो नाम्ना ह्यर्शोरोगकुलांतकः ॥ ५७ ॥
इति नित्योदितरसः ॥
वेगावरोधं स्त्रीयानं कटुकं चोत्कटाशनम् ॥
यथास्वं दोषलं चान्नमर्शसः परिवर्जयेत् ॥ ५८॥
पित्तकृंति न सेव्यानि द्रव्याण्यर्शोयुतैर्नरैः ॥
विना तक्रं समगधं विनान्नं लघुपाकि च ॥ ५९ ॥
इति श्रीयोगत॰मर्शश्चिकित्सा नाम त्रयोविंशस्तरंग

चतुर्विंशस्तरंगः

॥ अथाजीर्णम् ॥
प्रकृत्या रसशेषाद्वा त्रिभिर्दोषैरपाकतः ॥
भवंति षडजीर्णानि वैषम्यादशनस्य च ॥ १ ॥
विबंधोतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥
अजीर्णलिंगं सामान्यं विष्टंभो गौरवभ्रमः ॥ २ ॥
समेस्य रक्षणं कार्यं विषमे वातनिग्रहः ॥
तीक्ष्णे पित्तप्रतीकारो मंदे श्लेष्मविशोधनम् ॥ ३ ॥
वचालवणतोयेन वांतिरामे प्रशस्यते ॥
धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः ॥ ४ ॥
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥
विष्टंभे स्वेदनं कार्यं पेयं वा लवणोदकम् ॥
रसशेषे दिवास्वापो लंघनं वमनं तथा ॥ ५ ॥
व्यायामप्रमदाध्ववाहनरताक्लिन्नानतीसारिणः
शूलश्वासवतस्तृषामदमहाहिक्कामरुत्पीडितान् ॥
क्षीणान्क्षीणकफाञ्छिशून्मदहतान्वृद्धान्रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत्॥६॥

१ अग्नेः। २ अधोवायुको अभावहोय। ३ समाग्नेः पुंसः। ४ वातसंगमा। ५ अग्नरहितान्

पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत् ॥
मधुनोष्णोदकेनाथ मत्वा दोषगतिं भिषक् ॥ ७ ॥
चतुर्विधमजीर्णं तु मंदानलमथारुचिम् ॥
आध्मानं वातगुल्मं च शूलं चाशु विनाशयेत् ॥ ८ ॥
विडंगं नागरं कृष्णापथ्यावह्निविभीतकाः ॥
वचा गुडूची भल्लातं विषं चात्र प्रयोजयेत् ॥ ९ ॥
एतानि समभागानि गोमूत्रेणैव पेषयेत् ॥
गुंजाभा गुटिका कार्या दद्यादार्द्रकजै रसैः ॥ १० ॥
एकामजीर्णयुक्तस्य द्वे विपूच्यां च दापयेत् ॥
तिस्रो भुजंगदष्टस्य चतस्रः सन्निपातिनः ॥
गुटिका जीवनीनाम्ना संजीवयति मानवम् ॥ ११ ॥
इति संजीवनी गुटिका ॥
मातुलिंगं जटा व्योषं निशाबीजं करंजकम् ॥
कांजिकेनांजनं हन्याद्विपूचीमतिदारुणाम् ॥ १२ ॥
इति विषूचिकांजनम् ॥
हिंगुभागो भवेदेको वचा च द्विगुणा मता ॥
पिप्पली त्रिगुणा देया शृंगवेरं चतुर्गुणम् ॥ १३ ॥
यवानी स्यात्पंचगुणा षड्गुणा च हरीतकी ॥
चित्रकं सप्तगुणितं कुष्ठं चाष्टगुणं मतम् ॥ १४ ॥
एतद्वातहरं चूर्णं पीतमामप्रशांतये ॥
पिबेदभ्रा मस्तुना वा सुरया कोष्णवारिणा ॥ १५ ॥
सोदावर्त्तमजीर्णं च प्लीहानमुदरं तथा ॥
अंगानि यस्य दीर्यंते विषं वा येन भक्षितम् ॥ १६ ॥
चूर्णमग्निमुखं नाम्ना सर्वोपद्रवमाहरेत् ॥ १७ ॥
इत्यग्निमुखं चूर्णं वीरसिंहावलोकितः ॥

त्रिकटुकमजमोदा सैंधवं जीरके द्वे
समधरणधृतानामष्टमो हिंगुभागः ॥
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगान्निहंति ॥ १८ ॥
इति हिंग्वष्टकम् ॥

मणिमंथस्य भागौ द्वौ यवान्यास्तद्वदेव तु ॥
भागास्त्रयोऽजमोदाया नागरं भागपंचकम् ॥ १९ ॥
दश द्वौ च हरीतक्याः सूक्ष्मचूर्णानि कारयेत् ॥
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा ॥ २० ॥
पीतं जयत्यामवातं गुल्मह्रद्वस्तिजान्गदान् ॥
प्लीहानं ग्रंथिशूलादिमानाहं गुदजानि च ॥ २१ ॥
विबंधजठरारोगान्केचिद्वातसमुद्भवान् ॥
वातानुलोपनमिदं चूर्णं वैश्वानरं स्मृतम् ॥ २२ ॥
इति वृद्धवैश्वानरचूर्णं वृंदात् ॥

सिंधूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णांबुना पिबति यः खलु नष्टवह्निः ॥
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यशितमात्रमपि क्षणेन ॥ २३ ॥
इति लघुवैश्वानरचूर्णं योगरत्नावलीतः ॥

पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम्
सैंधवं च विडं चैव पत्रतालीसकेसरान् ॥ २४ ॥
एषां द्विपलिकान्भागान्पंच सौवर्चलस्य च ॥
मरिचाजाजिशुंठीनामेकैकस्य पलंपलम् ॥ २५ ॥

---

१ सैंधवलवण २ पीपर। ३ चितो। ४ पुंसः। ५ भुक्तमा-त्रम्। ६ पक्ज।

त्वगेलाचार्द्धभागः स्यात्सामुद्रात्कुडवद्वयम् ॥
दाडिमात्कुडवं चैव द्विपलं चाम्लवेतसम् ॥२६॥
एतच्चूर्णीकृतं श्लक्ष्णं सुगंधममृतोपमम् ॥
लवणं भास्करं नाम भास्करेण विनिर्मितम् ॥ २७ ॥
श्लेष्मवातं वातगुल्मं शूलमंदाग्न्यरोचकान् ॥
अन्यानपि निहंत्याशु रोगाल्लँवणभास्करः ॥२८॥

इति लवणभास्करचूर्णम् ॥

अर्कस्नुहीतिलाश्वत्थचिंचापामार्गवह्निजम् ॥
गृहीत्वा भस्म तस्मात्तु वस्त्रपूतं जलं हरेत् ॥ २९ ॥
मृद्वग्निना पचेत्तं तु यावल्लवणतां व्रजेत् ॥
तत्तुल्यावेव संग्राह्यौ द्वौ क्षारौ टंकणं तथा ॥ ३० ॥
सामुद्रं चापि गोदंतो कासीसं चापि सोरकम् ॥
द्विगुणं पंचलवणं शंखद्रावरसेन तु ॥ ३१ ॥
काचकूप्यां विनिक्षिप्य सप्ताहं त्वम्लयोगतः ॥
संधितं सकलं चूर्णं वारुणीयंत्रमुद्धरेत् ॥ ३२ ॥
द्रुतं तेजोजलप्रस्थं स्वच्छं स्रवति तत्तदा ॥
सर्वान्धातून्द्रावयति वराटानपि शंखकान् ॥ ३३ ॥
अजीर्णस्याथ मंदाग्नेः का वार्ता द्रावणे पुनः ॥
गुल्मप्लीहोदरं शूलमष्ठधापि विनाशयेत् ॥
वैद्यजीवनहेतुश्च शंखद्रावरसो स्वयम् ॥ ३४ ॥

इति शंखद्रावरसः ॥

अथ रसः ॥

---

१ समुद्रलवणम् । २ गोदन्त क्षारविशेष । ३ श्वेतकासीस । ४ सो
५ कासीससाराफिटकरीतुल्यकाना भक्षण । ६ वसितम् । ७ 
यन्त्रेण । ८ निर्मलं ।

शुद्धोरसः पलमितो द्विपलं गंधकं मतम् ॥
पलार्द्धं लोहभस्म स्यात्ताम्रमर्द्धपलं मतम्॥ ३५॥
सर्वं कज्जलिकीकृत्य लोहपात्रे विनिःक्षिपेत् ॥
चुल्ल्यामग्निं मृदुं दद्याद्यथा गंधो न दह्यते ॥ ३६ ॥
गोमयस्यालवाले तु पत्रं वातारिजं क्षिपेत् ॥
स्थापयेच्च रसं तत्र पत्रं चोपरि निक्षिपेत् ॥ ३७ ॥
वस्त्रशुद्धं ततः कृत्वा लोहपात्रे पुनः क्षिपेत् ॥
पुनस्तत्तापयेच्चुल्ल्यां मातुलुंगरसं ततः ॥ ३८ ॥
मानाच्छतपलं दद्यात्पंचकोलं तथैव च ॥
चुक्रस्य च तुलां दत्वा सिद्धं तच्च समुद्धरेत् ॥ ३९ ॥
एकं तद्गोलकं कृत्वा तत्समं टंकणं मतम् ॥
टंकणार्धं विषं दद्यान्मरिचं विषसम्मितम् ॥ ४० ॥
भावनाश्चणकक्षारैः सप्त दद्याद्विचक्षणः ॥
सिध्यत्येवं रसस्तं तु रसं माषद्वयात्मकम् ॥ ४१ ॥
सैंधवं माषमात्रं तु तक्रेण सह पाययेत् ॥
रसं क्रव्यादनामानं दद्यात्तं भोजनोपरि ॥ ४२ ॥
शीघ्रं तज्जारयेद्भुक्तं पुनर्भोजनमाचरेत् ॥
अनेन क्रमयोगेन सर्वव्याधिहरो रसः ॥ ४३ ॥

इतिक्रव्यादरसः एते रसार्णवतः॥

द्विपलं गंधकं शुद्धं द्रावयित्वा विनिःक्षिपेत् ॥
पारदं पलमानं तु मृतशुल्वायसी पुनः ॥ ४४ ॥
तोलमानेन संमिश्राः पंचागुंलदले क्षिपेत् ॥
ततो विचूर्ण्य यत्नेन लोहपात्रे विनिःक्षिपेत् ॥४५॥
मृद्वग्निना पचेत्तं तु दर्व्या संचालयन्मुहुः ॥

१ गोपुरीषस्य । २ थामरो । ३ एरण्डजम् । ४ ताम्रेश्वर । ५सार ।६ एरण्डपत्रे।

पलमात्ररसं सम्यग्दद्याज्जंबीरकस्य तु ॥
संचूर्ण्य पंचकोलोत्थैः कषायैः साम्लवेतसैः ॥ ४६ ॥
भावना किल दातव्याः पंचाशत्प्रमिताः पृथक् ॥
भ्रष्टटंकणचूर्णेन तुल्येन सह मेलयेत् ॥ ४७ ॥
तदर्धं कृष्णलवणं मरिचं सर्वतुल्यकम् ॥
सप्तधा भावयेत्पश्चाच्चणकक्षारवारिणा ॥ ४८ ॥
ततः संशोष्य संपेष्य कूप्याश्च जठरे क्षिपेत् ॥
अत्यर्थं गुरुमांसानि गुरुभोज्यान्यनेकशः ॥ ४९ ॥
भुक्तानि कंठपर्यंतं चतुर्वल्लमितो रसः
कट्वम्लतक्रसहितः पीतमात्रो हि पाचयेत् ॥५० ॥
पुनर्भोजयति क्षिप्रं का पुनर्मंदवह्निता ॥
रसः क्रव्यादनामायं प्रोक्तो मंथानभैरवात् ॥ ५१ ॥
सिंहलक्षोणिपालस्य भूरिमांसप्रियस्य च ॥
दिष्टो ग्रामं समासाद्य भैरवानंदयोगिना ॥ ५२ ॥
कुर्याद्दीपनमूर्ध्वजत्रुगदहृद्दुद्दामसंशोधनं
तुंदस्थौल्यनिवर्हणो गदहरः शूलार्तिशूलापहः ॥
गुल्मप्लीहविनाशको बहुरुजां विध्वंसनो वातहा
वातग्रंथिमहोदरापहरणः क्रव्यादनामा रसः ॥ ५३ ॥

इति बृहत्क्रव्यादरसः मंथानभैरवात् ॥

चिंचाऽश्वत्थस्नुहीक्षारादपामार्गार्कतस्तथा ॥
लवणं पंच संगृह्य ततो लवणपंचकम् ॥ ५४ ॥
सैंधवाढ्यं समादाय सर्वमेतत्पलद्वयम् ॥
कर्षंकर्षं विषं गंधं रसं टंकणकं तथा ॥ ५५ ॥
हिंगुपिप्पलिशुंठीनां तथा मरिचजीरयोः ॥

१ सिंहलदेशराज्ञः । २ कथितः । ३ आगत्य ४ उदरशोथ । ५ क्षारम्

द्वौ द्वौ कर्षौ पृथक्कार्यौ तथा द्वौ शंखचूर्णतः ॥ ५६ ॥
पलत्रयाच्च कर्षैकं द्विकर्षं तु लवंगतः ॥
एतत्सर्वं समालोड्य श्लक्ष्णचूर्णीकृतं शुभम् ॥५७ ॥
भावयेदम्लयोगेन सप्तधा तु प्रयत्नतः ॥
रसः शंखवटी नाम्ना सेवितः सर्वरोगजित् ॥ ५८ ॥
गुंजामात्रमिदं खादेद्भवेद्दीपनपाचनम् ॥
अजीर्णं वातसंभूतं पित्तश्लेष्मभवं तथा ॥
विषूचीं शूलमानाहं हन्यादत्र न संशयः ॥५९॥
इति शंखवटी रसार्णवतः ॥
अथ भस्मकरोगनिदानचिकित्सा ॥
कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम् ॥
तीव्रं प्रवर्धयेदग्निं तदा तं भस्मकं वदेत् ॥ १ ॥
तृड्दाहश्वासमूर्छादीन्कृत्वैवात्यग्निसंभवान् ॥
पक्त्वान्नमाशु धात्वादीन्स क्षिप्रं नाशयेत्तनुम् ॥ २ ॥
तं भस्मकं गुरुस्निग्धसांद्रमंदहिमस्थिरैः ॥
अन्नपानैर्नयेच्छांतिं पित्तघ्नैश्च विरेचनैः ॥ ३॥
माहिषं दधि दुग्धं च माहिषं भस्मकापहम् ॥
असकृत्पित्तहरणं पायसाज्यस्य भोजनम् ॥ ४ ॥
कोलास्थिमज्जकल्कस्तु पीतो वाप्युदकेन वै ॥
अचिराद्विनिहंत्येष प्रयोगो भस्मकं नृणाम् ॥ ५ ॥
नारीक्षीरेण संपिष्टां पिबेदौदुंबरत्वचम् ॥
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशांतये ॥ ६ ॥
सिततंडुलसितंकरभीक्षीरेण पायसं सिद्धम् ॥
भुक्त्वा घृतेन पुरुषो द्वादशदिवसान्न बुभुक्षितो न भवेत्॥७

१ भोज्यैः। २ इंद्रवैः। ३ खीर। ४ गूलर। ५ स्वेतऊंटनी।

विदारीस्वरसक्षीरे पचेदष्टगुणं घृतम् ॥
माहिषं जीवनीयेन कल्केनात्यग्निनाशनम् ॥ ८ ॥

इति भस्मकरोगचिकित्सा ॥

अथ अजीर्णम् ॥

पारदं च विषं गंधं टंकणं समभागतः ॥
मरिचस्याष्टभागाः स्युर्द्वौद्वौ शंखवराटयोः ॥ १ ॥
पक्वजंबीरजैर्गाढं रसैः सप्त विभावयेत् ॥
गुंजाद्वयमितो देयो रसो ह्यग्निकुमारकः ॥ २ ॥
समीरणसमुद्भूतमजीर्णं च विषूचिकाम् ॥
क्षणेन क्षपयत्येष कफरोगनिकृंतनः ॥ ३ ॥

इत्यग्निकुमारो रसः रसेंद्रचिंतामणेः ॥

हंसांघ्रिटंकणमरीचकणामृतं चे-
ज्जंबीरनीरपरिमर्दितमर्कयामे ॥
सानंदभैरवगुटी त्रियवप्रमाणा
सर्वामयप्रशमनी विविधानुपाना ॥ ४ ॥
कर्षं सूतं द्विधा गंधं त्रिभागं भस्म तीक्ष्णजम् ॥
त्रिभिः समं विषं योज्यं चित्रकद्रवभावितम् ॥ ५ ॥
द्विधात्रिकटुकं योज्यं लवंगैले तु सप्तमे ॥
जातीफलं जातिपत्रं चार्द्धभागमितं मतम् ॥ ६॥
तदर्द्धं पंचलवणं स्नुह्यर्कौ चापि तिंतिणी ॥
अपामार्गोश्वत्थ एषां लवणं च पलार्द्धकम् ॥ ७ ॥
टंकणं च यवक्षारं सर्जिका हिंगु जीरकम् ॥
हरीतकी सूततुल्या मर्दयेदम्लयोगतः ॥ ८ ॥
धूर्त्तबीजस्य भस्मानि सर्वसमभागतः ॥

१ विषम्। २ मरर२२। ३ लोहजम्। ४ स्नुह्यादीनाम्। ५ कर्ष

रसः पाशुपतो नाम प्रोक्तः प्रत्ययकारकः ॥ ९ ॥
गुंजामात्रा वटी कार्या सर्वाजीर्णविनाशिनी ॥
तालमूलीतक्रयोगादुदरामयनाशिनी ॥ १० ॥
मोचारसेनातिसारं ग्रहणीं तक्रसैंधवैः ॥
शूले नागरकं शस्तं हिंगुसौवर्चलान्वितम् ॥ ११ ॥
अर्शःसु तक्रेण युता पिप्पली राजयक्ष्मणि ॥
वातरोगं निहंत्याशु शुंठी सौवर्चलान्विता ॥ १२ ॥
गुडूची शर्करायोगात्पित्तरोगविनाशिनी ॥
पिप्पली क्षौद्रयोगेन श्लेष्मरोगं निकृंतति ॥
अतः परतरं नास्ति धन्वंतरिमते स्थितम् ॥ १३ ॥

इति पाशुपताख्यो रसः धन्वंतरिमतात् ॥

दरदं च विषं गंधं त्रिकटु त्रिफला समम् ॥
जातीफलं लवंगं च लवणानि च पंच वै ॥ १४ ॥
सर्वमेतत्कृतं चूर्णमम्लयोगेन सप्तधा ॥
भावयित्वा वटी कार्या गुंजार्धप्रमिता बुधैः ॥ १५ ॥
रसो ह्यादित्यसंज्ञोयमजीर्णक्षयकारकः ॥
भुक्तमात्रं पाचयति जठरानलदीपनः ॥ १६ ॥

इत्यादित्यरसः रससिंधोः ॥

सूतं गंधं विषं तुल्यं मर्दयेदार्द्रकद्रवैः ॥
अश्वत्थार्चिचापामार्गक्षाराः क्षारौ च टंकणम् ॥ १७ ॥
जातीफलं लवंगं च त्रिकटु त्रिफलासमम् ॥
शंखक्षारं त्रिलवणं हिंगुर्जीरं द्विभागकम् ॥ १८ ॥
मर्दयेदम्लयोगेन गुंजामात्रा वटी शुभा ॥
पाचनी दीपनी सद्यो जीर्णशूलविसूचिकाः ॥ १९ ॥

---
१ तालमखाने।

हिक्कां गुल्मं च मोहं च नाशयेन्नात्र संशयः ॥
रसेंद्रसंहितायाश्च नाम्ना ह्यग्निमुखो रसः ॥ २० ॥
इत्यग्निमुखो रसः ॥
शुद्धं सूतं गंधकं च पलमानं पृथक्पृथक् ॥
हरीतकी च द्विपला नागरस्त्रिपलः स्मृतः ॥ २१ ॥
कृष्णा च मरिचं तद्वत्सिंधूत्थं त्रिपलं मतम् ॥
चतुःपला च विजया मर्दयेन्निंबुकद्रवैः ॥ २२ ॥
पुटानि सप्त देयानि घर्ममध्ये पुनःपुनः ॥
अजीर्णारिरयं प्रोक्तः सद्योदीपनपाचनः ॥ २३ ॥
भक्षयेद्विगुणं भक्ष्यं पाचयेद्रेचयत्यपि ॥
इत्यजीर्णारी रसेंद्रचिंतामणेः ॥
शुंठीपारदगंधकामृतपटुश्रीपुष्पसट्टंकणं
द्विर्द्विः शंखकपर्दकौ वसुगुणं कृष्णोषणं सद्रसात् ॥२४॥
जंबीरस्य परिस्रुतं दृढतरं संमर्दमुन्याह्वैः
सिद्धे वल्लमितोऽग्निदीप्तिकृदयं चंडाग्निनामा रसः ॥ २५ ॥
इति चंडाग्निरसः ॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ॥
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ २६ ॥
इति श्रीयोगतरंगिण्यामजीर्णचिकित्सासमाप्ता ॥
अथ कृमिः ॥
ज्वरो विवर्णता शूलं हृद्रोगः श्वसनं भ्रमः ॥
भक्तद्वेषोतिसारश्च संजातकृमिलक्षणम् ॥ १ ॥
रुग्विनिश्चयात् ॥

१ लौंग। २ भूनो हागे। ३ अष्टगुणम्। ४ अगस्तियापुष्परसैः ५ कर्दनपाठः।

निखिला नयति विनाशं लिक्षासहिता दिनैर्यूकाः॥११

इति विडंगादितैलम् ॥

रसेंद्रेण समायुक्तो रसो धत्तूरपत्रजः ॥
तांबूलपत्रजो वापि लेपनं यौकनाशनम् ॥ १२ ॥

इति रसादिलेपः वृंदात् ॥ अथ रसः ॥

क्रमेण वृद्धं रसगंधकाजमोदाविडंगं विषमुष्टिका च ॥
पलाशबीजं च विचूर्ण्यमस्य निष्कप्रमाणं मधुनावलीढं॥
पिबेत्कषायं घनजं तदूर्ध्वं रसोयमुक्तः कृमिमुद्गराख्यः॥
कृमीन्निहंतिकृमिजांश्चरोगान्संदीपयत्यग्निमयं त्रिरात्रात्

रसरत्नप्रदीपात् ॥

इति श्रीयोगतरंगिण्यां कृमिचिकित्सा नाम
चतुर्विंशस्तरंगः ॥ २४ ॥

---

पंचविंशस्तरंगः ॥

अथ पांडुः ॥

पांडुरः श्वासकासार्तः पीतलङ्नखलोचनः ॥
वन्ह्यग्निसादश्वयथुसहितः पांडुरोगवान् ॥ १ ॥

इति रसरत्नप्रदीपात्॥

फलत्रिकामृतावासातिक्ताभूनिंबनिंबजः ॥
क्वाथः क्षौद्रयुतो हन्यात्पांडुरोगं सकामलम् ॥ २ ॥
लोहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजिनः ॥
पिबेत्पांड्वामयी शोथी ग्रहणीदोषपीडितः ॥ ३ ॥

वृंदात् ॥

लोहचूर्णं निशायुग्मं त्रिफलाकटुरोहिणी ॥
प्रलिह्यान्मधुसर्पिर्भ्यां कामलार्तः सुखी भवेत् ॥ ४ ॥

---

१ कुनता ।

इति सर्वसंग्रहात् ॥
रेचनं कामलार्तानां पृथग्वा कारयेद्भिषक् ॥
ततः प्रशमनोपायः कर्तव्यो बुद्धिपूर्वकम् ॥ ५ ॥
दंतीकल्कं समगुडं शीतवारिपरिप्लुतम् ॥
विरेचनं मुख्यतमं कामलाया विनाशकम् ॥ ६ ॥
अयोरजोव्योपविडंगचूर्णं
लिहेद्धरिद्रां त्रिफलान्वितां वा ॥
सशर्करां कामलिनां त्रिभंडी
हिता गवाक्षी सगुडा च शुंठी ॥ ७ ॥
सदार्वीत्रिफलाव्योपविडंगमयसो रजः ॥
मधुसर्पियुतं लिह्यात्पांडुरोगं सकामलाम् ॥ ८ ॥
त्रिफलाया गुडूच्या वा दार्व्या निंबस्य वा रसः ॥
प्रातःप्रातर्मधुयुतं कामलार्तः पिबेन्नरः ॥ ९ ॥
इति वृंदात् ॥
रसमामलकानां तु संशुद्धं यंत्रपीडितम् ॥
द्रोणं पचेत्तन्मृद्वग्नौ तत्र चेमानि दापयेत् ॥ १० ॥
चूर्णितं पिप्पलीप्रस्थं मधुकं द्विपलं तथा ॥
प्रस्थं गोस्तनिकायाश्च द्राक्षायाः कल्कपेषितम् ॥ ११ ॥
शृंगबेरपलं पंच तुगा क्षीर्याः पलद्वयम् ॥
तुलार्द्धं शर्करायाश्च घनीभूतं समुद्धरेत् ॥ १२ ॥
मधुप्रस्थसमायुक्तं लेहयेत्पलमात्रकम् ॥
हलीमकं कामलां च पांडुत्वं चापकर्षति ॥
जलदोषमतीसारं नियच्छति न संशयः ॥ १३ ॥
इति आमलक्यावलेहः सारसंग्रहात् ॥

---

१ गोभी। २ मुठेठी। ३

अथ रसः ११।

त्र्यूषणत्रिफलामुस्तविडंगदहनाः समाः ॥
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ॥
भक्षयेत्पांडुहृद्रोगकुष्ठार्शःकामलापहम् ॥ १४ ॥

इति नवायसं चूर्णं योगसारात् ॥

त्र्यूषणं त्रिफला मुस्तं विडंगं चव्यचित्रकौ ॥
दार्वी त्वङ् माक्षिको धातुर्ग्रंथिकं देवदारु च ॥ १५ ॥
एषां द्विपलभागानां चूर्णं कृत्वा पृथग्पृथक् ॥
मंडूरं द्विगुणं चूर्णाज्जीर्णमंजनसन्निभम् ॥ १६ ॥
गोमूत्रेऽष्टगुणे पक्का तस्मिंस्तत्प्रक्षिपेत्ततः ॥
उदुंबरसमान्कुर्याद्वटकांस्तान्यथोचितान् ॥ १७ ॥
उपभुंजीत तक्रेण सात्म्यं जीर्णे च भोजनम् ॥
मंडूरवटका ह्येते प्राणदा पांडुरोगिणाम् ॥ १८ ॥

मंडूरवटकः योगसारात् ॥

धात्री लोहरजो व्योषं निशा क्षौद्राज्यशर्करा ॥
लेहो निवारयत्याशु कामलामुद्धतामपि ॥ १९ ॥
अंजनं कामलार्तानां द्रोणपुष्पीरसस्य तु ॥
निशागैरिकधात्रीणां चूर्णं चोपरिमेलयेत् ॥ २० ॥
दग्ध्वाक्षकाष्ठैर्मलमायसं च गोमूत्रनिर्वापितसप्तवारम् ॥
विचूर्ण्य लीढं मधुना चिरेण कुंभाह्वयं पांडुगदं निहन्यात्॥

इति वीरसिंहावलोकतः ॥

अतिशुद्धमयोभस्म मधुक्षौद्रयुतं लिहेत् ॥
पांडुरोगस्[१] नाशाय कामलानां च सर्वशः ॥ २२ ॥
.पि२.

---

१ शीतो। २ स्वर्णर मयोगात्। किट्टम्।

चंपकं चंदनं वारि पर्पटोशीरपद्मकम् ॥
मंजिष्ठातिविषा मोचा वासेंद्रयवपिप्पली ॥ २३ ॥
केसरं धातकी पाठा मुस्ता शुंठी च बिल्वजम् ॥
उत्पलं दाडिमीबीजं जंबूबीजं त्वचामयम् ॥ २४ ॥
एला च चंदनं रक्तं माषचूर्णं रसांजनम् ॥
तालीसं च समांशानि शर्करा च चतुर्गुणा ॥ २५ ॥
हारिद्रिके पांडुरोगे प्रमेहे रक्तपित्तके ॥
कासे श्वासे च हिक्कायां मूत्रकृच्छ्रे च दारुणे ॥ २६ ॥
इति चंपकादिचूर्णम् ॥
पांडुरोगे कामलायां यान्युक्तान्यौषधानि च ॥
तानि सर्वाणि योज्यानि रोगे चापि हलीमके ॥ २७ ॥
इति वृंदात् योगरत्नावल्याः ॥
यवगोधूमशालीनां मृदुजांगलजै रसैः ॥
मुद्गाढकीमसूराद्यैः प्रायो भोजनमिष्यते ॥ २८ ॥
अथ रसः ॥
पलानि चत्वारि रसस्य पंच
गंधस्य सत्त्वस्य गुडूचिकायाः ॥
व्योषस्य चूर्णस्य च तालमूल्याः
सशाल्मलस्येह पलत्रयं स्यात् ॥ २९ ॥
पृथक्पृथक्पङ्गनस्य चाष्टौ
लोहस्य सर्वं त्रिफलाजलेन ॥
घृष्टं चतुःषष्टिमितं तदर्धाः
स्युर्भावना मार्कवजद्रवस्य ॥ ३० ॥
शिग्रूत्थनीरेण च क्षीरसूरणे

१ नेत्रवाला। २ वालकुर्त ३ /

तथानलोत्था गृहकन्यकायाः ॥
आर्द्रद्रवस्येति रसोयमुक्तः
पांडुक्षयश्वासगदादिहंता ॥
क्षौद्रेण वा शर्करया घृतेन
कर्षार्धमेतस्य भजेत्प्रयत्नात् ॥ २१ ॥

इति त्रैलोक्यनाथो रसः रसरत्नप्रदीपात्

इति श्रीयोगतरंगिण्यां पांडुकामलाकुंभकामलाचिकित्सा नाम पंचविंशस्तरंगः ॥ २५ ॥

---

षड्विंशस्तरंगः ।

अथ रक्तपित्तम् ॥

क्षारकट्वम्लतीक्ष्णादेर्दग्धं पित्तं दहत्यसृक् ॥
तदूर्ध्वाधोविलैर्याति रक्तपित्तं तदुच्यते ॥ १ ॥
अधः प्रवृत्तं वमनैरूर्ध्वगं च विरेचनैः ॥
जयेदंन्यतराद्वापि क्षीणस्य शमनैः पृथक् ॥ २ ॥
अतिप्रवृद्धदोषस्य पूर्वं लोहितपित्तिनः ॥
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥ ३ ॥
लंघितस्य ततो युक्त्या लध्वन्नमवचारयेत् ॥
पाचनं तर्प्पणं लेहसर्पींषि विविधानि च ॥ ४ ॥
द्राक्षामधूककाश्मर्यसितायुक्तं विरेचनम् ॥
यष्टीमधूकसंयुक्तं सक्षौद्रं वमनं हितम् ॥ ५ ॥
पयांसि शीतानि रसाश्च जांगलाः

चान्यान्यपि स्युः किलपित्तहानि ॥ ६ ॥

इतिवृंदात् ॥

पक्वोदुंबरकाश्मर्य्यैः पथ्या खर्जूरगोस्तनी ॥
मधुना हंति संलीढा रक्तपित्तं न संशयः ॥ ७ ॥
दुर्वासोत्पलकिंजल्कमंजिष्ठा सैलवालुका ॥
मूर्वा लोध्रमुशीरं च मुस्ता चंदनपद्मकौ ॥ ८ ॥
द्राक्षामधुकपथ्या च काश्मीरं चंदनं सितम् ॥
एतैः पिष्टैः कर्षमात्रैर्घृतप्रस्थं विपाचयेत् ॥ ९ ॥
अजाक्षीरं तंदुलांबु पृथग्दत्वा चतुर्गुणम् ॥
तत्पानं वमतां रक्तं नावनं नासिकागते ॥ १० ॥
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुर्गते च रक्ते च पूरयेत्तेन चक्षुषी ॥ ११ ॥
मेढ्रे पायुगते वापि सर्वत्रैव प्रयोजयेत् ॥
प्रवृत्तं रोमकूपेभ्यो अभ्यंगेन जयेद्ध्रुवम् ॥ १२ ॥

इति दूर्वाद्यं घृतं वृंदात् ॥

तुलामादाय वासायाः पचेदष्टगुणे जले ॥
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ १३ ॥
चूर्णानामभयानां च खंडाच्छतपलं तथा ॥
शीतीभूते निदिध्यात्तु क्षौद्रस्याष्टौ पलानि च ॥ १४ ॥
वंशोद्भवायाश्चत्वारि पिप्पल्या द्विपलं तथा ॥
चातुर्जातपलं त्वेकं चूर्णितं तत्र दापयेत् ॥ १५ ॥
रक्तपित्तं निहंत्याशु कासं श्वासं तथा क्षयम् ॥
विद्रधिं जठरं गुल्मं तृष्णाहृद्रोगपीनसान् ॥
पलार्द्धं भोजनं चास्य यथेष्टं तत्र भोजनम् ॥ १६ ॥

१ एतुभा ।

इति वासाहरीतकी योगरत्नावलीतः ॥
चंदनं नलदं लोध्रमुशीरं पद्मकेसरम् ॥
नागपुष्पं[१] च विल्वं च भद्रमुस्तं[२] सशर्करम् ॥ १७ ॥
ह्रीवेरं चैव पाठा च कुटजोत्पलमेव च ॥
शृंगवेरं[३] सातिविषा धातकी सरसांजना ॥ १८ ॥
आम्रास्थि जंबूसारास्थि तथा मोचरसोपि च ॥
नीलोत्पलं समंगा च सूक्ष्मैलादाडिमत्वचः ॥ १९ ॥
चतुर्विंशतिरेतानि समभागानि कारयेत् ॥
तंडुलोदकसंयुक्तं मधुना सह योजयेत् ॥ २० ॥
योगं लोहितपित्तानामर्शसां ज्वरिणां तथा ॥
मूर्च्छामदोपसृष्टानां तृष्णार्त्तानां प्रदापयेत् ॥ २१ ॥
अतीसारं तथा छर्दि स्त्रीणां चापि रजोग्रहम् ॥
प्रच्युतानां च गर्भाणां स्थापनं परमिष्यते ॥ २२ ॥
अश्विनोः संमतो योगो रक्तपित्तनिवर्हणः ॥ २३ ॥
इति चंदनाद्यं चूर्णम् ॥
कूष्मांडकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ॥
पचेत्तप्ते घृते प्रस्थे पात्रे ताम्रमये दृढे ॥ २४ ॥
यदा मधुनिभानि स्युस्तदा खंडशतं न्यसेत् ॥
पिप्पलीशृंगवेराभ्यां द्वे पले जीरकस्य च ॥ २५ ॥
त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम् ॥
न्यसेच्चूर्णीकृतं तत्र दार्व्या संघट्टयेत्ततः ॥ २६ ॥
तत्पक्कं स्थापयेद्भांडे दत्वा क्षौद्रं घृतार्धकम् ॥
तद्यथाग्निबलं खादेद्रक्तपित्तक्षतक्षयी ॥ २७ ॥
कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः ॥

---

१ नागकेसरम्। २ नागरमोथा। ३ आर्द्रकम्

वृष्यं पुंनर्न्नवकरं बलवर्णप्रसाधनम् ॥ २८ ॥
उरःसंधानकरणं वृंहणं स्वरबोधनम् ॥
अश्विभ्यां निर्मितं श्रेष्ठं कूष्मांडकरसायनम् ॥ २९ ॥
इति कूष्मांडकम् ॥
मध्वाटरूपकरसौ यदि तुल्यभागौ
कृत्वा नरः पिबति पुण्यतरः प्रभाते ॥
तद्रक्तपित्तमपि दारुणमप्यवश्य-
माशु प्रशाम्यति जलैरिव वह्निपुंजः ॥ ३० ॥
इति राजमार्तंडात् ॥
तुलामादाय वासायाः पचेदष्टगुणे जले ॥
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ ३१ ॥
चूर्णानामभयानां तु खंडाच्छतपलं तथा ॥
द्वे पले पिप्पलीचूर्णात्सिद्धे शीते च माक्षिकात् ॥ ३२ ॥
कुडवं पलमानं तु चातुर्जातं सुचूर्णितम् ॥
क्षिप्त्वावलोड्य तं खादेद्रक्तपित्ती क्षयक्षयी ॥
कासश्वासगृहीतश्च यक्ष्मवांश्च विशेषतः ॥ ३३ ॥
इति वासाखंडः ।
शतावरीमुंडितिकावलामृता-
फलत्वचः पुष्करमूलभार्गी ॥
वृषो वृहत्यौ खदिरं च मूसली
पृथक्पृथक् पंचपलानिमानि ॥ ३४ ॥
पक्कं जले द्रोणमितेष्टमांशं
यावद्भवेच्छेपमथैव पूतम् ॥

१ नवीन । २ मुंडी । ३ त्रिफला । ४ मात्रः इत्यपि- पाठः ।

विमूर्छितस्यात्र निधाय धीमान्
पलानि ज द्वादश माक्षिकस्य॥ ३५॥
तथा सुचूर्णस्य च लोहजस्य
विघट्टितं खंडधृतं च तुल्यम्॥
देयं पलं षोडशकं विधिज्ञै-
र्विपाचयेल्लोहमये च पात्रे॥ ३६॥
गुडेन तुल्यं च यदा भवेत्तदा
तुगा विडंगं मगधा च शुंठी॥
द्वे जीरके कर्कटकं फलानां
त्रिकं च धान्यं मरिचं सकेसरम्॥ ३७॥
पलेन मात्रां विदधीत तत्पृथक्
सुघट्टितं चूर्णमिदं घृते च॥
स्निग्धे कटाहे प्रणिधाय युंज्या-
त्कर्षप्रमाणं विदधीत लोहम्॥३८॥
प्रभातकाले च सदुग्धपानं
गुरूणि चान्नानि च भोजनानि॥
रक्तं सपित्तं सहसा निहंति
रक्तप्रवाहं च सरक्तशूलम्॥ ३९॥
रक्तातिसारं रुधिरप्रमेहं
तथैव वस्तौ विहितं नराणाम्॥
भगंदरार्शःश्वयथूंन्निहंति
तथाम्लपित्तं किल राजरोगम्॥ ४०॥
विशेषतः कुष्ठरुजश्च गुल्मान्
बलप्रदं वृष्यतमं प्रदिष्टम्॥ ४१॥

---

१ शुद्धस्य। २ ककोटा। ३ चूर्णं।

इति खंडखाद्यं लोहम् ॥

शुद्धपारदबलिप्रवालकं
हेममाक्षिकभुजंगरंगकम् ॥
मारितं सकलमेतदुत्तमं
भावयेत्पृथगतोद्रवैस्त्रिशः ॥ ४२ ॥
चंदनस्य कमलस्य मालती कोरकस्य वृषपल्लवस्य च ॥
धान्यवारणबुसांशतावरी शाल्मलीवटजटामृतस्य च ॥
रक्तपित्तकुलकंडनाभिधो
जायते रसवरोस्त्रपित्तिनाम् ॥
प्राणदो मधुवृषद्रवैरयं
सेवितस्तु वसुकृष्णलामितः ॥ ४४ ॥
नास्त्यनेन सममत्र भूतले
भेषजं किमपि रक्तपित्तिनाम् ॥ ४५ ॥
रक्तपित्तकुलकंडनाभिधो रसः रसेंद्रचिंतामणेः ॥
इति श्रीयोगतरंगिण्यां रक्तपित्तचिकित्सा नाम
षड्त्रिंशस्तरंगः ॥

सप्तत्रिंशस्तरंगः ।

अथ क्षयः ॥

श्लेष्माधिक्याद्व्यवायाद्यैः पीडितो यः प्रशुष्यति ॥
कासश्वासार्दितो रक्तं वमेच्छुक्लेक्षणो ज्वरी ॥ १ ॥
अग्निमांद्यतृपायुक्तो रिरंसुर्मांसलोलुपः ॥
विस्वरश्छर्दिमान्दीनः स ज्ञेयः क्षयपीडितः ॥ २ ॥
शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ॥

---

१ मूला । २ सीसा । ३ रांग । ४ चमेली कली । ५ अडूसा । ६ मिटुवी । ७ अष्टतुलप्रमाणः ।

मद्यानि जांगलाः पक्षिमृगाः शस्ता विशुष्यतः ॥ ३ ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥ ४ ॥
तेन षट् विनिवर्तंते विकाराः पीनसादयः ॥
द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् ॥
पादस्थं संस्कृतं चाज्ये षडंगो यूष उच्यते ॥ ५ ॥

इति सुश्रुतात् ॥

रास्नाकर्पूरतालीसभेकेपर्णी शिलाजतु ॥
त्रिकटुत्रिफलामुस्तविडंगदहनाः समाः ॥ ६ ॥
चतुर्दशायसो भागास्तच्चूर्णं मधुसर्पिषा ॥
लीढं कासं ज्वरं श्वासं राजयक्ष्माणमेव च ॥
बलवर्णाग्निपुष्टीनां वर्धनं दोषनाशनम् ॥ ७ ॥

इति चतुर्दशांगलोहम् ॥

द्विपंचमूलीजलसिद्धमाज्यं वासाघृतं वाप्यथ षट्पलं वा
हितं पयश्छागलमव्यवाये प्रयुज्यते नागबलाभिधानम्

शृंगी चामलकी फलत्रिकबलाछिन्नाविदारी सटी
जीवंती दशमूलचंदनघनैर्नीलोत्पलैलाघृतैः ॥
मृद्वीकाष्टकवर्गपौष्करयुतैः सार्द्धं पृथक्पालिकै-
स्त्द्रोणेन शतानि पंच विपचेद्धात्रीफलानामतः ॥९
उद्धृत्यामलकानि तैलघृतयोः षड्भिश्च षड्भिः पलै-
र्भ्रष्टान्यर्द्धतुलां निधाय विधिवन्मीनांडिकायाः पचेत्
शीते षण्मधुनः पलानि कुडवो वांश्याश्चतुर्जाततो
मुंष्टिर्मागधिकापलद्वयमयं प्राशः स्मृतश्चावनः ॥१०

१ पुंसः। २ षड्रूपराजयक्ष्मा। ३ मेडरुपर्णा। ४ चीनो। ५ घृत। ६ मैथुनरहिते पुंसि। ७ घृत। ८ गिलोय। ९ पलैः। १० पलप्रमाणम्।

न शोषः साफल्यं व्रजति वपुषि क्षीयमाणेपि जंतो-
र्न मूर्छा न छर्दिस्तृडपि च न श्वासकासादायश्च ॥
न चालक्ष्मीर्विघ्नं क्वचिदपि च न व्यापदः संभवंति
प्रयोगादेतस्मान्मनसि च धियो विश्रति भ्रांतिमंतः
इति च्यवनप्राशः चिकित्सातः ॥
वासकस्य रसप्रस्थो माक्षिकं सितशर्करा ॥
पिप्पलीद्विपलं चैव दत्वा मृद्वग्निना पचेत् ॥ १२ ॥
लेहीभूते ततः पश्चाद्दद्यात् क्षौद्रं पलाष्टकम् ॥
दत्वावतारयेद्वैद्यो मात्रया लेहमुत्तमम् ॥ १३ ॥
निहंति राजयक्ष्माणं दुर्नामानि बहून्यपि ॥
पार्श्वशूलं च हृच्छूलं ज्वरं चाशु व्यपोहति ॥ १४ ॥
इति वासालेहः योगशतात् ॥
फलत्रिकक्वाथविशुद्धमादौ
शुद्धं गुडूच्या दशमूलशुद्धम् ॥
स्थिरादिकाकोलियुगादिसिद्धं
शिलाजतु स्यात्क्षयिषु प्रसिद्धम् ॥ १५ ॥
इति चरकात् ॥
हेमाद्याः सूर्यसंतापाद्रवंति गिरिधातवः ॥
जलाभं मृदु कृष्णाभं तद्वदंति शिलाजतुम् ॥ १६ ॥
तालीसपत्रं मरिचं नागरं पिप्पली शुभाः ॥
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥ १७ ॥
पिप्पल्यष्टगुणा चात्र प्रदेयासितशर्करा ॥
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पांडुग्रहणीदोषप्लीहशोषज्वरापहम् ॥ १८ ॥

---

१ श्रुनि ।

इति तालीसाद्यं चूर्णम् ॥

मृद्वीकायास्तुलार्धं तु द्विद्रोणेऽपां विपाचयेत् ॥
चतुर्थशेषे तस्मिंस्तु पूते शीते प्रदापयेत् ॥ १९ ॥
गुडस्य द्वितुलां दत्वा तत्सर्वं घृतभाजने ॥
विडंगं फलिनी कृष्णा त्वगेला पत्रकेसरम् ॥ २० ॥
मरिचं च भिषक्चूर्णं सम्यकृत्वा विचक्षणः ॥
क्षिपेच्च पलिकैर्भागैः स्थापयेच्च कियद्दिनम् ॥ २१ ॥
ततो यथाबलं पीत्वा कासश्वासगलामयान् ॥
हंति यक्ष्माणमत्युग्रमुरःसंधानकारकम् ॥ २२ ॥
चतुर्थभागं द्राक्षाया धातुकीमत्र केचन ॥
प्रयच्छंति ततो वीर्यमेतस्योच्चैः प्रजायते ॥ २३ ॥

इति मृद्वीकासवः ॥

त्रिकटुत्रिफलाभिश्च जातीफललवंगकैः ॥
नवभागोन्मितैरेतैः समं तीक्ष्णं मृतं भवेत् ॥ २४ ॥
संचूर्ण्य लोडयेत्क्षौद्रैर्नित्यमत्ति च मानवः ॥
कासं श्वासं क्षयं मेहं पांडुरोगं भगंदरम् ॥
ज्वरं मंदानलं शोथं संमोहं ग्रहणीं जयेत् ॥ २५ ॥

इतिबृहच्चवायसचूर्णम् ॥

सितोपला षोडश स्यादष्टौ स्याद्वंशलोचनः ॥
पिप्पली स्याच्चतुःकर्षा स्यादेला च द्विकार्षिकी ॥ २६ ॥
एककर्षा च त्वक्कार्या चूर्णयेत्सर्वमेकतः ॥
सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत् ॥ २७ ॥
कासश्वासक्षयहरं हस्तपादांगदाहजित् ॥

---

१ लोह ।

मंदाग्निसुप्तजिह्वत्वं पार्श्वशूलमरोचकम् ॥
ज्वरमूर्ध्वगतं रक्तपित्तमाशु व्यपोहति ॥ २८ ॥
इति सितोपलाद्यं चूर्णम् ॥
पिप्पलीलोध्रमरिचपाठाधात्र्येलवालुकैः ॥
चव्यचित्रकजंतुघ्नक्रमुकोशीरचंदनैः ॥ २९ ॥
मुस्ताप्रियंगुलवलीहरिद्राभिसिपल्लवैः ॥
पत्रत्वक्कुष्ठतगरनागकेसरसंयुतैः ॥ ३० ॥
भागैः स्यादर्द्धपलिकैर्द्राक्षां पष्टिपलं क्षिपेत् ॥
पलानि शतं धातुक्या गुडस्य च शतत्रयम् ॥ ३१ ॥
तोयार्मणद्वये सिद्धं भवत्येतत्सुखावहम् ॥
ग्रहणीपांडुरोगार्शःकार्श्यगुल्मोदरापहः ॥
पिप्पल्यादिररिष्टोऽयं क्षयक्षयकरः परः ॥ ३२ ॥
इति पिप्पल्याद्यरिष्टः ॥
छागमांसतुलः सम्यक्क्वाथयेदर्मणेऽम्भसि ॥
पादशेषेण तेनैव सर्पिःप्रस्थं विपाचयेत् ॥ ३३ ॥
ऋद्धिर्वृद्धिश्च मेदे द्वे तथा जीवकर्षभौ ॥
काकोलीक्षीरकाकोलीकल्कैरेभिः पलोन्मितैः ॥ ३४ ॥
सम्यक्सिद्धेऽवतार्याथ शीते तस्मिन्प्रदापयेत् ॥
शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत् ॥ ३५ ॥
पलंपलं पिबेत्प्रातर्यक्ष्माणं हंति दुस्तरम् ॥
बल्यं स्थौल्यकरं वृष्यं दीपनं मंदवह्निजित् ॥ ३६ ॥
इति छागलाद्यं घृतं हारीतात् ॥
चंदनांबु नखं चाप्यं यष्टीशैलेयपद्मकम् ॥

---

१ पुगीफल। २ द्रव्यांतरदा ३ दशोरयपिपाठ। ४ गीरमार्थ तुपटिः। ५ ओष। ६ राख ७ पनीरा।

मंजिष्ठा सरलं दारु सटचेला पद्मकेसरम् ॥ ३७ ॥
पत्रं विल्वमुशीरं च कंकोलं च नतांवुदम् ॥
हरिद्रे सारिवे तिक्ता लवंगागुरुकुंकुमम् ॥ ३८ ॥
त्वग्रेणुनलिका चैभिस्तैलं मस्तु चतुर्गुणम् ॥
लाक्षारससमं सिद्धं ग्रहघ्नं वलवर्णकृत् ॥ ३९ ॥
अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम् ॥
आयुःपुष्टिकरं चैव वशीकरणमुत्तमम् ॥
विशेषात्क्षयरोगघ्नं रक्तपित्तहरं परम् ॥ ४० ॥

इति चंदनाद्यं तैलम् ॥

मलायत्तं वलं पुंसां शुक्रायत्तं तु जीवनम् ॥
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥ ४१ ॥
हरीतकीशतं युंज्याद्यवानामाढकं तथा ॥
पलानि दशमूलस्य विंशतिश्च नियोजयेत् ॥ ४२ ॥
चित्रकं पिप्पलीमूलमपामार्गः सटी तथा ॥
कपिकच्छुः शंखपुष्पी भार्गी च गजपिप्पली ॥ ४३ ॥
वला पुष्करमूलं च पृथग्द्विपलमात्रया ॥
पचेत्पंचाढके तोये यवैः स्विन्नैः शृतं नयेत् ॥ ४४ ॥
तच्चाभयाशतं दद्यात्क्वाथे तत्र विचक्षणः ॥
सर्पिस्तैलाष्टपलकं क्षिपेद्गुडतुलां तथा ॥ ४५ ॥
पक्त्वा लेहत्वमानीय सिद्धे दत्वा पृथक्पृथक् ॥
तत्क्षौद्रं पिप्पलीचूर्णं दद्यात्कुडवमात्रया ॥ ४६ ॥
हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः ॥
क्षयं कासं ज्वरं श्वासं हिकार्शोरुचिपीनसान् ॥ ४७ ॥

१ मोर्ड। २ नगर। ३ रेक्का उत्तरदेशे गंधालिकाप्रसिद्धः मुनयस्तस्याऽभावे शालिनीं पठंति।

ग्रहणीं नाशयत्येष वलीपलितनाशनः ॥
बलवर्णकरः पुंसामवलेहो रसायनः ॥
विहितोगस्त्यमुनिना सर्वरोगप्रणाशनः ॥ ४८ ॥

इत्यगस्त्यहरीतक्यवलेहः शार्ङ्गधरात् ॥ अथ रसः ॥

पारदं शोधितं गंधमभ्रकं च समं मतम् ॥
तदर्धं दरदं दद्यात्तदर्धा च मनःशिला ॥ ४९ ॥
सर्वार्द्धं मृतलोहं च खल्वमध्ये विनिक्षिपेत् ॥
द्विःसप्त भावना देयाः शतावर्या रसेन च॥ ५० ॥
ततः शुष्को भवत्येष कुमुदेश्वरसंज्ञकः ॥
सितया मरिचेनाथ गुंजाद्वित्रिप्रमाणतः॥ ५१ ॥
भक्षयेत्प्रातरुत्थाय पूजयित्वेष्टदेवताम् ॥
यक्ष्माणमुग्रं हंत्येव वातपित्तकफामयान् ॥ ५२ ॥
ज्वरादीनखिलान्रोगान्यथा दैत्याञ्जनार्दनः ॥
सतताभ्यासयोगेन वलीपलितनाशनः ॥ ५३ ॥

इति कुमुदेश्वररसः रसार्णवात् ॥

भस्मीभूतसुवर्णतारदिनेकृत्सूताभ्रसत्वैः क्रमा-
त्संवृद्धैस्त्रितयत्रयकिमिहरान्भोदैर्युतः कट्फलैः ॥
निर्गुंडीदशमूलवह्निरजनीव्योपार्द्रकैर्भावितो
गोलीकृत्यविशोषितो निगदितः पंचामृताख्यो रसः॥५४
नानेन सदृशः कोपि रसोस्ति भुवनत्रये ॥
निहंति सकलान्रोगान्भवरोगानिवाच्युतः ॥ ५५ ॥
सर्वरोगहरः सूतस्तत्तद्रोगानुपानतः ॥
अयं पंचामृतो नृणां त्रिदशानामिवामृतम् ॥ ५६ ॥

---

१ सिद्धसप्तसिपातः । २ पारो । ३ कामेश्वर । ४ त्रिवृत्री त्रिफला-त्रिजात । ५ मोथा ।

क्षयरोगं निहंत्याशु पंचकासांश्च दारुणान् ॥
विद्रधिं जाठरं गुल्मं हृद्रोगं च विनाशयेत् ॥ ५७ ॥
इति पंचामृतो रसः सारसंग्रहात् ॥
पृथग्द्वौ हाटकं चंद्रंस्त्रयो वंगाहिकांतयोः ॥
चत्वारि सूतमभ्रंच प्रवालं मौक्तिकं पविः ॥ ५८ ॥
भावना गव्यदुग्धेक्षुवासाश्रीकदली निशा ॥
शतपत्रं श्वेतकंजं मालत्याः कुसुमैस्तथा ॥ ५९ ॥
पश्चान्मृगमदाभाव्यं सुसिद्धो रसराड् भवेत् ॥
कुसुमाकरविख्यातो वसंतपदपूर्वकः ॥ ६० ॥
वल्लद्वयमिदं चास्य सिताज्यमधुना सह ॥
वलीपलितहृन्मेध्यं कामदं सुखवर्धनम् ॥ ६१ ॥
मेहघ्नं पुष्टिदं कांतं परं सौख्यं रसायनम् ॥
सिताचंदनसंयुक्तमम्लापित्तादिरोगनुत् ॥ ६२ ॥
इति वसंतकुसुमाकरो रसः ॥
स्वर्णं मुक्तादरदमरिचं भागवृद्ध्याप्रयोज्यम्
खर्परंपिष्टा प्रथमनवनीतेन निंबंबुना च ॥
यावत्स्नेहो व्रजति विलयं मर्दयेत्तावदेव
गुंजामात्रं मधुचपलया सर्वरोगे वसंतः ॥ ६३ ॥
इति मालतीवसंतः ॥
रसं वज्रं हेम तारं नागं लोहं च ताम्रकम् ॥
तुल्यांशं मारितं योज्यं मुक्तामाक्षिकंविद्रुमम् ॥ ६४ ॥
राजावर्त्तं च वैक्रांतं गोमेदं पुष्परागकम् ॥

---

१ भागौ। २ सुवर्ण ३ चांदि। ४ सीसो। ५ समभित्यपिपाटः ६ मुगा। ७ हीरा। ८ वेलगिरी। ९ चमेलीपुष्पैः। १० स्वर्णमाक्षिक। १० लाजावर्द।

शंखं च तुल्यतुल्यांशं सभाहं चित्रकद्रवैः॥ ६५ ॥
मर्दयित्वा विचूर्ण्याथ तेनापूर्य वराटकान् ॥
टंकणं रविदुग्धेन पिष्ट्वा तन्मुद्रणं चरेत्॥ ६६ ॥
मृद्भांडे तान्सुसंयंत्र्य सम्यग्गजपुटे पचेत् ॥
आदाय चूर्णयेत्सम्यक्‌निर्गुंड्या सप्त भावनाः॥ ६७ ॥
आर्द्रकस्य रसैः सप्त चित्रकस्यैकविंशतिः ॥
द्रवैर्भाव्यं ततः शुष्कं देयं गुंजाचतुष्टयम् ॥ ६८॥
क्षयरोगं निहंत्याशु सत्यं शिव इवांधकम् ॥
योजयेत्पिप्पलीक्षौद्रैः सघृतैर्मरिचैश्च वा ॥
पोटलीरत्नगर्भोयं सर्वरोगहरो मतः॥ ६९ ॥

इति रत्नगर्भपोटलीरसः॥

कृष्णाप्रस्थं पचेदाढकपयसि घृतस्यांऽजलीखंडपात्रं॥
दत्वालेहोपमेस्मिन्सुरकुसुमचतुर्जातविश्वोपणेंदून्॥
ग्रंथश्रीखंडयष्टीमधुघुसृणयुतं जातिका पंचकर्ष ॥
प्रत्येकं चूर्णयित्वा मधुकुडवयुतः स्याच्च कृष्णावलेहः॥
आदौ मंदाग्निकार्श्ये हरति स च शिशुस्त्रीजरन्मांतुपेषु
प्रायोवृष्योक्षिपथ्योविपुलबलकरो दीपनः पाचनश्च ॥
कासश्वासप्रमेहक्षयरुगतितृषाकामलापांडुकंडु-
प्लीहाजीर्णंज्वरं चानिलकफविकृतीरम्लपित्तं च हन्यात्

इति खंडापिप्पल्यवलेहः॥

रसभस्म त्रयो भागाः स्वर्णभस्मैकभागिकम् ॥
मृतताम्रस्यैकभागः शिलागंधकतालकम् ॥७२ ॥
तथा भागद्वयं शुद्धं मेलयित्वा विचूर्णयेत् ॥

---

१ वन्तोयथाइतिपाठ । २ दैत्य । ३ प्रस्थ । ४ लौंग । ५ कपूर ६ त्रिग । ७ जावत्री ८ वृद्धपुरुषेषु । ९ हितः ।

वराटी पूरयेत्तेन अजाक्षीरेण टंकणम् ॥ ७३ ॥
पिष्ट्वा च तन्मुखं रुद्ध्वा मृद्भांडे तान्निधरायेत् ॥
शुष्कं गजपुटे त्यक्त्वा चूर्णयेत्स्वांगशीतलम् ॥ ७४ ॥
रसो राजमृगांकोयं पंचगुंजः क्षयापहः ॥
दशपिप्पलिकाक्षौद्रैर्मरिचैकोनविंशतिः ॥
सघृतं दापयेत्पथ्यं राजरोगप्रशांतये ॥ ७५ ॥

इति राजमृगांकः सारसंग्रहात् ॥

रसेनतुल्यं कनकंतयोस्तुसाम्येन युंज्यान्नवमौक्तिकानि
रसप्रमाणो बलिरंग्रिभागः क्षीरेस्य सर्वंतुपवारिणा तु ॥
संमर्द्य घस्रं सुविधाय गोलं दिनं पचेत्तं लवणेन पूर्णे ॥
भांडे मृगांकोयमतिप्रगल्भक्षयाग्निमांद्यग्रहणीगदेषु॥७७

साज्योपणाभिर्मधुपिप्पलीभि-
र्वल्लोस्य देयो न ततोधिकस्तु ॥
पथ्यं हितं शीतलमेव योज्यं
त्याज्यं सदा पित्तकरं विदाहि ॥ ७८ ॥

इति मृगांकः रसरत्नप्रदीपात् ॥

रसः कनकभागिकः कनकमाक्षिकस्तालकः॥
शिलारसकगंधका रससमाः सतुत्था इमे ॥
विमर्द्य पयसा रवेः सकलमेतदस्योपरि ॥
द्रवैः प्रतिदिनं पृथक्तदिति भावयेद्बुद्धिमान् ॥ ७९ ॥
जयामुनिकेलिप्रियादहनभृंगवासोद्भवै-
र्विभाव्य च रसैस्ततः सुदृढगोलकं स्वेदयेत् ॥
मृगांकवदथार्द्रकद्रवभरेण तं सप्तधा ॥

१ स्वर्णं । २ क्षारस्येत्यपिपाठः ३ खर्परिया । ४ दपेडरिंग । ५ अगस्तिप । ६ कलिहारि ।

विमर्द्य च कटुत्रयांबुभिरयं क्षयस्यांतकृत् ॥ ८० ॥
रसः कनकसुंदरो भवति सन्निपातेप्ययं,
सहार्द्रकरसैस्तथा पवनगुल्मशूलादिहृत् ॥
सविश्वघृतयोजितः सकलमत्र पथ्यं हितं
मृगांकवदथापरं किमपि नैव योज्यं क्वचित् ॥ ८१ ॥

इति कनकसुंदरो रसः

शोकः स्त्रियः क्रोधमसूयनं च ॥
त्यजेदुदारान्विषयान्भजेच ॥
गुरुं द्विजातींत्रिदशांश्च पूजये-
त्कथाश्च पुण्याः शृणुयाद्विजेभ्यः ॥ ८२ ॥

इति श्रीयोगतरंगिण्या क्षयचिकित्सानाम
सप्तविंशस्तरंगः ॥

अष्टाविंशस्तरंगः।

अथोरःक्षतचिकित्सा ॥

कर्मभिर्बहुभिः क्रूरैर्भृशमभ्याहतस्य च ॥
विक्षते वक्षसि व्याधिर्बलवान्समुदीर्यते ॥ १ ॥
उरोमंथी क्षती लाजान्पयसा मधुसंयुतान् ॥
सद्य एव पिबेज्जीर्णे पयसाद्यात्सशर्करम् ॥ २ ॥
एलापत्रत्वचो द्राक्षाः पिप्पल्यर्द्धपलं तथा ॥
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ ३ ॥
संचूर्ण्य मधुना युक्तां गुटिकां संप्रकल्पयेत् ॥
अक्षमात्रांततश्चैकां भक्षयेच दिनेदिने ॥ ४ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्छां मदं भ्रमम् ॥
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ ५ ॥
शोषप्लीहामवातांश्च स्वरभेदं क्षयक्षयम् ॥

गुटिका तर्प्पणी वृष्या रक्तपित्तं च नाशयेत् ॥ ६ ॥

इत्येलाद्या गुटिका ॥

द्राक्षायाः संमितं प्रस्थं मधुकस्य पलाष्टकम् ॥
पचेत्तोयाढके सिद्धे पादशेषेण तेन तु ॥ ७ ॥
पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम् ॥
प्रदाय सर्पिषः प्रस्थं पचेत्क्षीरे चतुर्गुणे ॥ ८ ॥
सिद्धशीते पलान्यष्टौ शर्करायाः प्रदापयेत् ॥
एतद्द्राक्षाघृतं सिद्धं क्षीणक्षतहितं परम् ॥ ९ ॥

इति द्राक्षाद्यं घृतं ॥

अथ कासः ॥

प्राणो ह्युदानमन्वेत्य यदोर्ध्वमुपसर्पति ॥
तदा संजायते कासः कंठहृन्नाभिकर्षणः ॥ १० ॥
पंचमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः ॥
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ ११ ॥
भार्गी द्राक्षा सटी शृंगी पिप्पली विश्वभेषजम् ॥
गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ १२ ॥
बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम् ॥
पित्तकासापहं योज्यं शर्करामधुसंयुतम् ॥ १३ ॥
पुष्करं कट्फलं भार्गीविश्वपिप्पलिसाधितम् ॥
पिबेत्क्वाथं कफोद्रेके श्वासे कासे च हृद्ग्रहे ॥ १४ ॥
प्रस्थं विभीतिकानामस्थि विहाय साधयेदजामूत्रे ॥
लेहवदवलेहोयं मधुना सहितोतिकासहरः ॥ १५ ॥

इति वृंदात् ॥

मरिचं कर्षमात्रं स्यात्पिप्पली कर्षसंमिता ॥

१ सेर ५

अर्द्धकर्षो यवक्षारः कर्षयुग्मं च दाडिमम् ॥ १६ ॥
एतच्चूर्णीकृतं युंज्यादष्टकर्षयुतेन हि ॥
शाणप्रमाणां गुटिकां कृत्वा वक्रे विधारयेत् ॥
अस्याः प्रभावात्सर्वोपि कासा यांत्येव संक्षयम् ॥ १७ ॥
इति मरिचादिगुटिका शार्ङ्गधरात् ॥
रसगंधकणापथ्याकलिंद्रुफलवासकाः ॥
भार्गी चेति क्रमाद्वृद्धमेतद्वब्बुलजैर्द्रवैः ॥ १८ ॥
पिष्टं विंशतिवारं तत्कुर्यात्क्षौद्रेण गोलकान् ॥
कर्षप्रमाणेन तस्य तमेकं प्रातरुत्थितः ॥ १९ ॥
अद्यान्मातत्रयं क्षुद्राकाथं दशकणायुतम् ॥
पिबेत्तदनुकासाच्च श्वासाच्च परिमुच्यते ॥ २० ॥
इति भार्गोत्तरो वटकः ॥
भागो रसस्य गंधस्य द्वावेको लोहभस्मनः ॥
एतद्घृष्टंद्रवीभूतं मृद्वग्नौ कदलीदले ॥ २१ ॥
पातयेद्गोमयगते तथैवोपरि योजयेत् ॥
ततः पिष्ट्वा द्रवैरेभिर्मर्दयेत्सप्तधा पृथक् ॥ २२ ॥
भार्गीमुंडीमुनिवराजयानिर्गुंडिकाद्रवैः ॥
व्योपवासककन्यार्द्रद्रवैः शुष्कं पुटेल्लघु ॥ २३ ॥
आगंधं खर्परे नाम्ना पर्पटीति रसो भवेत् ॥
सर्वरोगहरः स्वैःस्वैरनुपानैर्द्विमाषिकः ॥ २४ ॥
तांबूलीपत्रसहितः कासश्वासहरः परः ॥
सकणः स्वरसाक्काथोऽनुपानं वा सगोजलम् ॥ २५ ॥
इति पर्पटीरसः रसरत्नप्रदीपात्

१ बहेडो। २ अगस्तिया। ३ दुपेहरिया। ४ क्षिप्रम्। ५ धकपर्यतम्। ६ मृत्तिकापात्रे। ७ तुलसी। ८ गोमूत्रसहितम्।

पारदं गंधकं शुद्धं मृतं लोहं च टंकणम् ॥
रास्नाविडंगं त्रिफला देवदारु कटुत्रयम् ॥ २६ ॥
अमृता पद्मकं क्षौद्रं विषं तुल्यानि चूर्णयेत् ॥
त्रिगुंजः सर्वकासघ्नो ज्वरारोचकमेहनुत् ॥ २७ ॥

इति पारदादिचूर्णं योगरत्नावलीतः ॥

तुल्या लवंगमरिचाक्षफलत्वचः स्युः ॥
सर्वैः समश्च गदितः खदिरस्य सारः ॥
बब्बूलवृक्षजकषाययुजां चतुर्णां ॥
कासं निहंति गुटिका घटिकाष्टकांतः ॥ २८ ॥

इति कासघ्नी गुटिका लोलिंबराजात् ॥

कर्पूरमर्द्धकर्षं मृगमदमपि देवकुसुमयुगम् ॥
मरिचकणाक्षकुलिंजनमेकैकं शुक्तिपरिमाणम् ॥ २९ ॥
दाडिमफलवल्कलपलमखिलसमं खदिरसारमवचूर्ण्य॥
वटिका मुद्गसमाना विधृताऽस्ये कफघ्नी स्यात् ॥ ३० ॥

इति कफघ्नी गुटिका ग्रंथांतरे

रात्रिद्वयशिलाधूमपानात्कासश्रुतिः कुतः ॥
जलपानादपि तथा क्रमेण क्षणदाक्षये ॥ ३१ ॥
वासायां विद्यमानायामाशायां जीवितस्य च ॥
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ ३२ ॥

इति सारसंग्रहात् ॥

मैथुनस्निग्धमधुरदिवास्वापपयोदधि ॥
मिष्टान्नपायसादीनि कासी धूमं च वर्जयेत् ॥ ३३ ॥
रंगं कृष्णाभया क्षारं रूपभार्गी क्रमोत्तरा ॥

---

१ रात्र्यन्ते । २ सत्या ।

तत्समं खदिरसारं वंकूतक्राथभावितम् ॥ ३४ ॥
एकविंशतिवारांश्च मधुना क्रमिता गुटी॥
श्वासं कासं च हिक्कां च हंति तं कासकर्तरी ॥ ३५ ॥
इति कासकर्तरी ॥
इति श्रीयोगतरंगिण्यां कासचिकित्सानाम
अष्टाविंशस्तरंगः ॥

---

एकोनत्रिंशस्तरंगः ।

अथ हिक्का ॥
अपानादूर्ध्वगात्कुद्धाद्धिक्का पंचकफान्विताम् ॥
अन्नजा यमला क्षुद्रा गंभीरा महतीति च ॥ १ ॥
नारीपयःपिष्टमशुक्लचंदनं
घृतं सुखोष्णं च ससैंधवं च ॥
पिष्टं तथा सैंधवमंबुना च ॥
निहंति हिक्कां ननु नावनेन ॥ २ ॥
इति नारायणीयात् ॥
यष्टयाह्वं वा माक्षिकेनावलीढं
कृष्णाचूर्णं शर्कराद्यं च किंवा ॥
सर्पिः कोष्णं क्षीरमुष्णं रसो वा
हन्याद्धिक्षोः पानतः पंच हिक्काः ॥ ३ ॥
इति सुश्रुतात् ॥
शिखिपिच्छभस्मकृष्णाचूर्णं मधुमिश्रितं मुहुर्लीढम् ॥
हिक्कां हंति प्रबलां श्वासं चैवातिदुस्तरां छर्दिम् ॥ ४ ॥
चिकित्सादीपात् ॥
कोलमज्जांजनं लाजास्तिक्ताकांचनगैरिकम् ॥

---

१ ॰ २ सौवीर। ३ धत्तुर।

कृष्णा धात्री सिता शुंठी कासीसं दधिनाम च ॥ ५ ॥
पाटल्याः सफलं पुष्पं कृष्णाखर्जूरमुस्तकम् ॥
षडेते पादिका लेहा हिक्काघ्ना मधुसंयुताः ॥ ६ ॥
मधुकं मधुसंयुक्तं पिप्पलीशर्करान्वितम् ॥
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम् ॥ ७ ॥
स्तन्येन मक्षिकाविष्ठा नस्ये बालक्तकांबुना ॥
योज्या हिक्काभिभूतेभ्यःस्तन्यं वा चंदनान्वितम् ॥ ८ ॥
सिंधुसौवर्चलोपेतं मातुलुंगरसं पिबेत् ॥
हिक्कार्तो मधुना लिह्याच्छुंठीं धात्रीकणान्विताम् ॥ ९ ॥
कृष्णामलकशुंठीनां चूर्णं मधुसितायुतम् ॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम् ॥ १० ॥
हिक्की श्वासी पिबेद्भार्गीं सविश्वामुष्णवारिणा ॥
नागरं वा सिताभार्गीसौवर्चलसमन्वितम् ॥ १२ ॥
इति वृंदात् ॥
दशमूलीजलयुतं सूतं हिक्किषु योजयेत्
श्वासकासहरः सर्वो विधिरत्रापि योज्यते ॥ १३ ॥
इति रसरत्नप्रदीपात् ॥
पाटलाफलतोयेन क्षौद्रेण च समन्वितम् ॥
हेमभस्म निहंत्येव हिक्काः पंच सुदारुणाः ॥ १४ ॥
कटुकागैरिकाभ्यां च मुक्ताभस्म तथैव च ॥
बीजपूरस्य तोयेन ताम्रं तद्वत्समाक्षिकम् ॥ १५ ॥
हेममुक्तार्ककांतानां भस्म वल्लसमन्वितम् ॥
बीजपूररसः क्षौद्रसौवर्चलसमन्वितः ॥ १६ ॥
हंति हिक्काशतशतमेकमात्रप्रयोगतः ॥

१ सैंधवलवण। २ मितवरमितिवापाठ।

का कथा पंचहिक्कानां हरणे पुनरुच्यते ॥ १७
वैद्यतत्त्वात् ॥
दशमूलीकषायेण मधुना च समन्वितम् ॥
कांतायोभस्म हिक्कानां पंचानां पंचतां नयेत् ॥ १८।
इति वतंतराजात् ॥
इति श्रीयोगतरंगिण्यां हिक्काचिकित्सा नामै-
कोनत्रिंशस्तरंगः ॥

त्रिंशस्तरङ्गः ।

अथ श्वासः ॥
यैर्निमित्तैर्भवेद्धिक्का श्वासस्तैरेव जायते ॥
कुलत्थनागरव्याघ्रीवासाभिः क्वथितं जलम् ॥
पीतं पौष्करसंयुक्तं श्वासकासनिवारणम् ॥ १ ॥
इति वृंदात् ॥
गुडशुण्ठीशिवामुस्तैर्धारयेद्गुटिकां मुखे ॥
श्वासकासेषु सर्वेषु बिभीतं वापि केवलम् ॥ २ ॥
शार्ङ्गधरात् ॥
भार्गीजटापलशतं सलिलार्मणाभ्यां
युक्पञ्चमूलतुलया सहितं विपाच्यम् ॥
पादस्थिते तु शतमत्र हरीतकीनां
पक्तव्यमुज्ज्वलगुडस्य शतेन साकम् ॥ ३ ॥
उत्तार्य तत्र शिशिरे मधुनः पलानि
चत्वारि च द्विगुणितानि पलत्रयं च ॥
व्योपत्रुटित्वगिभकेसरपत्रकाणा-
मेषां पलं खलु
श्वासं च कार

मैकाहिकं ज्वरमथोत्कटपीनसं च ॥
हन्याद्रसायनमिदं हि पुरंदरस्य
प्रोक्तं सहस्रकरपुत्रभिषग्वराभ्याम् ॥ ५ ॥
इतिभार्गीहरितक्यवलेहः। अथ रसः ॥
रसगंधं विषं चैव टंकणं च मनःशिला ॥
एतानि टंकमात्राणि मरिचं चाष्टटंककम् ॥ ६ ॥
एकैकं मरिचं दत्वा खल्वे चूर्णं विमर्दयेत् ॥
त्रिकटुं टंकषट्कं च दत्वा पश्चाद्विचूर्णयेत् ॥ ७ ॥
सर्वमेकत्र संयोज्य काचकूप्यां विनिःक्षिपेत् ॥
श्वासे कासे च मंदाग्नौ तथा श्लेष्मामयेषु च ॥ ८ ॥
गुंजामात्रं प्रदातव्यं पर्णखंडेन धीमता ॥
सन्निपाते च मूर्छायामपस्मारे तथा पुनः ॥ ९ ॥
अतिमोहत्वमापन्ने नस्यं दद्याद्विचक्षणः ॥
रसः श्वासकुठारोयं सर्वश्वासविकारजित् ॥ १० ॥
इति श्वासकुठारो रसः सारसंग्रहात् ॥
अर्केशानसमं वलिं भवसमं तालं तदर्धां शिलां
श्लक्ष्णां कज्जलिकां विधाय सुदृढेमत्रेध ऊर्ध्वं क्षिपेत् ॥
ताम्रस्याथ मुखं निरुध्य विधिवत्तद्गर्भयंत्रे पचेत्
क्षोदैर्भांडनभः प्रपूर्य पटुनो युक्त्यैकघस्रं सुधीः ॥ ११ ॥
सोमनाथीयताम्रस्य वल्लयुक्त्यानुपानतः ॥
शीलयन्सकलान्रोगानुन्मूलयति पथ्यभुक् ॥
इति सोमनाथताम्रम् ॥
इति श्रीयोगतरंगिण्यां श्वासचिकित्सानाम
त्रिंशस्तरङ्गः॥

---

१ पारद। २ पात्रे। ३ चूर्णैः।

एकत्रिंशस्तरंगः ।

अथ स्वरभेदः ॥

अम्लादेः कुपितैर्दोषैः स्वरनाडीगतैर्नृणाम् ॥
स्वरभेदः पृथक्सर्वैर्मेदसा च क्षयेण च ॥ १ ॥
चव्याम्लवेतसकटुत्रयतिंतिडीक-
कासीसजीरकतुगादहनैः समांशैः ॥
चूर्णं गुडप्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्यपीनसकफारुचिषु प्रशस्तम् ॥ २ ॥

इति चव्याद्यो मोदकः ॥

वदरीपत्रवल्कं वा घृतभ्रष्टं ससैंधवम् ॥
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ ३ ॥
व्याघ्रीस्वरसविपक्कं रास्नावाट्यालगोक्षुरव्योषैः ॥
सर्पिः स्वरोपघातं हन्यात्कासं च पंचविधम् ॥ ४ ॥

इति वृंदात् ॥

इति श्रीयोगतरंगिण्यां स्वरभेदचिकित्सानाम
एकत्रिंशस्तरंगः ॥

द्वात्रिंशस्तरंगः ।

वस्ति समीरणे पित्ते विरेकं वमनं कफे ॥
कुर्यादरोचके बुद्ध्या हर्षणं मनसस्तथा ॥ १ ॥
अम्लिका गुडतोयं च त्वगेलामरिचान्वितम् ॥
अभक्तं छंदरोगेषु शस्तं कवलधारणम् ॥ २ ॥
जिह्वाकंठविशोधनं तदनु च स्याच्छृंगवेरान्वितं
सिंधूत्थं हितमत्र वाथ मधुना शस्तो रसो दाडिमः ॥
अग्न्युद्बोधकराण्यजीर्णशमनान्याहुस्तथा भेपजा-

१ मेदलोचन । २ खिरेटी । ३ गाला । ४ इमली ।

न्यत्रारोचकरोगवत्यथ मुहुस्तत्तत्प्रदानानि च ॥ ३ ॥
सूतगंधाभ्रमगधाम्लकामरिचसैंधवैः ॥
गुटिका रोचकहरी जिह्वावदनशुद्धिकृत् ॥ ४ ॥

इतिश्रीयोगतरंगिण्यामरोचकचिकित्सानाम
द्वात्रिंशस्तरंगः ॥

त्रयस्त्रिंशस्तरंगः।

अथ छर्दिः

दुष्टैर्दोषैः पृथक्सर्वैर्बीभत्सालोकनादिभिः ॥
छर्दयः पंच विज्ञेयास्ताः पृथग्लक्षणैर्मताः ॥ १ ॥
दधित्थरससंयुक्तं पिप्पलीमाक्षिकान्वितम् ॥
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते ॥ २ ॥
इति सुश्रुतात् ॥
कोमलकरंजपत्रं सलवणमम्लेन संयुक्तम् ॥
यः खादति दिनवदने छर्दिकथा तस्य कुत्रेह ॥ ३ ॥
इति सारसंग्रहात् ॥
एलालवंगगजकेसरकोलमज्जा-
लाजप्रियंगुघनचंदनपिप्पलीनाम् ॥
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दि निहंति कफमारुतपित्तजाताम् ॥ ४ ॥
इति योगरत्नात् ॥
कषायो भ्रष्टमुद्गस्य सलाजमधुशर्करः ॥
रंभाकंदरसो वापि मधुना छर्दिनाशकृत् ॥ ५ ॥
अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले ॥
तद्वारिपानतो नूनं छर्दि जयति दुस्तराम् ॥ ६ ॥

१ सैंधवलवण। २ प्रभातसमये।

पुराणसणगोण्या वा खंडं दग्ध्वा तदंबु वै ॥
पिबेच्छर्दिहरं किं वा मधुना मक्षिकामलम् ॥ ७

इति वृंदात् ॥

ईषद्भृष्टं करंजस्य बीजं खंडीकृतं पुनः ॥
मुहुर्मुहुर्नरो भुक्त्वा छर्दिं जयति दुस्तराम् ॥ ८ ॥
पर्पटक्काथमादाय शीतलं दापयेन्नृणाम् ॥
वमिं हंति महाघोरां सपित्तभ्रमसंयुताम् ॥ ९ ॥
शंखपुष्पीरसं टंकद्वयं समरिचं मुहुः ॥
सक्षौद्रं मनुजः पीत्वा छर्दिभ्यः किल मुच्यते ॥ १० ॥
अजाजीधान्यपथ्याभिः सक्षौद्रैः सकटुत्रिकैः ॥
एतैः सार्द्धं भस्म सूतः सद्यो वांतिं विनाशयेत् ॥ ११ ॥

इति रसरत्नप्रदीपात् ॥

इति श्रीयोगतरंगिण्यां छर्दिचिकित्सानाम त्रयस्त्रिंशस्तरंगः ॥

चतुस्त्रिंशस्तरंगः ।

अथ तृष्णा ॥

सततं यः पिबेद्वारि न तृप्तिमधिगच्छति ॥
पुनः कांक्षति तोयं च तं तृष्णार्दितमादिशेत् ॥ १ ॥

इति वीरसिंहावलोकतः ॥

तृष्णाविवृद्धावुदरे च पूर्णे
संछर्दयेन्मागधिकोदकेन ॥
विलेहनं चात्र हितं विधेयं
स्याद्दाडिमाम्लीतकमातुलुंगैः ॥ २ ॥
सुवर्णरूप्यादिभिरग्नितप्त-

---

१ पुराने सनको टुन। २ इमली।

लोष्ठैः कृतं वा सिकतोपलैर्वा ॥
जलं सुखोष्णं शमयेच्च तृष्णां
सशर्करं क्षौद्रयुतं हिमं वा ॥ ३ ॥
कशेरुशृंगाटकपद्मबीज-
विसेक्षुसिद्धं ससितं च वारि ॥
तृषं क्षतोत्थामपि पित्तजातां
निहंति पीतं शिशिरीकृतं च ॥ ४ ॥
इति वृंदात् ॥
अरुणचंदनचंदनवालकै-
र्नलदपद्मकतुल्यकृतांशकैः ॥
शिरसि लेपनमाचरतां नृणां
तृडुपयात्युपशांतिमसंशयम् ॥ ५ ॥
नीलाब्जकुष्टमधुलाजवटप्ररोहैः
श्लक्ष्णीकृतैर्विरचिता गुटिका मुखस्था ॥
तृष्णां निवारयति तत्क्षणमेव तीव्रा-
मंतस्पृहामिव यतेः परमार्थचिंता ॥ ६ ॥
इतिराजमार्तंडात् ॥ अथ रसः ॥
रसगंधककर्पूरैः शैलोशीरमरीचकैः ॥
ससितैः क्रमवृद्धैश्च सूक्ष्मं चूर्णमहर्मुखे ॥ ७ ॥
त्रिगुंजाप्रमितं खादेत्पिवेत्पर्युषितांवु च ॥
भृशं तृष्णां निहंत्येवमाश्विनेयप्रकाशितम् ॥ ८ ॥
इति सारसंग्रहात् ॥
सक्षौद्रमाम्रजंवूत्थं पिवेत्क्वाथं रसान्वितम् ॥

---

१ कमलकोडाउरो । २ खस । ३ नवोलों ।

सतृष्णो मधुना कुर्याद्गंडूषाञ्छिशिरस्थितः ॥ ९ ॥

इति रसरत्नप्रदीपात् ॥

तृषितो मोहमायाति मोहात्प्राणान्विमुंचति ॥

अतः सर्वास्ववस्थासु न कचिद्वारि वार्यते ॥ १० ॥

पानीयं प्राणिनां प्राणो विश्वमेतच्च तन्मयम् ॥

अतोत्यंतनिषेधेपि न कचिद्वार्यते जलम् ॥

घोरोपद्रवसंयुक्ता तृष्णा मरणमादिशेत् ११ ॥

इति श्रीयोगतरंगिण्यां तृष्णाचिकित्सा नाम चतुस्त्रिंशस्तरंगः ॥

पंचत्रिंशस्तरंगः ।

अथ मूर्छा ॥

सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ॥

मोहो मूर्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥ १ ॥

इति रुग्विनिश्चयात् ॥

सेकावगाहौ मणयः सहाराः

शीतोपचारा व्यजनानिलाश्च ॥

पुष्पाण्यनेकानि च गंधवंति

विसानि शस्तानि च मूर्छितेषु ॥ २ ॥

सिताम्रिपालेक्षुरसप्लुतानि

द्राक्षामधूकस्वरसान्वितानि ॥

खर्जूरकाश्मर्यरसैः शृतानि

सिद्धानि सर्पींषि सजीवनानि ॥ ३ ॥

सिद्धानि पर्गे मधुरे पयांसि

---

१ छोपर। २ कमलतन्तूनि। ३ पीतानी। ४ मधुरवर्गोक्तकाकोल्यादिजीवनीयगणोक्तानि।

सदाडिमा जांगलजा रसाश्च
तथा यवा लोहितशालयश्च ॥
मूर्छासु पथ्याश्च सदा सतीनाः ॥ ४ ॥
नासावदनरोधैस्तु नस्यैर्मरिचनिर्मितैः ॥
नरं जागरयेद्धूमौ मूर्छितं मंदमारुतैः ॥ ५ ॥
तीक्ष्णांजनाभ्यंजनधूमयोगै-
स्तथा नखाभ्यंतरतोत्रपातैः ॥
वादित्रगीतानुनयैरपूर्वै-
र्विस्मापनैर्गुसफलावघर्षैः ॥ ६ ॥
आभिः क्रियाभिर्यदि नाससंज्ञः
सानाहलालाश्वसतश्च वर्ज्यः ॥
प्रबुद्धसंज्ञं वमनानुलोमै-
स्तीक्ष्णैर्विशुद्धं लघुपथ्ययुक्तम् ॥ ७ ॥
यथास्वं च ज्वरघ्नानि कषायाण्युपयोजयेत् ॥
सर्वमूर्छापरीतानां विषजानां विषापहम् ॥ ८ ॥
वीरसिंहावलोकतः ॥ अथ रसः ॥
कणामधुयुतं सूतं मूर्छायामनुशीलयेत् ॥
शीतसेकावगाहानि सर्वथा पीडनं हठात् ॥ ९ ॥
इति रसरत्नप्रदीपात् ॥
इति श्रीयोगतरंगिण्यां मूर्छाचिकित्सा नाम
पंचत्रिंशस्तरंगः ॥

षट्त्रिंशस्तरंगः

अथ पानात्ययः ॥
अयुक्ता मद्यपानेन बहुना स्यान्मदात्ययः ॥

१ मुद्गाः । २ नखपात । ३ क्रोडा । ४ नम्रवचनैः । ५ कैचकीफरीमर्दनैः ।

दाहमूर्छावमिभ्रांतिवैकल्यविषचेष्टितैः ॥ १ ॥
मंथः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ॥
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ २ ॥
मथितं गोदधिसासितं तैलं कर्पूरसंमिश्रम् ॥
आस्वाद्य पीतमाशु क्षपयति पानात्ययं रोगम् ॥ ३ ॥
समरिचघनसारं वारि मीनांडिकायाः ॥
परिमिलितममंदैर्दाडिमीबीजतोयैः॥
पिबति य इह मर्त्यस्तस्य पानात्ययाख्यो
विरमति मदिराक्षीचुंबनाश्लेषभाजः ॥ ४ ॥

इति श्रीयोगतरंगिण्यां पानात्ययचिकित्सा नाम षट्त्रिंशस्तरंगः ॥

## सप्तत्रिंशस्तरंगः

अथ दाहः ॥
त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्छितः ॥
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ १ ॥
इति रुग्विनिश्चयात् ॥
शतधौतघृताभ्यक्तो लिह्यात्सकुलिताघृतम् ॥
कोलामलकसंयुक्तैर्दाडिमाम्लैश्च बुद्धिमान् ॥ २ ॥
छादयेत्तस्य सर्वांगमारनालार्द्रवाससा ॥
लामज्जेनाथ युक्तेन चंदनेनानुलेपयेत् ॥ ३ ॥
चंदनांबुकणस्यंदितालवृंतोपवीजनैः ॥
शैवालकदलीपत्रोशीरतल्पे शयीत वा ॥ ४ ॥
अंतर्दाहं प्रशमयेदेतैश्चान्यैश्च शीतलैः ॥

---

१ कपूर। २ जल। ३ खाद। ४ बदिर। ५ हांगाकरसमभोगो। ६ गाढरोपला। ७ काई।

फलिनीलोध्रसेव्यांबुहेमपत्रं कुटंनटम् ॥ ५ ॥
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥
ह्रीवेरपद्मकोशीरचंदनोदकवारिणा ॥
संपूर्णामवगाहे तु द्रोण्यां दाहार्दितो नरः ॥ ६ ॥
इति श्रीयोगतरंगिण्यां दाहचिकित्सा नाम
सप्तत्रिंशस्तरंगः।

अष्टात्रिंशस्तरंगः।

अथोन्मादः ॥
मदयंत्युद्गता दोषा यस्मादुन्मार्गगामिनः ॥
मानसोयमतो व्याधिरुन्माद इति कीर्तितः ॥
इति रुग्विनिश्चयात् ॥
चौरैर्नरेंद्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनबांधवसंक्षयाद्वा ॥
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः ॥ २ ॥
इति रुग्विनिश्चयात् ॥
वातिके स्नेहपानं च प्राग्विरेकश्च पित्तजे ॥
कफजे वमनं कार्यं परो बस्त्यादिकक्रमः ॥ ३ ॥
यथा च वक्ष्यते किंचिदपस्मारे चिकित्सितम्॥
उन्मादे तच्च कर्तव्यं सामान्याद्दोषदूष्ययोः ॥ ४ ॥
सिद्धार्थको वचा हिंगु करंजो देवदारु च ॥
मंजिष्ठा त्रिफला श्वेताकटभीत्वक्कटुत्रयम् ॥ ५ ॥
समांशानि प्रियंगुश्च शिरीषो रजनीद्वयम् ॥
बस्तमूत्रेण पिष्टोयमगदः पानमंजनम् ॥ ६ ॥

१ कूलफिरग०। २ खस। ३ कमल। ४ अगुर। ५ कटहर।

नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा ॥
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहम् ॥ ७ ॥
भूतेभ्यश्च भयं हंति राजद्वारे च शस्यते ॥
सर्पिरेतेन सिद्धं वा गोमूत्रेण तदर्थकृत् ॥ ८ ॥
इति सिद्धार्थकाद्यगदः ॥
दशमूलांबु सघृतं युक्तं मांसरसेन वा ॥
ससिद्धार्थकचूर्णं वा केवलं वा नवं घृतम् ॥ ९ ॥
उन्मादशांतये पेयो रसो वा कालशाकजः ॥
प्रयोज्यं सार्षपं तैलं नस्याभ्यंजनयोः सदा ॥ १० ॥
आश्वासयेत्सुहृद्वाक्यैर्ब्रूयादिष्टविनाशनम् ॥
दर्शयेदद्भुतं कर्म ताडयेच्च कशादिभिः ॥ ११ ॥
सुबद्धं विजने गेहे त्रासयेदहिभिर्धिया ॥
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ॥ १२॥
स्थिरानंतं हरिद्रे द्वे सारिवे द्वे प्रियंगुका ॥
नीलोत्पलैलामंजिष्ठादंतीदाडिमकेसरम् ॥ १३ ॥
तालीसपत्रं बृहती मालतीकुसुमं नवम् ॥
विडंगं पृश्निपर्णी च कुष्ठं चंदनपद्मकौ ॥ १४ ॥
एतैः कर्षमितैः कल्कैर्विंशत्यष्टाभिरेव च ॥
जले चतुर्गुणे पक्त्वा घृतप्रस्थं प्रयोजयेत् ॥ १५ ॥
अपस्मारे ज्वरे कासे शोके मंदानले तथा ॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ॥ १६ ॥
वम्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥
कंडूपांड्वामयोन्मादविषमेषु ज्वरेषु च ॥ १७ ॥
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥

१ गोभी। २ इष्टवाक्यैः। ३ कोरदाभकुश। ४ रेणुका। ५ तगरम्।

शस्तं स्त्रीणां च वंध्यानां धन्यमायुर्बलप्रदम् ॥ १८ ॥
अलक्ष्मीपापरोगघ्नं सर्वग्रहनिवारणम् ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंस्त्वप्रसाधने ॥ १९ ॥

इति कल्याणकं घृतम् ॥

ब्राह्मीरसः स्यात्सवचः सकुष्ठः
सशंखपुष्पः ससुवर्णचूर्णः ॥
उन्मादिनामुन्मदमानसाना-
मपस्मृतौ भूतहतात्मनां हि ॥ २० ।
नस्येंजने पानविधौ च शस्तो
ब्राह्मीरसोयं सवचादिचूर्णः ॥ २१ ॥

इति वीरसिंहावलोकनतः ॥

हिंगुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ॥
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ २२ ॥

इति हिंग्वाद्यं घृतं वृंदात् ॥

कृष्णाधत्तूरजैर्बीजैः पंचभिः पर्पटीरसः॥
साज्यो योज्यः प्रशांत्यर्थमुन्मादस्यास्य नाशने ॥२३॥

इति रसरत्नप्रदीपात् ॥

इति श्रीयोगतरंगिण्यां उन्मादचिकित्सानाम
अष्टात्रिंशत्तरंगः ॥ ३८ ॥

---

अथैकोनचत्वारिंशस्तरंगः ।

अथापस्मारः ॥

तमःप्रवेशसंरंभो दोषोद्रेकहतस्मृतिः ॥
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ २३ ॥

इति रुग्विनिश्चयात् ॥

---

१ नागकेसर ।

पूर्वं युंज्यादपस्मारे छर्दिरादीनि बुद्धिमान् ॥
वातिकं बस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः ॥ २ ॥
कफजं वमनैः प्रायस्त्वपस्मारमुपाचरेत् ॥
ततस्तीक्ष्णं प्रयुंजीत भिषक्सम्यक्प्रवर्तनम् ॥ ३ ॥
सर्वतः शुद्धदेहस्य स्यादुन्मादहरी क्रिया ॥
इति वृंदात् ॥
करंजदारुसिद्धार्थकटभी रामठं वचा ॥
समंगा त्रिफला व्योषं प्रियंगुश्च समांशतः ॥ ४ ॥
बस्तमूत्रेण संपिष्टा नस्यपानांजनादिभिः ॥
योज्यो योगोयमुन्मादेऽपस्मारे भूतरोगिषु ॥ ५ ॥
इति करंजादिप्रयोगः वीरसिंहावलोकतः ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमंजनात् ॥
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥ ६ ॥
यः खादेत्क्षीरभक्ताशी माक्षिकेण वचारजः ॥
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥ ७ ॥
इति योगरत्नावलीतः । अथ रसः ॥
रसः सतालः सशिलः सलोहः
स्रोतोऽजनं सार्कमिदं सगंधम् ॥
पिष्टं नृमूत्रेण समं समस्ता-
द्देयो द्विभागो ऽथ बलिः पचेच्च ॥ ८ ॥
लोहेक्षणं हंति घृतेन माषो-
ऽपस्मारमस्योन्मदमानसत्वम् ॥
पिबेदनु त्र्यूषणहिंगुयुक्तं
सर्पिर्नृमूत्रं रुचकेन सार्द्धम् ॥ ९ ॥

१ बोधः । २ मालकांगुनी । ३ लवणेन ।

भूतोन्मादेषु सर्वेषु रसोऽयं भूतभैरवः ॥
स्वर्णजैः पंचभिर्बीजैर्देयः सर्पिर्विमिश्रितः ॥ १० ॥
इति भूतभैरवरसः रसरत्नप्रदीपात् ॥
इति श्रीयोगतरंगिण्यां अपस्मारचिकित्सानाम
एकोनचत्वारिंशस्तरंगः ॥ ३९ ॥

---

अथ चत्वारिंशस्तरंगः।

अथ वातव्याधिः ॥
स्वहेतुकुपितो वातो यद्यदंगग्रहो वली ॥
तत्तदाख्यो बहुरुजः कुरुतेऽशीतिमामयान् ॥ १ ॥
अभ्यंगः स्वेदनं बस्तिर्नस्यं स्नेहविरेचनम् ॥
स्निग्धाम्ललवणस्वादु वृष्यं वातामयापहम् ॥ २ ॥
माषात्मगुप्तैरंडवाट्यालकशृतं पिबेत् ॥
हिंगुसैंधवसंयुक्तं पक्षाघातनिवारणम् ॥ ३ ॥
पंचमूलीकृतः क्वाथो दशमूलीकृतोऽथवा ॥
रूक्षः स्वेदस्तथा नस्यं मन्यास्तंभे प्रशस्यते॥४॥
इति योगरत्नावलीतः ॥
वाजिगंधाबलाशिग्रुदशमूलीमहौषधैः ॥
द्विगृध्रनख्यौ रास्ना च गणो मारुतनाशनः ॥ ५ ॥
माषबलाशुकशिंबीकत्तृणरास्नाश्वगंधोरुबूकाणाम् ॥
प्रातः क्वाथो पीतो रामठलवणान्वितः कोष्णः ॥ ६ ॥
अपनयति पक्षघातं मन्यास्तंभं सकर्णनादरुजम् ॥
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम् ॥ ७ ॥
इति माषादिसप्तकम् ॥
पलमर्धपलं वापि रसोनस्य सुकुट्टितम् ॥

---

१ धत्तूरजैः २ रेनोकटेरी। ३ केच। ३ गधेल।

हिंगुजीरकसिंधूत्थैः सौवर्चलकटुत्रिकैः ॥ ८ ॥
चूर्णितैर्माषमात्रैस्तद्विलोड्य च विचूर्णितैः ॥
यथाग्निभक्षितं प्रातरेरंडस्नेहसंयुतम् ॥ ९ ॥
दिनेदिने प्रयोक्तव्यं मासमेकं निरंतरम् ॥
वातरोगं निहंत्येव मर्दितं चापतंत्रकम् ॥
सर्वांगैकांगरोगं च गृध्रस्याक्षेपकावपि ॥ १० ॥
इति रसोनसप्तकम् ॥
कंदः सार्षपतैलं च लशुनं शृंगवेरकम् ॥
सर्वाष्टमांशं सिंधूत्थं संधितं दिनसप्तकम् ॥११॥
संचूर्ण्य घर्ममध्ये तु प्रातः खादेद्यथाबलम् ॥
एव निर्गंधतामेत्य सर्ववातामयाञ्जयेत् ॥ १२ ॥
स्निग्धभोजी मासमात्रं सेवनाद्वातजिद्भवेत् ॥
अजीर्णमातपं रोषमतिनीरं पयो गुडम् ॥ १३ ॥
रसोनमश्नन्पुरुषस्त्यजेदेतन्निरंतरम् ॥
मद्यं मांसं तथाम्लं च रसं सेवेत नित्यशः ॥ १४ ॥
इति रसोनपंचकम् ॥
आमाशयस्थे त्वनिले प्रशस्तं
प्राग्लंघनं दीपनपाचने च ॥
प्रच्छर्दनं तीक्ष्णविरेचनं च
पुराणमुद्गा यवशालयश्च ॥ १५ ॥
पूतीकपथ्यासटिपुष्कराणि
विल्वं गुडूची सुरदारु शुंठी ॥
विडंगवासातिविषाकणाह्वाः
क्वाथास्त्रयः सामसमीरणघ्नाः ॥ १६ ॥

---

१ प्याज। २ कंगा।

चित्रकेंद्रयवौ पाठा कटुकातिविषाभया ॥
वातव्याधिप्रशमनो योगः षट्चरणः स्मृतः ॥ १७ ॥
आमाशयगते वाते छर्दितापे यथाक्रमम् ॥
देयः षट्चरणो योगः सप्तरात्रं सुखांबुना ॥ १८ ॥
सर्वथा कोष्ठगो वातः प्रशमं याति देहिनः ॥
कार्यो बस्तिगते वाते विधिर्बस्तिविशोधनः ॥ १९ ॥
श्रोत्रादिषु प्रकुपिते कार्यश्चानिलहाक्रमः ॥
त्वङ्मांसासृक्छिराप्राप्ते कुर्याच्चासृग्विमोक्षणम् ॥ २० ॥
स्वेदोपनाहाग्निकर्मबंधनोन्मर्दनानि च ॥
स्नायुसंध्यस्थिसंप्राप्ते कुर्याद्वाते विचक्षणः ॥ २१ ॥
निगूढेऽस्थिगते वाते पाणिमंथेन दारिते ॥
नाडीं दत्वास्थनि भिषक्चूषयेत्पवनं बली ॥ २२ ॥
शुक्रप्राप्तेनिले कार्यं शुक्रदोषचिकित्सितम् ॥ २३ ॥
कार्पासास्थिकुलत्थिकातिलयवैरंडाधिमाषातसी-
वर्षाभूशणबीजकांजिकयुतैरेकीकृतैर्वा पृथक् ॥
स्वेदः स्यादिति कूर्परोदरहनुस्फिक्पाणिपादांगुली-
गुल्फस्तंभकटीरुजो विजयते सामाः समीरोद्भवाः॥ २५
नवनीतेन संयुक्ताः खादेन्माषेंडरीर्नरः ॥
दुर्वारमर्दितं हंति सप्तरात्रान्न संशयः ॥ २६ ॥

माषातसीयवकुरंटककंटकारी-
मोकंटटुंटुकजटाकपिकच्छुतोयैः ॥
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन बस्तपिशितस्य रसेन चापि ॥ २७ ॥
शुंठ्याच मागधिकया शतपुष्पया च

१ शणेन। २ रमास। ३ सांठ। ४ वरखकोफरी। ५ पीमावासो। ६ गोखरू।

सैरंडमूलसपुनर्नवया सरण्या ॥
रालाबलामृतलताकटुकैर्विपक्वं
माषाख्यमेतदपबाहुकहारितैलम् ॥ २८ ॥
अर्धांगशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकंपशिरःप्रकंपम् ॥
नस्येन वस्तिविधिना परिषेचनेन
हन्यात्कटीजघनजानुशिरःसमीरान् ॥ २९ ॥
इति माषाद्यं तैलं वृंदात् ॥

बलामूलकषायस्य दशमूलीकृतस्य च ॥
यवकोलकुलत्थानां क्राथस्य पयसस्तथा ॥ ३० ॥
अष्टावष्टौ सुभागास्ते तैलादन्येतदेकतः ॥
पचेदावाप्य मधुरं गणं सैंधवसंयुतम् ॥ ३१ ॥
तथागुरुं सर्जरसं सरलं देवदारु च ॥
मंजिष्ठां चंदनं कुष्ठमेलां कालां च सारिवाम् ॥ ३२
मांसीं शैलेयकं पत्रं तगरं सारिवां वचाम् ॥
शतावरीमश्वगंधां शतपुष्पां पुनर्नवाम् ॥ ३३ ॥
तत्साधुसिद्धं सौवर्णे राजते मृन्मयेऽथ वा ॥
प्रक्षिप्य सकलं सम्यक्सुगुप्तं स्थापयेद्बुधः ॥ ३४ ॥
बलातैलमिदं ख्यातं सर्ववातविकारनुत् ॥
यथाबलं भिषग्मात्रां सूतिकायै प्रदापयेत् ॥ ३५ ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
क्षीणे वाते मर्मंहते मथिते पीडिते तथा ॥ ३६ ॥
भग्ने श्रमाभिपन्ने च सर्वथैनं प्रयोजयेत् ॥
सर्वानाक्षेपकादींश्च वातव्याधीन्व्यपोहति ॥ ३७ ॥

---

१ स्वल्पवर्णविपाकः। २ कालोऽस्थान्वितम्। ३ गुरुस्वरविपाकः।

प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
राज्ञामेतद्धि कर्तव्यं राजमान्यैस्तथा नरैः ॥ ३८ ॥
इति महाबलातैलम् ॥
बिल्वोग्निमंथः स्योनाकः पाटला पारिभद्रकः ॥
प्रसारिण्यश्वगंधा च बृहती कंटकारिका ॥ ३९ ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ॥
एषां दशपलान्भागांश्चतुर्द्रोणांभसा पचेत्॥४०॥
पादशेषं परिस्राव्य तैलपात्रे प्रदापयेत् ॥
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ ४१ ॥
चंदनं तगरं कुष्ठमेलापर्णीचतुष्टयम् ॥
रास्ना तुरंगगंधा च सैंधवं सपुनर्नवम् ॥ ४२ ॥
एषां द्विपलिकान्भागान्पेषयित्वा विनिक्षिपेत् ॥
शतावरीरसं चैव तैलतुल्यं प्रदापयेत् ॥ ४३ ॥
आंजनाय दिवा गव्यं क्षीरं दत्वा चतुर्गुणम् ॥
पाने बस्तौ तथाभ्यंगे भोज्ये नस्ये प्रयोजयेत् ॥ ४४ ॥
अश्वो वा वातभग्नो वा गजो वा यदि वा नरः ॥
पंगुर्वा भग्नहस्तो वा भग्नपादोथ वा नरः ॥ ४५ ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ॥
दंतशूले हनुस्तंभे मन्यास्तंभेऽपतंत्रके ॥ ४६ ॥
एकांगग्रहणे वापि सर्वांगग्रहणे तथा ॥
क्षीणेंद्रिया नष्टशुक्रा ज्वरग्रस्ताश्च ये नराः ॥ ४७ ॥
लालाजिह्वाश्च बधिरा विस्वरा मंदमेधसः ॥
मंदप्रजा च या नारी या च गर्भं न विंदति ॥ ४८ ॥
वातार्तौ वृषणौ येषां अंत्रवृद्धिश्च दारुणा ॥

१ भधगध०। २ तमनिन्मायेत्यपिपाठः।

एतन्नारायणं तैलं शस्तं सर्वत्र सर्वदा ॥ ४९ ॥
इति मध्यमनारायणतैलम् ॥
समूलपत्रामुत्पाट्य जानसारां प्रसारिणीम् ॥
कुट्टयित्वा पलशतं कटाहे समधिश्रयेत् ॥ ५० ॥
वारिद्रोणसमायुक्तं चतुर्भागावशेषितम् ॥
कषायसममात्रं तु तैलमत्र प्रदापयेत् ॥ ५१ ॥
दध्नस्तत्राढकं दद्याद्द्विगुणं चाम्लकांजिकम् ॥
भेषजानि तु पेष्याणि तत्रेमानि समावपेत् ॥ ५२ ॥
शुंठीपलानि पंचैव रास्नायाश्च पलद्वयम् ॥
यवक्षारपले द्वे च सैंधवस्य पलद्वयम् ॥ ५३ ॥
द्विपलं पिप्पलीमूलं चित्रकस्य पलद्वयम् ॥
प्रसारणीपले द्वे च द्वे पले मधुकस्य च ॥ ५४ ॥
एतत्सर्वं समालोड्य शनैर्मृद्वग्निनापचेत् ॥
एतत्प्रभंजने श्रेष्ठं नस्यकर्मणि शस्यते ॥ ५५ ॥
पाने बस्तौ च दातव्यं न कश्चित्प्रतिषिध्यति ॥
अशीतिं वातरोगाणां तैलमेतद्व्यपोहति ॥ ५६ ॥
एकांगग्रहणं वापि सर्वांगग्रहणं तथा ॥
अपस्मारं तथोन्मादं विशर्थि मंदवह्निताम् ॥ ५७ ॥
त्वग्गताश्चापि ये वाताः शिरःसंधिगता अपि ॥
अस्थिसंधिगता ये च येच शुक्रांतरे स्थिताः ॥ ५८ ॥
सर्वान्वातामयान्नूनं नाशयत्येव सर्वथा ॥
हयं गजं नरं वापि वातजर्जरितं भृशम् ॥ ५९ ॥
सद्यः प्रशमयेत्तैलमेतन्नात्र विचारणा ॥
इंद्रियस्य प्रजननं वंध्यानां च प्रजाकरम् ॥
वृद्धानां बालकानां च स्त्रीणां राज्ञां हितं परम्॥

पंगुर्वा पृष्ठभग्नो वा पीत्वैतत्संप्रधावति ॥ ६० ॥

इति प्रसारणीतैलम् ॥

बलाश्वगंधा बृहती श्वदंष्ट्रा
स्योनाकवाँट्यालकपारिभद्रम् ॥
क्षुद्राकठिल्लातिबलाग्निमंथ
रास्नारणीवैका किच्छुरा च ॥ ६२ ॥
निर्गुंडिकैरंडकुरंटकानां
मूलानि वर्षाभरणीयुतानि ॥
मूलं विदध्यादथ पाटलानां
संकुट्यपादांशतयोद्धृतानाम् ॥ ६३ ॥
द्रोणैरपामष्टभिरेव पक्त्वा
पादावशेषेण रसेन तेन ॥
तैलाढकाभ्यां सह दुग्धमत्र
गव्यं विदध्यादथवाजदुग्धम् ॥ ६४ ॥
दद्याद्रसं चैव शतावरीणां
तैलेन तुल्यं पुनरेव तत्र ॥
पक्त्वा दिनैकं कृतवस्त्रपूतं
कल्कानि चैषां च समावपेच्च ॥ ६५ ॥
रास्नाश्वगंधामिसिदारुकुष्ठ-
पर्णीतुरुष्कागुरुकेसराणि ॥
सिंधूत्थमांसी रजनीद्वयं च
शैलेयकं पुष्करचंदनानि ॥ ६६ ॥

---

१ पीठवर्पी। २ गोखुरू। ३ अरलू। ४ खिरटी। ५ निंब। ६ करेल्या। ७ पीयावांसो। ८ पुनर्नवा ९ लुराशानीभजमायन।

एलासयष्टीतगराब्दपत्रं
भृंगाष्टवर्गं च जयापलाशम् ॥
वृश्चीकथौणेयकचोरकाख्यं
मूर्वा त्वचा कट्फलपद्मकं च ॥ ६७ ॥
मृणालजातीफलकेतकी च
सनागपुष्पं सरलं मुरा च ॥
जीवंतिका चंदनकं सुशीरं
दुरालभावानरिकानखं च ॥ ६८ ॥
कैवर्तिकं तालशिरः सतिक्तं
खर्जूरमुस्तं समभागमेषाम् ॥
एतैः समेत्यार्द्धपलप्रमाणैर्भा-
गानथाष्टौ किल कालमेष्याः ॥ ६९ ॥
एणः कुरंगो हरिणो मयूरो
गोधा शशः शल्लकचक्रवाकौ ॥
वर्तीरलावौ वरतित्तिरी च
ससारसक्रौंचककंबुपर्णाः ॥ ७० ॥
अजाः सकूर्मा इह मांसयूपं
क्रमात्क्षिपेच्चात्र यथैव लाभम् ॥
रोहीतकोथासवनेत्रनामा
कंसाढकौ मुंद्रशृंगिके च ॥ ७१ ॥
पाठीनकालीयकतोणिका च
सशोखरा ये कुररादयश्च ॥

१ सांठ। २ नागकेसर। ३ कचूरकपूरी। ४ कैथकेबीज। ५ चिरायतो। ६ ताडफल। ७ कुडाट। ८ कृष्णभेद। ९ गोर। १० मयूरविशेषः। ११ मत्स्यविशेषः। १२ मत्स्य-विशेषः। १३ वर्मादयः।

ये चापि तोये शिशुमारमुख्या
लभ्याश्च ये श्वभ्रगता भुजंगाः ॥ ७२ ॥
अन्येपि ये भूचरखेचराश्च
यूषा अमीषां क्रमशोऽत्र योज्याः ॥
सुताम्रपात्रेप्यथ मृत्तिकाजे
कर्पूरकाश्मीरमृगांडजं च ॥ ७३ ॥
दद्यात्सुगंधानि वदंति केचित्प्रस्वेददौर्गंध्यविनाशनाय ॥
वदंतिकेचिद्भिषजः समेतं शुभे तथा ऋक्षमुहूर्तलग्ने ७४
संतोष्यविप्रान्भिषजोर्थिनश्च
सुभाजने यत्नधृतं तथैव ॥
पाने च नस्ये च निरूहणे च
भोज्ये प्रयोज्यं तत एव नूनम् ॥ ७५ ॥
अभ्यंगमादौ च सदा प्रशस्तं निर्वाप्यते कर्मसुकष्टचिन्त्य
उन्मादशोषक्षतरक्तपित्तश्वासभ्रमच्छर्दिषु मूर्छितेषु ७६
कालाग्निवाताहतशूलदंतकृमीन्पृथुप्लीहसतोददाहान् ॥
सतालुशूलंश्रवणाक्षिशूलंबाधिर्यमुच्चैर्ज्वरपीडितं च॥७७
मंदेंद्रियत्वं च यथाग्निमांद्यं प्रणष्टशुक्रत्वमथांगकंडूः ॥
निहत्य सत्यं स्वगुणप्रभावात्कटिग्रहापस्मृतिगृध्रसीं च॥
पक्षाभिघातं चरणाभिघातं
हस्ताभिघातं च शिरोग्रहं च ॥
कुष्ठानि सर्वाणि च सर्वगुल्मा
न्भगंदरं शूलमुरःक्षत च ॥ ७९ ॥
यक्ष्माणमुग्रं सकलप्रमेहा-
न्नासाक्षिकर्णप्रभवान्विकारान् ॥

---

१ कस्तूरी।

वातादिजातान्किल भूतजाता-
न्कृत्यादिजातान्गृहजान्विकारान् ॥ ८० ॥
रोगः स नास्त्येव नरस्य देहे
नानेन शांतिं समुपैति यो हि ॥
सद्यो व्रणानस्थिविचूर्णितं वा
नाडीव्रणान्वापि च योजयित्वा ॥ ८१ ॥
सुवर्णं वर्णं वितनोति रूपं
नारायणाख्यः किल तैलराजः ॥
वंध्या पुमान्वापि वरांगना वा
सुपुत्रमाप्नोति विलेपतोस्य ॥ ८२ ॥
सिध्यत्यनेनैव नियोजितेन
निदाघदग्धः प्रहतोपि वृक्षः ॥
अल्पस्य का वा भणितिर्नरस्य
रोगस्य जंतोरपरस्य वापि ॥ ८३ ॥
नारायणोक्तं यदिदं सुतैलं
नारायणं नाम ततः प्रसिद्धं ॥

इति महानारायणतैलम् ॥

माषक्वाथे बलाक्वाथे रास्नायां दशमूलजे ॥
यवकोलकुलत्थानां छागमांसरसे पृथक् ॥ ८४॥
प्रस्थे तैलस्य च प्रस्थं क्षीरं दद्याच्चतुर्गुणम् ॥
रास्नात्मगुप्तासिंधूत्थशताह्वैरंडमुस्तकैः ॥ ८५ ॥
जीवनीयबलाव्योषैः पचेदक्षमितैर्भिषक् ॥
हस्तकंपे शिरःकंपे बाहुकंपे ऽपबाहुके ॥ ८६ ॥
बस्त्यभ्यंजनपानेषु नावनेषु प्रयोजयेत् ॥

माषतैलमिदं श्रेष्ठं मूर्द्धजन्तुगदापहम् ॥ ८७ ॥

इति बृहन्माषादितैलम् ॥

रास्नामृतैरंडसुराह्वविश्वं
तुल्येन गाढं पुरुणा विमर्द्य ॥
खादेत्समीरी सशिरोगदी च
नाडीगदी चापि भगंदरी च ॥ ८८ ॥

इति रास्नाद्यो गुग्गुलुः ।

त्रिकटु त्रिफला मुस्तं विडंगं चव्यचित्रकौ ॥
चैलापिप्पलीमूलं हपुषा सुरदारु च ॥ ८९ ॥
तुवरं पुष्करं कुष्ठं विषा च रजनीद्वयम् ॥
वाष्पिका जीरकं शुंठी पत्रं च सदुरालभम् ॥ ९६ ॥
सौवर्चलं विडं चैव क्षारौ द्विरदपिप्पली ॥
सैंधवं च समानेतांस्तुल्यं दद्याच्च गुग्गुलुम् ॥ ९७ ॥
साधयित्वा विधानेन कोलमात्रां वटीं चरेत् ॥
घृतेन मधुना वापि भक्षयेच्चामहसुखे ॥ ९२ ॥
आमं हन्यादुदावर्तमंत्रवृद्धिगुदक्रमीन् ॥
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ॥ ९३ ॥
आनाहं च तथोन्मादं कुष्ठानि गुदाजानि च ॥
शोफं प्लीहामयं देहे कामलामपचीं तथा ॥ ९४ ॥
नाम्ना द्वात्रिंशको ह्येष गुग्गुलुः कथितो महान् ॥
धन्वंतरिकृतो योगः सर्वरोगनिषूदनः ॥ ९५ ॥

इति द्वात्रिंशको गुग्गुलुः ॥

ओंभाश्वगंधा हपुषा गुडूची शतावरीगोक्षुरकं च रास्ना॥

---

१ व्रणी। २ अतीस। ३ सेंफ। ४ गजपीपर।
५ संबूल।

श्यामा सठी धोपवंतीयवानी सनागराचेति समं विचूर्ण्य
तुल्यं वरं कौशिकमत्र देयं गव्यं च सर्पिश्च ततोर्द्धभागं॥
अक्षार्द्धमात्रां तु ततः प्रयोगस्तत्रानुपानं सुरया च यूषैः॥
कोष्णांबुना वा पयसा रसेन मांसस्य वा कोमलवस्तुजस्य
कटिग्रहेगृध्रसिबाहुपृष्ठहनुग्रहे जानुनि पादयुग्मे॥ ९८॥
संधिस्थिते चास्थिगते च वाते मज्जागते कोष्ठगते तथापि
रोगाजयेद्वातकफानुविद्धान्वातेरितान् शुक्रहयोनिदोषान्
भग्नास्थिविद्धेषु च खंडजाते त्रयोदशांगं प्रवदंति सिद्धाः
इति त्रयोदशांगो गुग्गुलुः॥
नागरं पिप्पलीमूलं पिप्पली चव्यचित्रकौ॥
भ्रष्टं हिंग्वजमोदा च सर्षपा जीरकद्वयम्॥ १००॥
रेणुकेंद्रयवा पाठा विडंगं गजपिप्पली॥
कटुकातिविषा भार्गी वचा मूर्वेति भागतः॥ १॥
प्रत्येकं शाणमात्राणि द्रव्याणीमानि विंशतिः॥
द्रव्येभ्यः सकलेभ्यश्च त्रिफला द्विगुणा भवेत्॥ २॥
एभिश्चूर्णीकृतैः सर्वैः समो देयस्तु गुग्गुलुः॥
एकं पिंडं ततः कृत्वा धारयेद् घृतभाजने॥ ३॥
गुटिकाःशाणमात्रास्तु कृत्वा ग्राह्या यथोचिताः
गुग्गुलुर्योगराजोयं त्रिदोषघ्नो रसायनः॥ ४॥
मैथुनाहारपानानां त्यागो नैवात्र विद्यते॥
सर्वान्वातामयान्कुष्ठमर्शांसि ग्रहणीगदम्॥ ५॥
प्रमेहं वातरक्तं च नाभिशूलं भगंदरम्॥
उदावर्तं क्षयं गुल्ममपस्मारमुरोग्रहम्॥ ६॥
मंदाग्निं श्वासकासांश्च नाशयेदरुचिं तथा॥

१ ग्रणबीज। २ गुगर। ३ खंजवाते इत्यपि पाठः।

रेतोदोषहरः पुंसां रजोदोषहरः स्त्रियाः ॥ ७ ॥
पुंसामपत्यजनको वंध्यानां गर्भदस्तथा ॥
रास्नादिकाथसंयुक्तो विविधं हंति मारुतम् ॥ ८ ॥
काकोल्यादिशृतात्पित्तं कफमारग्वधादिना ॥
दार्वीशृतेन मेहांश्च गोमूत्रेण च पांडुताम् ॥ ९ ॥
मेदोवृद्धिं च मधुना कुष्ठं निंवशृतेन च ॥
छिन्नाकाथेन वातास्त्रं शोथं मूलकजाद्घृतात् ॥१०॥
पाटलाकाथसहितो विषं मूषकजं जयेत् ॥
त्रिफलाकाथसहितो नेत्रार्तिं हंति दारुणाम् ॥
पुनर्नवादिकाथेन हन्यात्सर्वोदराणि च ॥ ११ ॥
इति योगराजगुग्गुलुः शार्ङ्गधरात् ॥
चित्रकं पिप्पलीमूलं यवानीं कारवी तथा ॥
विडंगान्यजमोदा च जीरकं सुरदारु च ॥ १२ ॥
चव्यैला सैंधवं कुष्ठं रास्ना गोक्षुरधान्यकम् ॥
त्रिफला मुस्तकं व्योषं त्वक्क्षीरं तु यवाग्रजम् ॥ १३ ॥
तालीसपत्रं पत्रं च लवंगं सर्जिका सटी ॥
दंती गुडूची हपुषा वाजिगंधा शतावरी ॥ १४ ॥
प्रत्येकं कर्षमात्रं स्याच्चतुःकर्षमयामृता ॥
एतानि सुभिपक्पिष्ट्वा सूक्ष्मचूर्णानि कारयेत् ॥ १५ ॥
यावंत्येतानि चूर्णानि तावन्मात्रो हि गुग्गुलुः ॥
संमर्द्य सर्पिषा गाढं स्निग्धभांडे निधापयेत् ॥ १६ ॥
ततोमात्रां प्रयुंजीत यथेष्टाहारवानपि ॥
योगराज इति ख्यातो योगोयममृतोपमः ॥ १८ ॥

---

१ वचाइत्यपिपाठः । २ वंशलोचनं । ३ जवासं ।
४ पत्रज ।

आमवातादिवातादीन्कृमीन्दुष्टव्रणानपि ॥
प्लीहगुल्मोदरानाहदुर्नामानि विनाशयेत् ॥ १ ॥१
अग्निं च कुरुते दीप्तं तेजोवृद्धिं बलं तथा ॥
वातरोगाञ्जयत्याशु संधिमज्जागतानपि ॥ २० ॥
पादग्रहं क्रोष्टुशीर्षं मन्यास्तंभं गलग्रहम् ॥
बाहुग्रहं पक्षघातं हृद्ग्रहं च कटिग्रहम् ॥ २१ ॥
दुष्टशुक्रं च दुष्टास्त्रं गृध्रसीमक्षिनिग्रहम् ॥
कर्णग्रहं कर्णशूलं शिरःशूलं मरुत्कृतम् ॥ २२ ॥
रास्नाकाथेन हंत्येष केवलो वा प्रशस्यते ॥

इति योगराजगुग्गुलुः सारसंग्रहात् ॥

रास्ना द्विगुणभागा स्यादेकभागास्तथापरे ॥
धन्वयासबलैरंडदेवदारुसठीवचाः ॥ २३ ॥
वासकं नागरं पथ्या चव्यमुस्तापुनर्नवाः ॥
गुडूचीवृद्धदारुश्च शतपुष्पा च गोक्षुरम् ॥ २४ ॥
अश्वगंधा प्रतिविषा कृतमालः शतावरी ॥
कृष्णा सहचरश्चैव धान्यकं बृहतीद्वयम् ॥ २५ ॥
एभिः कृतं पिबेत्काथं शुंठीचूर्णेन संयुतम् ॥
कृष्णचूर्णेन वा योगराजगुग्गुलुना समम् ॥ २६ ॥
अजमोदादिना वापि तैलेनैरंडजेन वा ॥
सर्वांगकंपे कुब्जत्वे पक्षाघातापबाहुके ॥ २७ ॥
गृध्रस्यामामवातेषु श्लीपदे चापतानके ॥
अंत्रवृद्धौ तथाध्माने जंघाजानुगतेर्दिते ॥ २८ ॥
शुक्रामये मेढ्ररोगे वंध्यायोन्यामयेषु च ॥
महारास्नादिराख्यातो ब्रह्मणा गर्भकारणम् ॥ २९ ॥
इति महारास्नादि शार्ङ्गधरात् ॥ अथ रसः ।

सूतहाटकवज्राणि ताम्रं लोहं च माक्षिकम् ॥
तालं नीलांजनं तुत्थमहिफेनं समांशकम् ॥ ३१ ॥
पंचानां लवणानां च भागमेकं विमर्दयेत् ॥
अर्कक्षीरैर्दिनैकं तु रुध्वाधो भूधरे पचेत् ॥ ३२॥
माषैकमार्द्रकद्रावैर्लेहयेद्वातनाशनम् ॥
पिप्पलीमूलजं क्वाथं सकृष्णमनुपाययेत् ॥
सर्वान्वातविकारांश्च निहंत्याक्षेपकादिकान्
इति वातनाशनो रसः ॥
शुद्धं सूतं मृतं लोहं ताप्यं गंधकतालकम् ॥
पथ्याग्निमंथनिर्गुंडी त्र्यूषणं टंकणं क्षिपेत् ॥ ३४ ॥
तुल्यांशं मर्दयेत्खल्वे दिनं निर्गुंडिकाद्रवैः ॥
मुंडीद्रवैर्दिनैकं तु द्विगुंजो वटकीकृतः ॥ ३५ ॥
भक्षयेद्वातरोगार्तो नाम्ना स्वच्छंदभैरवः ॥
रास्नामृतादेवदारुशुंठीवातारिजं शृतम् ॥ ३६ ॥
सगुग्गुलुं पिबेत्कोष्णमनुपानं सुखावहम् ॥
इति स्वच्छंदभैरवो रसः ॥
इति श्रीयो० वातरोगचिकित्सानामचत्वारिंशस्तरंगः ॥

एक चत्वारिंशस्तरंगः

अथ वातरक्तचिकित्सा ॥
वाहनाभिरतस्यासृग्दूषयित्वानिलो वली ॥
स्पर्शाज्ञत्वं मंडलानि स्फोटकानि विसूचिकाम् ॥ १॥
करोत्यंगुलिवैकल्यं वातरक्तमिदं स्मृतम् ॥
कालातिक्रांतमेतत्तु कृच्छ्रं भवति दुर्धरम् ॥ २ ॥
इति रसरत्नप्रदीपात् ॥
वातशोणितिनो रक्तं स्निग्धस्य वहुशो हरेत् ॥

अल्पाल्पंरक्षतायुक्तं यथादोषं यथाबलम् ॥ ३ ॥

इति वृंदात् ॥

वासागुडूचीचतुरंगुलानामेरंडतैलेन पिबेत्कषायम् ॥
क्रमेण सर्वांगजमप्यशेषं जयेदसृग्वातभवं विकारम् ४ ॥
त्रिफलानिंबमंजिष्ठावचाकटुकरोहिणी ॥
वत्सादनीदारुनिशाकषायं नवकार्षिकम् ॥ ५ ॥
वातरक्तं तथा कुष्ठं पामानं रक्तमंडलम् ॥
कृच्छ्रं कापालिकं कुष्ठं पानादेवापकर्षति ॥ ६ ॥

इति नवकार्षिकः क्काथः वृंदात् ॥

वनमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम् ॥
प्रक्षिप्य तोयराशौ त्रिफलां च यथोक्तपरिमाणाम् ॥७॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नतो विबुधैः ॥
मृद्वग्निनाथ विपचेद्दर्व्या संघट्टयेन्मुहुर्यावत् ॥ ८ ॥
अर्द्धकथितं तोयं जातं ज्वलनस्य संपर्कात् ॥
अवतार्य वस्त्रपूतं पुनरपि संपाचयेदयःपात्रे ॥ ९ ॥
सांद्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये ॥
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षडक्षपरिमाणम् ॥ १० ॥
कृमिरिपुचूर्णार्धपलं कर्षंकर्षं त्रिवृद्दंत्योः ॥
पलमेकं तु गुडूच्या दत्वा संचूर्ण्य यत्नेन ॥ ११ ॥
उपयुंज्यात्त्वनुपानं यूषंतोयं सुगंधि सलिलं च ॥
इच्छाहारविहारी भेषजमुपयुंज्यात्सर्वकालमिदम् १२॥
तनुरोधिवातशोणितमेकजमथ द्वंद्वजं च सुचिरोत्थम् ॥
जयति स्रुतं परिशुष्कं स्फुटितमाजान्वुगं चापि ॥ १३ ॥
व्रणकासगुल्मकुष्टश्वयथूदरपांडुमेहांश्च ॥

---

१ गुराणी । २ भेलागुणर । ३ प्रकट ।

मंदाग्निं च चिरोत्थं प्रमेहपिडिकांश्च नाशयत्याशु॥१४॥
सततं निषेव्यमाणः कालवशाद्धंति सर्वगदान् ॥
अभिभूय जरादोषं वितरति कैशोरकं रूपम् ॥ १५
इति कैशोरको गुग्गुलुर्वृंदात् ॥
मंजिष्ठामुस्तकुटजगुडूची कुष्ठनागरैः ॥
भार्गीक्षुद्रावचानिंबनिशाद्वयफलत्रिकैः॥
पटोल कटुकामूर्वाविडंगाऽसनचित्रकैः ॥
शतावरीत्रायमाणाकृष्णेंद्रयववासकैः ॥ १६ ॥
भृंगराजमहादारुपाठाखदिरचंदनैः ॥
त्रिवृद्वरुणकैरातवाकुचीकृतमालकैः ॥ १७ ॥
शाखोटकमहानिंबकरंजातिविषांबुभिः ॥
इंद्रवारुणिकानंतासारिवापर्पटैः समैः ॥ १८ ॥
एभिः कृतं पिबेत्क्वाथं कणागुग्गुलुसंयुतम् ॥
अष्टादशसु कुष्ठेषु वातरक्तेऽर्दिते तथा ॥ १९ ॥
उपदंशे श्लीपदे च प्रसुप्तौ पक्षघातके ॥
मेदोदोषे नेत्ररोगे मंजिष्ठादिः प्रशस्यते ॥ १९ ॥
इति वृहन्मंजिष्ठादिः शार्ङ्गधरात् ॥
मंजिष्ठोग्रावरातिक्तानिशानिंबामृताम्बरैः ॥
सत्रिवृत्खदिरैः क्वाथः सर्वकुष्ठानिलाश्रजित् ॥ २० ॥
इति लघुमंजिष्ठादिः ॥
मंजिष्ठारिष्टवासात्रिफलदहनकं द्वे हरिद्रे गुडूची
भूनिंबो रक्तसारः सखदिरकटुका वाकुची व्याधिघातः॥
मूर्वादंतीविशालाकृमिरिपुजटिलावायसीरासपाठा-
श्यामानंतापटोलैः समरिचमगधैः साधितोयं कषायः ॥

१ त्रिफला। २ मजीठ। ३ कौंआरई। ४ रास्ना। ५ पीपर

पीतो हन्यात्समस्तान् सकलतनुगतान्रक्तजाता-
न्विकारान् ] कंडूविस्फोटकादीनलसकविषम-
श्वित्रपामादिदोषान् ॥ २१ ॥

इत्यपरो मंजिष्ठादिः योगरत्नावलीतः ॥

भूनिंबांबुदनिंबवत्सककणात्रायंत्यनंतामृता-
तिक्ताभीरुफलत्रिकप्रतिविषामूर्वाविशालाजलैः ॥
पाठापर्पटसारिवाद्वयनिशायुग्यष्टिकापद्मकैः
सोशीरैः सपटोलचंदनवचाशम्याकसप्तच्छदैः ॥ २२ ॥
इत्येभिर्गदितैर्जलाष्टगुणितैः प्रस्थं पचेत्सर्पिषो
गव्यं सामलकीरसद्विगुणितं नाम्ना महातिक्तकम् ॥
हंत्येतद्गलगंडमंडलरुजः कंडूं सपांड्वामयां
शोफश्लीपदवातरक्तविकृतीः कुष्ठानि चाष्टादश ॥ २३ ॥

इति महातिक्तकं घृतं सारसंग्रहात् ॥

मरिचं त्रिवृता दंती क्षीरमार्क सकृद्रसः ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचंदनम् ॥ २४ ॥
विशाला करवीरं च हरितालं मन शिला ॥
चित्रकं लांगली चापि विडंगं चक्रमर्दकम् ॥ २५ ॥
शिरीषं कुटजो निंबः सप्तपर्ण्यमृता स्नुही ॥
शम्याको नक्तमालश्च खदिरं पिप्पली वचा ॥ २६ ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं मतम् ॥
आढकं कटुतैलस्य गोमूत्रं च चतुर्गुणम् ॥ २७॥
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥
एतत्तैलं विशेषेण नाशयेत्कुष्ठजान्व्रणान् ॥ २८ ॥

---

१ सुमानर। २ धनपुर। ३ पमार। ४ कजा।

वातरक्तभवान्व्याधीन् पामाविस्फोटचर्चिकाः
नश्यंत्यभ्यंजनादेव वलीपलितमेव च ॥ २९ ॥
इति बृहन्मरिचाद्यं तैलं योगरत्नावलीतः ॥
सारिवासर्जमंजिष्ठायष्टीसिक्थैः पयोन्वितैः ॥
तैलं पक्त्वा प्रयोक्तव्यं पिंडाख्यं वातशोणिते ॥ ३० ॥
इति पिंडतैलं वृंदात् ॥ अथ रसः ॥
शुद्धं सूतं चतुर्गंधं पलं यामं विचूर्णयेत् ॥ ३३ ॥
मृतताम्राभ्रलोहानां दरदं च पलंपलम् ॥ ३१ ॥
सुवर्णं रजतं चैव प्रत्येकं दशनिष्ककम् ॥
माषैकं मृतवज्रं च तालसत्त्वं पलद्वयम् ॥ ३२ ॥
जंबीरोन्मत्तवासाभिः स्नुह्यर्कविषमुष्टिभिः ॥
मर्द्यं हयारिजैर्द्रावैः प्रत्येकेन दिनंदिनम् ॥ ३३ ॥
एवं सप्तदिनं मर्द्यं तद्गोलं वस्त्रवेष्टितम् ॥
वालुकायंत्रगं स्वेद्यं त्रिदिनं लघुवह्निना ॥ ३४ ॥
आदाय चूर्णयेच्छ्लक्ष्णं पलिकं योजयेद्विषम् ॥
द्विपलं पिप्पलीचूर्णं मिश्रः सर्वेश्वरो रसः ॥ ३५ ॥
द्विगुंजो लिह्यते क्षौद्रैः सुप्तिमंडलकुष्ठनुत् ॥
बाकुची देवकाष्ठं च कर्षमात्रं सुचूर्णयेत् ॥
लिहेदेरंडतैलाक्तमनुपानं सुखावहम् ॥ ३६ ॥
इति सर्वेश्वरो रसः शार्ङ्गधरात् ॥
कनकभुंजगवल्ली मालतीपत्रमूर्वा-
रसगेंदकुनटीभिर्मर्दितस्तैलयोगात् ॥
अपहरति रसेंद्रः कुष्ठकंडूविसर्प-
स्फुटितचरणरंध्रश्यामलत्वं त्वचायाः ॥ ३७ ॥

---

१ धतूर। २ कुचला। ३ कनेर। ४ नागवल्ली। ५ कूड।

अस्य तैलस्य लेपेन वातरक्तं प्रशाम्यति ॥ ३८॥

इति रसेंद्रचिंतामणेः ॥

दिवास्वप्नाग्निसंतापं व्यायामं मैथुनं तथा ॥
कटूष्णगुर्वभिष्यंदिलवणाम्लानि वर्जयेत् ॥ ३९ ॥

इति श्रीयोगतरंगिण्यांरक्तचिकित्सानामैकचत्वारिंशस्तरंगः ॥

द्वाचत्वारिंशस्तरंगः।

अथामवातः ॥

वृद्धेन वायुना नुन्न आमो याति कफाशयम् ॥
लभेत स च नाडीभिरामवातोऽयमीरितः ॥ १ ॥
कट्यूरूजानुजंघासुपृथुशोथरुजाकरः ॥
लंघनं स्वेदनं तिक्तदीपनानि कटूनि च ॥ २ ॥
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥
रूक्षः स्वेदो विधातव्यो वालुकापुटकैस्तथा ॥ ३ ॥
उपनाहाश्च कर्तव्यास्तेपि स्नेहविवर्जिताः ॥
सटी शुंठ्यभया चोग्रा देवदारु विषामृता ॥ ४ ॥
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥
चित्रकं कटुका पाठा कलिंगातिविषामृता ॥ ५ ॥
देवदारु वचा मुस्तं नागरातिविषाभया ॥
पिवेदुष्णांबुना नित्यमामवातस्य भेषजम् ॥ ६ ॥
रास्नां गुडूचीमेरंडदेवदारु महौषधम् ॥
पिबेत्सर्वांगगे वाते सामे संध्यस्थिमज्जगे ॥ ७ ॥

इति रास्नादिपंचकम् ॥

रास्नामृतारग्वधदेवदारुत्रिकंटकैरंडपुनर्नवानाम् ॥

---

१ बिजोरे। २ गोखरू।

काथं पिबेन्नागरचूर्णमिश्रं जंघोरुपृष्ठत्रिकपार्श्वशूली॥८
इति रास्नादिसप्तकम् ॥
रास्नैरंडशतावरीसहचरादुस्पर्शवासामृता-
देवाह्वातिविषाभयाघनवचाशुंठीकषायः कृतः ॥
पीतं सोरुबुतैल एष विहितः सामे सशूलेनिले
कट्यूरुत्रिकपार्श्वपृष्ठिजठरे कोष्ठेषु वातार्तिजित् ॥ ९ ॥
इति रास्नादि वृंदात् ॥
पिंडितं गुग्गुलोः प्रस्थं कटुतैलं पलाष्टकम् ॥
प्रत्येकं त्रैफलं प्रस्थं सार्धद्रोणजले पचेत् ॥ १० ॥
पादशेषं ततः पूतं पुनरग्नावधिश्रयेत् ॥
त्रिकटु त्रिफला मुस्तं विडंगं सुरुदारु च ॥ ११ ॥
गुडूच्यग्नित्रिवृद्दंतीवचासूरणमाणकम् ॥
पारदं गंधकं चैव प्रत्येकं शुक्तिसंमितम् ॥ १२ ॥
शुद्धं सहस्त्रं प्रत्ययं जैपालस्य फलं बुधः ॥
त्वगंकुरविनिर्मुक्तं सिद्धे संचूर्ण्य निक्षिपेत् ॥ १३ ॥
ततो माषद्वयं जग्ध्वा पिबेत्तप्तजलादिकम्॥
अग्निं च कुरुते दीप्तं प्रलयानलसंनिभम् ॥ १४ ॥
धातुवृद्धिं वयोवृद्धिं बलं च विपुलं तथा ॥
आमवातं शिरोवातं कटिवातं भगंदरम् ॥ १५ ॥
जानुजंघाश्रितं वातं सकटिग्रहमेव च ॥
अश्मरीं मूत्रकृच्छ्रं च साध्मानं तिमिरं तथा ॥ १६ ॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा ॥
इति सिंहनादगुग्गुलुः वृंदात् ॥
तुलाक्षुण्णरसोनस्य तदर्द्धं लुंचितास्तिलाः ॥

१ पीयावासो । २ जवासो । ३ कदविशेषः । ४ कनकस्य । ५ कुटिता.

पात्रे तु गव्यतक्रस्य पिष्टद्रव्यैः समं क्षिपेत् ॥ १७ ॥
त्र्यूषणं धान्यकं चव्यं चित्रकं गजपिप्पली ॥
अजमोदा त्वगेला च ग्रंथिकं च पलांशकम् ॥ १८ ॥
शर्करायाः पलान्यष्टौ पंचाजाज्याः पलानि च ॥
कृष्णाजाज्याश्च चत्वारि राजिकायास्तथैवच ॥ १९ ॥
पलप्रमाणं दातव्यं हिंगु लोणानि पंच च ॥
आर्द्रकस्य च चत्वारि सर्षपोष्टौ पलानि च ॥ २० ॥
तिलतैलस्य तावंति शुक्तस्यापि च विंशतिः ॥
सिद्धार्थकस्य चत्वारि द्विगुणं मधुनस्तथा ॥ २१ ॥
एकीकृत्य दृढे भांडे धान्यमध्ये विनिक्षिपेत् ॥
द्वादशाहात्समुद्धृत्य प्रातः खादेद्यथाबलम् ॥ २२ ॥
सुरां सौवीरकं चापि मधु वापि पिबेत्ततः ॥
जीर्णे यथेप्सितं भोज्यं दधिपिष्टकवर्जितम् ॥ २३ ॥
एष मासोपयोगेन सर्वव्याधिहरो भवेत् ॥
अशीतिवातरोगाश्च चत्वारिंशच्च पित्तजाः ॥ २४ ॥
विंशतिः श्लेष्मजास्तद्वन्नश्यंते तस्य सेवनात् ॥
योनिशूलं प्रमेहांश्च कुष्ठोदरभगंदरान् ॥ २५ ॥
अर्शोगुल्मक्षयाश्चापिजयेद्बलरुचिप्रदः ॥

इति महारसोनपिंडः योगरत्नावलीतः ॥

महारास्नादिना जग्धो योगराजो हि गुग्गुलुः ॥
आमवातं कटीपृष्ठजानुजंघग्रहं जयेत् ॥ २६ ॥

अत्रापि वातनाशनोरसो योज्यः ॥

दधिमत्स्यगुडक्षीरपोतकीमापपिष्टकम् ॥

---

१ कृष्णजीरो । २ तत्तरुणान्यपि । ३ मांसस्य । ४ पं । ५ पोईशाक ।

वर्जयेदामवातार्तो मांसमानूपजं च यत् ॥ २७ ॥
अभिष्यंदकरा ये च ये चान्ये गुरुपिच्छलाः ॥
वर्जनीयाः प्रयत्नेन ह्यामवातार्दितैर्नरैः ॥ २८ ॥
हितं यूषं च कौलत्थं कोलायहरिमंथयोः ॥
यवान्नं कोरदूषान्नं पुराणं शालिषष्टिकम् ॥ २९ ॥
लावकानां तथा मांसं हितं तक्रेण संस्कृतम् ॥
पटोलं गोक्षुरं चैव वरुणं कारवेल्लकम् ॥ ३० ॥
वास्तुकं शाकमारीषं शाकं पौनर्नवं हितम् ॥
इति श्रीयोगतरंगिण्यामामवातचिकित्सानाम
द्वाचत्वारिंशस्तरंगः ॥

---

त्रयश्चत्वारिंशस्तरंगः।

अथ शूलम् ॥
दोषैः पृथक्समस्तामद्वंद्वैः शूलोष्टधा भवेत् ॥
सर्वेष्वेतेषु शूलेषु प्रायेण पवनो बली ॥ १ ॥
इति वृंदात् ॥
भवेच्छिवीधान्यातिशयभजनाच्छूलमनिल-
प्रधानं तान्यष्टौ त्रिभिरथ समस्तैश्च युगलैः ॥
अजीर्णान्ने त्वस्मिन्भवति जठरे कुक्षियुगले
हृदि प्रौढाटोपो रुगति न मलानां विसरणम् ॥ २ ॥
वमनं लंघनं स्वेदः पाचनं फलवर्तयः ॥
क्षारचूर्णानि गुटिकाः शस्यंते शूलशांतये ॥ ३ ॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ॥
वातस्यानुजयेत्पित्तं पित्तस्यानुजयेत्कफम् ॥ ४ ॥

---

१ मटर। २ चणा ३ कोद्रो। ४ बथुआ। ५ मरसा-
कोशाकचौराई।

वातात्मकं हंत्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ॥
ससैंधवव्योषयुतः सलावः सहिंगुसौवर्चलदाडिमाद्यः ॥५ ॥
विश्वमेरंडजं मूलं क्वाथयित्वा जलं पिबेत् ॥
हिंगुसौवर्चलोपेतं सद्यः शूलनिवारणम् ॥ ६ ॥
वामयेत्पित्तशूलार्तं पटोलेक्षुरसादिभिः ॥
पश्चाद्विरेचयेत्सम्यक्पित्तघ्नैर्विरेचनैः ॥ ७ ॥
गुडशालियवक्षारं सर्पिर्दुग्धं विरेचनम् ॥
जांगलानि च मांसानि भेषजं पित्तशूलिनः ॥ ८ ॥
धात्र्या रसं विदार्या वा त्रायंतीगोस्तनांबुना ॥
पिबेत्सशर्करं सद्यः पित्तशूलनिवारणम् ॥ ९ ॥
श्लेष्मशूलहरी पेया पंचकोलेन साधिता ॥
विदारी दाडिमरसः सव्योपलवणान्वितः ॥ १० ॥
क्षौद्रयुक्तो निहंत्याशु शूलं दोषत्रयोद्भवम् ॥
आमशूले प्रदातव्यं लघुवैश्वानराष्टकम् ॥ ११ ॥
इति लघुवैश्वानराष्टकं वृंदात् ॥
कणाचूर्णस्य कुडवं पट्पलं हविपस्तथा ॥
पलपोडशकं खंडं शतावर्याः पलाष्टकम् ॥ १२ ॥
पलपोडशकं चैव शिवायाः स्वरसस्य च ॥
क्षीरप्रस्थद्वये सार्द्धे लेहीभूतं तदुद्धरेत् ॥ १३ ॥
त्रिजातमुस्तधान्याकं शुंठी मांसी द्विजीरकम् ॥
अभयामलकं चैव चूर्णं द्वादशकार्षिकम् ॥ १४ ॥
तदर्द्धं मरिचं भागं सारं खादिरमेव च ॥
मधुत्रिफलसंयुक्तं खादेत्सिद्धं यथाबलम् ॥ १५ ॥
शूलारोचकहृल्लासच्छर्दिपित्ताम्लरोगनुत् ॥

१. घृतस्य ।

अग्निसंदीपनी हृद्या खंडपिप्पलिका मता ॥ १६ ॥
इति खंडपिप्पलिका ॥
भांगो रसस्य भागश्च हेम्नः पिष्टिं विधाय च ॥
तया द्वादशभागानि ताम्रपत्राणि लेपयेत् ॥ १७ ॥
ऊर्ध्वाधो गंधकं दत्वा पलमात्रं समंततः ॥
क्षारस्य मृगशृंगस्य चूर्णं योज्यं समंततः ॥ १८ ॥
सिंचेन्मत्स्याक्षिनीरेण पक्का यामचतुष्टयम् ॥
पिबेच्छूलहरः सूतो भवेत्त्रिपुरभैरवः ॥ १९ ॥
माषो मध्वाज्यसंयुक्तो देयोस्य परिणामजे ॥
अन्येष्वेरंडतैलेन हिंगुत्रययुतो हितः ॥ २० ॥
इति त्रिपुरभैरवो रसः ॥
हिंगूग्राजंब्वरिश्रीपटुजरणजगत्कृष्णकृष्णाभयायां
वह्निश्रीदीप्यचूर्णं प्रथमत उपरिष्टाल्लवेनाभिवृद्धम् ॥
सेव्यं तत्सांभसैतद्द्विगुणगुडयुतं हंति वाताशसीह्द-
त्पीडां शूलप्रमेहारुचिगरगलरुकुष्ठगुल्मांश्च कासम्॥२१
सेयं शार्दूलगुटिका धन्वंतरिकृता हरेत् ॥
रक्षःपिशाचाहिभयक्लैव्यश्वासामपांडुताः ॥ २२ ॥
इति शार्दूलगुटिका ॥
शिवा वचा हिंगु विषा कलिंगं रुचकं समम् ॥
कर्षमुष्णांबुना पेयमनुपानं हि शूलिभिः ॥ २३ ॥
क्षारं कपर्दाद्द्विपसैंधवौ च व्योषं च संमर्द्य भुजंगवल्ल्याः ॥
रसेन गुंजाप्रमितः प्रदिष्टः समीरशूलेभहरिः प्रचंडः॥२४
इति शूलगजकेसरी रसः ॥

---

१ भागो क्वचित् पाठ । २ मशालः । ३ कुठ । ४ विल्व । ५ जीरे । ६ सोठ । ७ कारोजीरो । ८ त्रिफला ।

रसवलिगगनोर्कं वेतसाम्लं विषं स्या-
त्समामिति पृथगेतद्भावयेद्वस्रमेतैः ॥
कनकभुजगवल्लीकंटकारीजंयाद्भिः
सकमलतिलवासामुंष्टिराष्ट्रंचंबुपूरैः ॥ २५ ॥
अरुणसदृशशाकैर्मातुलान्या यथोज्यः ॥
पटुगणरसवल्ल्या भावयेदार्द्रकाद्भिः
दहनवदनसंज्ञो वल्लमात्रो निहंति ॥
प्रवलपवनशूलं तद्विकारानशेषान् ॥ २६ ॥
इत्यग्निमुखो रसः रसरत्नप्रदीपात् ॥
व्योषग्रंथिवचाग्निहिंगुजरणद्वंद्वं विषं निंबुक-
द्रावैरार्द्रकजै रसैर्विमृदितं तुल्यं मरीचोपमा ॥
कर्त्तव्या गुटिकाथ सा दिनमुखे भुक्ता कवोष्णांबुना ॥
शूलं सष्टविधं निहंति सहसा सूर्यप्रभानामतः ॥ २७ ॥
इति सूर्यप्रभा वटी ॥
व्यायामं मैथुनं मद्यं लवणं कटुकानि च ॥
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान्नरः ॥ २८ ॥
इति श्रीयोगतरंगिण्यां शूलचिकित्सा नाम
त्रयश्चत्वारिंशस्तरंगः ॥

चतुश्चत्वारिंशस्तरंगः

अन्ने जीर्यति यच्छूलं तदेव परिणामजम् ॥
साऽऽध्मानाऽऽटोपविण्मूत्रविबंधमरतिर्व्यथा ॥ १ ॥
अलंकारात् ॥
लंघनं प्रथमं कुर्याद्वमनं सविरेचनम् ॥
वास्तिकर्मापरं चात्र पक्तिशूले प्रशाम्यते ॥ २ ॥

१ नाथ । २ भस्म । ३ [illegible] । ४ [illegible] ।
५ [illegible] । ६ [illegible] । ७ [illegible] ।

नागरतिलगुडकल्कं पयसा संसाध्य यः पुमानद्यात् ॥
उग्रं परिणतिशूलं सप्ताहान्नाशमायाति ॥ ३ ॥
शंबूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ॥
पक्तिजं विनिहंत्येव शूलं विष्णुरिवासुरान् ॥ ४ ॥
लोहकिट्टपलान्यष्टौ गोमूत्राढके पचेत् ॥
क्षीरप्रस्थे च तत्सिद्धं पक्तिशूलहरं परम् ॥ ५ ॥
इति क्षीरमंडूरः ॥
कृष्णाभयालोहचूर्णं लिह्यात्समधुशर्करम् ॥
परिणामभवं शूलं सद्यो हंति न संशयः ॥ ६ ॥
विडंगं चित्रकं चव्यं त्रिफला त्र्यूषणानि च ॥
नवभागानि चैतानि लोहकिट्टसमानि च ॥ ७ ॥
गोमूत्रं द्विगुणं दत्वा मूत्राद्द्विगुणको गुडः ॥
शनैर्मृद्वग्निना पक्का सुसिद्धं पिंडतां गतम् ॥ ८ ॥
स्निग्धभांडे विनिक्षिप्य भक्षयेत्कोलमात्रया ॥
प्राङ्मध्यांते क्रमेणैव भोजनस्य प्रयोजितः ॥ ९ ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम् ॥
कामलां पांडुरोगं च शोफं मेदोनिलार्शसी ॥
शूलार्तानां कृपाहेतोस्तारया प्रकटीकृतः ॥ १० ॥
इति तारामंडूरः वृंदात् ॥
शुद्धं सूतं विषं गंधं पलांशं मर्दयेद्दृढम् ॥
मरिचं पिप्पली शुंठी हिंगु चैव द्वयंद्वयम् ॥ ११ ॥
पलाष्टकं पटूनां च चिंचाक्षारं पलाष्टकम् ॥
सप्तवारं शंखभस्म जंबीराम्लेन सेचयेत् ॥ १२ ॥
पलाष्टकं च संयोज्यं तत्सर्वं निंबुकद्रवैः ॥
दिनं मर्द्य कोलमात्रं भक्षयेत्सर्वशूलनुत् ॥ १३ ॥

अजीर्णोदरमंदाग्निमसाध्यमपि नाशयेत् ॥
शूलदावानलाख्योयं रसो जीर्णशिरोग्रहान् ॥ १४ ॥
इति शूलदावानलो रसः सारसंग्रहात् ॥
इति श्रीयोगतरंगिण्यां परिणामशूलचिकित्सानाम चतुश्चत्वारिंशस्तरंगः ।

पञ्चचत्वारिंशस्तरंगः ।

अथोदावर्तः ॥
वातविण्मूत्रजृंभाश्रुक्षवोद्गारवमींद्रियैः ॥
क्षुत्तृष्णाश्वासनिद्राणां धृत्योदावर्तसंभवः॥ १ ॥
हरीतकी यवक्षारपीलुनी त्रिवृतः तथा ॥
साज्यं चूर्णं पिवेदेषामुदावर्तनिवर्तकम् ॥ २ ॥
हिंगु कुष्ठं वचा स्वर्जि विडं चेति द्विरुत्तरम् ॥
पीतं मद्येन तच्चूर्णमुदावर्तहरं परम् ॥ ३ ॥
मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ॥
गुडक्षारसमायुक्ता फलवर्तिः प्रशस्यते ॥ ४ ॥
खंडपलं त्रिवृतासममुपकुल्याकर्षचूर्णितं श्लक्ष्णम् ॥
प्राग्भोजनस्य समधु विडालपदकं लिहेत्प्राज्ञः ॥ ५ ॥
एतद्गाढपुरीषे पित्ते च कफे च विनियोज्यम् ॥
स्वादुर्नृपयोग्योयं चूर्णो नाराचको नाम्ना ॥ ६ ॥
इति नाराचकं चूर्णं वृंदात् ॥
सुरां सौवर्चलवतीं मूत्रे त्वभिहते पिवेत् ॥
पंचमूलीशृतं क्षीरं द्राक्षारसमथापि वा ॥ ७ ॥
मूत्रकृच्छ्राश्मरीवंधे प्रयुंजीत भिषग्वरः ॥
स्नेहस्वेदैरुदावर्तं जृंभाजं समुपाचरेत् ॥ ८ ॥

१ नष्टे ।

मरिचाद्यं जनैर्धूमैर्निर्निमेषावलोकनैः ॥
अस्रमोक्षोऽस्रजे कार्यः स्निग्धस्नेहनयत्नतः ॥ ९ ॥
क्षवजे सूत्रवर्त्यां च घ्राणचर्यां नयेत्क्षवम् ॥
उद्गारजे क्रमश्चात्र स्नैहिकं धूममाचरेत् ॥ १० ॥
छर्दिघाते यथादोषं नालं स्नेहादिभिर्जयेत् ॥
शुक्रोदावर्तिनं वैद्यो रमयेत्सह कांतया ॥ ११ ॥
क्षुद्विघाते हि संस्निग्धं वृष्यमल्पं च भोजनम् ॥
तृष्णाघाते पिबेन्मद्यं यवागूं स्वादुशीतलाम् ॥ १२ ॥
रसेनाद्यात्तु विश्रांतः श्रमश्वासार्दितो नरः ॥
निद्राघाते पिबेत्क्षीरं माहिषं रजनीमुखे ॥ १३ ॥
तिलतैलेन संमृज्य पत्तले शयनं चरेत् ॥
राढधूमविडव्योपगुडमूत्रैर्विपाचिता ॥ १४ ॥
गुदेगुष्ठसमावर्तिर्विबंधानाहशूलनुत् ॥ १५ ॥
आमाशये शूलमथो गुरुत्वं हृल्लासउद्गारविघातनं च ॥
स्तंभःकटीपृष्ठपुरीषमूत्रे शूलोथ मूर्छाशकृतो वमिश्च ॥
श्वासश्च पक्वाशयजे भवंति तथालसोक्तानि च लक्षणानि
तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम् ॥
शकृद्वमित्वं मतिमानुदावर्तिनमुत्सृजेत् ॥ १७ ॥
अत्र क्रव्यादो रसो देयः ॥
इति श्रीयोगतरंगिण्यां उदावर्तचिकित्सा नाम
पंचचत्वारिंशस्तरंगः

षट्चत्वारिंशस्तरंगः।

अथ गुल्मः ॥
हृद्बस्त्योरंतरे ग्रंथिर्जायते चञ्चलाचलः ॥

---
१ घूमचो। २ मदनफल।

नाभेरधस्तात्संजातः संचारी यदि वाऽचलः ॥ १ ॥
स गुल्मः पंचधा दोषैः सर्वैश्चासृग्भवोऽपि सः ॥
लंघनं दीपनं स्निग्धमुष्णं वातानुलोमनम् ॥
बृंहणं च भवेदन्नं तद्धितं सर्वगुल्मिनाम् ॥ २ ॥
सर्जिकाकुष्ठसहितः क्षारः केतकिजोपि वा ॥
पीतस्तैलेन शमयेद्गुल्मं पवनसंभवम् ॥ ३ ॥
सुखोष्णजांगलरसः सुस्निग्धोव्यक्तसैंधवः ॥
कटुत्रिकसमायुक्तो हितः पानेषु गुल्मिनः ॥ ४ ॥
काकोल्यादिसुसिद्धेन सर्पिषा पित्तगुल्मकम् ॥
जयेच्च शीतलैश्चोपचारैः पित्तनाशनैः ॥ ५ ॥
त्रिफला त्रिवृता दंती दशमूलं पलोन्मितम् ॥
जले चतुर्गुणे पक्त्वा चतुर्भागस्थिते रसे ॥ ६ ॥
सर्पिरेरंडजं तैलं क्षीरं चैकत्र साधयेत् ॥
संसिद्धो मिश्रकःस्नेहः सक्षौद्रः कफगुल्मनुत् ॥ ७ ॥
कफवातविकारेषु कुष्ठप्लीहोदरेषु च ॥
प्रयोज्यो मिश्रकस्नेहो योनिशूलेषु चाधिकम् ॥ ८ ॥
इति मिश्रकः स्नेहः ॥
क्षारद्वयानलव्योषनीली लवणपंचकम् ॥
चूर्णितं सर्पिषा पेयं सर्वगुल्मोदरापहम् ॥ ९ ॥
तिलक्वाथो गुडव्योषहिंगुभार्ङ्गीयुतो भवेत् ॥
पीतो रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ १० ॥
सक्षारत्र्यूषणं मद्यं प्रपिबेदस्रगुल्मनुत् ॥
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा ॥ ११ ॥
नादेयीकुटजाऽर्कशिग्रुबृहतीस्नुग्बिल्वभल्लातक-

१ बहुरस्यपिपाठः । २ मिरचाई । ३ भरणी ।

व्याघ्री किंशुकपारिभद्रकजटाऽपामार्गनीपाऽग्निकान्॥
वासामुष्ककपाटलान् सलवणान्दग्ध्वा रसं पाचितं
हिंग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु॥ १२॥

इति नादेयीरसः॥

क्षीरं वज्रतरूद्भवं दशपलं तावत्पयोप्यऽर्कजं
प्रत्येकं पलपंचकं च लवणं क्षारं च पंचात्मकम्॥
विंशत्यार्कदलैर्युतं पवितरोर्भिन्नैश्चतुर्भिः पलै-
र्मृद्भांडे गुरुमार्गतो गजपुटे वह्नौ विपक्कीकृतम्॥ १३॥
संचूर्ण्याथ कटुत्रयं त्रिफलमप्येकं फलं रामठं
सर्वं वस्त्रपुनीतमेतदमले पात्रे सुखं स्थापयेत्॥
वज्रक्षारमिदं निहंति सकलान्गुल्मानुदग्रान् नृणां
पीतं तक्रयुतं प्रभातसमये कर्षप्रमाणं क्रमात्॥ १४॥
मंदाग्निं सविसूचिकामरुचितामापांडुतां क्षीणतां
श्वासं कासमजीर्णशैत्यपवनव्याधीन्वलासोद्भवान्॥
वज्रक्षारमिदं निवार्य भिषजां कीर्तिं विधत्तेतरां
मांसं द्रावयति स्फुटं घटिकयोर्द्वंद्वे किमन्न्यं पुनः॥१५॥

इति वज्रक्षारं॥

हिंगुग्रंथिकधान्यजीरकवचाचव्याग्निपाठासटी॥
वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम्॥
पथ्यापौष्करवेतसाम्लहपुषाऽजाज्यस्तदेभिः कृतं
चूर्णं भावितमेतदार्द्रकरसे स्याद्बीजपूरस्य च॥ १६॥
आध्मानग्रहणीविकारगुदजान्गुल्मानुदावर्तकान्
प्रत्याध्मानगुदोदराश्मरियुतांस्तूणींद्वयारोचकान्॥

१ ढाक। २ निंब। ३ कदंब। ४ मोखा। ५ पंचपलं। ६ सप्तत्यार्कदलैरिति पुस्तके या पाठः। ७ सेंहुड। ८ तूनीप्रतूनी।

ऊरुस्तंभमतिभ्रमं च मनसो बाधिर्यमष्ठीलिकां
प्रत्यष्ठीलिकिकामथापहरते प्राक्पीतमुष्णांबुना ॥१७॥

हृत्कुक्षवंक्षणकटीजठरांतरेषु-
वस्तिस्तनांत्यफलकेषु च पार्श्वयोश्च ॥
शूलानि नाशयति वातवलासजानि
हिंग्वादि मांद्यमिदमाश्विनसंहितायाम् ॥ १८।

इति हिंग्वाद्यं चूर्णम् ॥

वल्लूरं मूलकं मत्स्याञ्छुष्कशाकानि द्वैदलम् ॥
न खादेद्वास्तुकं गुल्मी मधुराणि फलानि च ॥ १९ ॥
विश्वहिंगुविडैः सार्द्धं क्रव्यादो भक्षितो रसः ॥
गुल्मानशेषान् प्लीहांश्च विद्रधीनपि नाशयेत् ॥ २० ॥
शंखद्रावो जयत्याशु पथ्यासैंधवसंयुतः ॥
दु साध्यानपि गुल्मांश्च पृथुलोपद्रवोत्कटान् ॥ २१ ॥

इति श्रीयोगतरंगिण्यां गुल्मचिकीत्सानाम
षट्चत्वारिंशस्तरंगः

सप्तश्चत्वारिंशस्तरंगः

अथ हृद्रोगः ॥

शोषयित्वा रसं दोषा विगुणा हृदयंगताः ॥
हृदि बाधां प्रकुर्वंति हृद्रोगं तं प्रचक्षते ॥ १ ॥
घृतेन दुग्धेन गुडांभसा वा पिबंति चूर्णं ककुभत्वचो ये
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥२
हिंगूग्रगधाविडविश्वकृष्णा कुष्ठाभयाचित्रकयावशूकम् ॥
पिबेच्च सौवर्चलपौष्कराढ्यं यवांभसा शूलहृदामयघ्नम् ३
कृमिजे च पिबेन्मूत्रं विडंगामयसंयुतम् ॥

१ मुष्कमास्य। २ कूत्र।

हृदि स्थिताः पतंत्येव मध्यस्थाः कृमयो नृणाम् ॥ ४ ॥

इति वृंदात् ॥

वाल्हीकविश्वदहनामययावशूक-
पथ्यावचाविडकणारुचकैर्निहन्यात् ॥
सूतः सपुष्करजटो यववारिपीतो
हृद्रोगमग्निविकलत्वमतिप्रवृद्धम् ॥ ५ ॥

इति रसरत्नप्रदीपात् ॥

इति श्रीयोगतरंगिण्यां हृद्रोगचिकित्सानाम सप्तचत्वारिंशस्तरंगः

अष्टचत्वारिंशस्तरंगः

अथ मूत्रकृच्छ्रम् ॥

पृथक्समस्तैस्तैः शुक्रविड्रोधादभिघाततः ॥
अश्मर्याश्चाष्टधेति स्यान्मूत्रकृच्छ्ररुजाकरः ॥ १ ॥
मूत्रकृच्छ्रः स यः कृच्छ्रान्मूत्रयेद्वस्तिरोधकृत् ॥
अभ्यंजनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान्॥
स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे॥
अमृता नागरं धात्री वाजिगंधा त्रिकंटकम् ॥
प्रपिबेद्वातरोगार्तः शूलवान्मूत्रकृच्छ्रवान् ॥ ३ ॥
सेकावगाहाः शिशिराः प्रदेहाः
श्रेष्ठो विधिर्वस्तिपयोविकाराः ॥
द्राक्षाविदारीक्षुरसैर्घृतं च
कृच्छ्रेषु पित्तप्रभवेषु कार्यम् ॥ ४ ॥
कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् ॥

१ हिंगुः। २ रससिंदूर। ३ वेगरोधाभिघातत इत्यपि पाठः। ४ अफारो। ५ गोखरू। ६ लेपाः। ७ नाम।

पित्तकृच्छ्रहरं पंचमूलं वस्तिविशोधनम् ॥ ५ ॥
एतत्सिद्धं पयः पीतं मेढ्रगं हंति शोणितम् ॥
मूत्रेण सुरया वापि कदलीस्वरसेन वा ॥ ६ ॥
कफकृच्छ्रविनाशाय सूक्ष्मां पिष्ट्वा त्रुटीं पिबेत् ॥
यवक्षारसमायुक्तं पिबेत्तक्रं प्रकामतः ॥ ७ ॥
मूत्रकृच्छ्रविनाशाय तथैवाश्मरिनाशनम् ॥
तत्राभिघातजे कुर्यात्सद्यो व्रणचिकित्सितम् ॥ ८ ॥
लेह्यं शुक्रविबंधोत्थे शिलाजतु समाक्षिकम् ॥

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तंदुलजलैर्लुलितानि पीत्वा ॥
दद्याद्गुडेन सहितान्यवलोड्य धीमा-
नासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ ९ ॥

निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः
सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः ॥ १० ॥
इतिवृंदात् ॥

प्रत्येकं तोलमादाय सूतं ताम्रं तथाभ्रकम् ॥
द्विगुणं गंधकं चैव कृत्वा कज्जलिकां शुभाम् ॥ ११ ॥
मुस्ता दाडिमतोयेन केतकीपुष्पवारिणा ॥
सहदेव्याः कुमार्याश्च पर्पटोशीरयोरपि ॥ १२ ॥
तालमूल्याश्ववेर्याश्च भावयित्वा दिनंदिनम् ॥
तिक्तागुडूचिकासत्त्वं पर्पटोशीरमागधी ॥ १३ ॥
श्रीखंडं सारिवा चैषां समानं चूर्णकं क्षिपेत् ॥
द्राक्षापलकषायेण सप्तधा परिभावयेत् ॥ १४ ॥

---

१ लघुइलायची । २ कोलमित्यपिपाठः । ३ ग्वारकोपाठो । ४ तालमखानो । ५ सुनावर । ६ बिल्व ।

छायाशुष्कं विधायाथ वटी कार्या चणोपमा ॥
महाचंद्रकलानाम्ना रसेंद्रोयं निरूपितः ॥ १५ ॥
अम्लपित्तप्रशमनः प्रदरध्वंसकारकः ॥
अंतर्बाह्यमहादाहविध्वंसनघनाघनः ॥ १६ ॥
ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥
रक्तमूर्छारक्तपित्ततापज्वरवनानलः ॥ १७ ॥
मूत्रकृच्छ्राणि सर्वाणि प्रमेहानपि दुस्तरान् ॥
हरत्येष रसो नूनं महाचंद्रकलाभिधः ॥ १८ ॥
इति सारसंग्रहात्

इति श्रीयोगतरंगिण्यां मूत्रकृच्छ्रचिकित्सा-
नामाष्टचत्वारिंशस्तरंगः ॥

एकोनपञ्चाशत्तरङ्गः ।

अथ मूत्राघातः ॥

मूत्रनाडीगतैर्दोषैरल्पमल्पं सवेदनम् ॥
यदा प्रवर्तते मूत्रं मूत्राघातः स उच्यते ॥ १॥
तद्भेदा वातकुंडलिकाद्यास्त्रयोदश ॥
पटोलाद्यावशूकाच्च पारिभद्रानिलावपि ॥
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम् ॥ २ ॥
पिबेत्कुडाद्वकं सम्यग्लिप्सादेतान्पृथक्पृथक् ॥
त्रिफलाकल्कसंयुक्तं लवणं चापि यः पिबेत् ॥ ३ ॥
निदिग्धिकायाः स्वरसं पिबेद्वातातिवत्सुतम् ॥
जले कुंकुमकल्कं वा सक्षौद्रमुषितं निशि ॥ ४ ॥
स्त्रीणामतिप्रसंगेन शोणितं यस्य सिच्यते ॥

चित्रकं सारिवा चैव बला कालापि सारिवा॥
द्राक्षाविशालापिप्पल्यस्तथा च त्रिफला भवेत् ॥ ६ ॥
तथैव मधुकं दद्यात्पुष्टान्यामलकानि च ॥
घृताढकं पचेदेतैः कल्कैरक्षसमन्वितैः ॥ ७ ॥
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् ॥
शीतं परिशृतं चैव शर्कराप्रस्थसंयुतम् ॥ ८ ॥
तुगाक्षीर्या च तत्सर्वं मतिमान्परिमिश्रयेत् ॥
ततो मितं पिबेत्काले यथादोषं यथाबलम् ॥ ९ ॥
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो नरः ॥
रक्तरेता ग्रंथिरेताः पिबेदिच्छन्नऽरोगताम् ॥ १० ॥
सर्पिरेतत्प्रयुंजीत स्त्रीगर्भं लभतेऽचिरात् ॥
असृग्दोषे योनिदोषे मूत्रदोषे तथैव च ॥
प्रयोक्तव्यमिदं सर्पिश्चित्रकाद्यं सदा बुधैः ॥ ११ ॥
इति चित्रकाद्यं घृतं चरकात् ॥
अत्रापि चंद्रकलारसः प्रशस्यते ॥

इति श्रीयोगतरंगिण्यां मूत्राघातचिकित्सा नाम षट्चत्वारिंशस्तरंगः ॥ ४६ ॥

---

पञ्चाशस्तरङ्गः ।

अथाश्मरी ॥
निरुध्य मूत्रमार्गं या यातनां जनयेद्भृशम् ॥
कटीवस्तिप्रदेशेषु साश्मरीति निगद्यते ॥ १ ॥
इति रसरत्नप्रदीपात् ॥
विशोषयेद्बस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ॥

---

१ कृष्णसारिवात्वर्थः । २ पठ्यमाणा ।

पदातदाश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः२
इति रुग्विनिश्चयात् ॥

वरुणस्य त्वचं श्रेष्ठां शुंठीगोक्षुरसंयुताम् ॥
यवक्षारगुडं दत्वा क्राथयित्वा तु तं पिवेत् ॥
अश्मरीं वातजां हंति चिरकालानुवंधिनीम् ॥ ३ ॥

वीरतरुसहेचरद्वयदर्भवृक्षादनीगुंद्रानलकुशकाशाग्निमंथमोरटावसुकवसिरभल्लूककुरंटकेंदीवरकपोतंचकाश्वदंष्ट्रा चेति ॥

वीरतर्वादिरित्येष गणो मारुतनाशनः ॥
अश्मरीशर्कराकृच्छ्रमूत्राघातरुजापहः ॥ ४ ॥
इति वीरतर्वादिः सुश्रुतात् ॥

वीरतर्वादिकं क्राथं तृणपंचसमन्वितम् ॥
भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव तु ॥ ५ ॥
वरुणत्वक्छिलाभेदशुंठीगोक्षुरकैः कृतः ॥
कषायः क्षीरसंयुक्तः शर्करां प्रभिनत्त्यरम् ॥ ६ ॥

क्षारो निपीतस्तिलनालजातः
समाक्षिकः क्षीरयुतस्त्रिरात्रात् ॥
हंत्यश्मरीं सैंधुविमिश्रितं वा
निपीयमानं रुचकं प्रयत्नात् ॥ ७ ॥

गोपालकर्कटीमूलं पिष्टं पर्युषितांभसा ॥
पीयमानं त्रिरात्रेण पातयेच्चाश्मरीं हठात् ॥ ८ ॥
इति राजमार्तंडात् ॥

---

१ खस। २ पीयावासो अडूसो। ३ गुदोचो। ४ गोंदी। ५ तेजवत। ६ कटेरीव क्राभपिपाउ। ७ गोखरू। ८ सीप। ९ मध। १० काकरी।

एलोपकुल्यामधुकाश्मभेदकौंतीश्वदंष्ट्रावृषकोरुबूकैः ॥
शृतं पिबेदश्मजतु प्रगाढं सशर्करे साश्मरिमूत्रकृच्छ्रे ॥ ९

इति योगशतात्

हरीतकी गोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ॥
क्वाथं पिबेच्छर्करयावगाढं सशर्करे साश्मरीमूत्रकृच्छ्रे ॥ १०

निर्गुंडिकाभिर्बलिसूततानं
विमर्द्य गोलं सिकताख्ययंत्रे ॥
पक्वास्य वल्लः किल मातुलुंगी-
जलैर्निहंत्यश्मरिरोगमुग्रम् ॥ ११ ॥

इति त्रिविक्रमो रसः रसरत्नप्रदीपात् ॥

अत्रापि चंद्रकलैव रसो योज्यः ॥

इति श्रीयोगतरंगिण्यां अश्मरीचिकित्सा नाम
पंचाशत्तरंगः ॥ ५० ॥

## एकपञ्चाशत्तरंगः ।

* अथ प्रमेहाः ॥

दशषट् चापि चत्वारः कफपित्तसमीरजाः ॥
साध्या याप्या असाध्यास्ते प्रमेहाः क्रमशो नृणाम् ॥ १
श्यामाककोद्रवोद्दालगोधूमचणकाढकी ॥
कुलत्थाश्च हिता भोज्ये मेहिनां देहिनां सदा ॥ २ ॥
सौवीरकं सुरां शुक्तं तैलं क्षीरं गुडं घृतम् ॥
अम्लेक्षुरसपिष्टान्नं मेहे ह्येतानि वर्जयेत् ॥ ३ ॥

इति वृंदात्

---

१ मटर । २ अरहर ।

* औषध इस्रीजुलावकी ॥ जीरेस्येतनोले २ सोयानोले १ रेवतचीनी तोले १ हरडोनी तोले १ एषां चूर्णं मासे ६ तथा ७ हरीतक्यादिक्वाथेन दद्यात् ॥ सर्वप्रमेहमूत्रकृच्छ्रमूत्राघाताश्मर्यादिषु नशस्तम् ।

कलत्रिकं दारुनिशां विशालां
मुस्तां च निःक्काथ्य निशासकल्कम् ॥
पिबेत्कषायं मधुसंयुतं च
सर्वप्रमेहेषु समुत्थितेषु ॥ ४ ॥
इति योगशतात् ॥
न्यग्रोधोदुंबराश्वत्थस्योनाकारग्वधासनम् ॥
आम्रं कपित्थं जंबूं च प्रियालं ककुभं धवम् ॥ ५ ॥
मधूकं मधुकं लोध्रं वरुणं पारिभद्रकम् ॥
पटोलं मेषशृंगी च दंती चित्रकमानकम् ॥ ६ ॥
करंजं त्रिफला शक्रं भल्लातकफलानि च ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ ७ ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ॥
फलत्रयं चानुपिबेत्तेन मूत्रं विशुध्यति ॥ ८ ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ॥
प्रशमं यांति योगेन पिडिका न च जायते ॥ ९ ॥
इति न्यग्रोधाद्यं चूर्णं वृंदात् ॥
शिलाजतु नरः पीत्वा प्रातः क्षीरसितायुतम् ॥
मुच्यते सर्वमेहेभ्यस्त्रिसप्तदिवसैर्नरः ॥ १० ॥
शरावकाद्याः पिडिकाः शोधयेच्छोथवद्बिपक्व् ॥
पक्वा चिकित्सेद्व्रणवत्संधिमर्मसमुद्भवाः ॥ ११ ॥
वेल्लव्योषफलत्रयत्रिलवणद्विक्षारचव्यानल-
श्यामापिप्पलिमूलमुस्तकसटीमाक्षिकधातुत्वचः ॥
पद्मंथामरदारुवारणकणाभूनिंबदंतीनिशा-

१मानकद। २इंद्रजो। ३सूक्ष्मेतिपाठः। ४धनियो। ५स्वर्णमाक्षिक। ६वालचीनी। ७पीपल। ८गजपीपर।

पत्रैलातिविषापिचुप्रमितयो लोहस्य कर्षाष्टकम् ॥ १२ ॥
त्वक्क्षीरी पलिका पुरोदशपलान्यष्टौ शिलाजन्मनो
मीनांड्याः कुडवः कृतेति गुटिका संयोज्य सर्वं भिषक् ॥
तत्रैकां प्रतिवासरं हि सघृतक्षौद्रेण लिह्यादिमाम् ॥
तक्रं मस्तु पयो घृतं मधुरसं पश्चात्पिबेन्मात्रया ॥ १३ ॥
अर्शांसि प्रदरं ज्वरं च विषमं नाडीव्रणानश्मरीं
कृच्छ्रं विद्रधिमाग्निमांद्यमुदरं पांड्वामयं कामलाम् ॥
यक्ष्माणं सभगंदरं सपिडकागुल्मप्रमेहारुची
रेतोदोषमुरःक्षतं कफमरुत्पित्तार्तिमुग्रां जयेत् ॥ १४ ॥
वृद्धं संजनयेद्युवानमसमौजस्कं बलं वर्द्धये-
देतस्या न निषिद्धमन्नमसकृन्नाध्वागमं मैथुनम् ॥
विख्याता गुटिकेयमर्चिततरा चंद्रप्रभा नामतः
सांद्रा नंदकरी तनोति च रुचिं चंद्रेणतुल्यां तनौ ॥ १५ ॥

इति चंद्रप्रभागुटिका योगरत्नावलीतः ॥

हेमांभोधरचंदनं त्रिकटुकं धात्री प्रियालं कुहू-
मंज्जानस्त्रिसुगंधि जीरकयुतं शृंगाटकं वंशजम् ॥
जातीकोशलवंगधान्यकयुतं प्रत्येककर्षद्वयम्
पूगस्याष्टपलं विचूर्ण्य च पयःप्रस्थत्रये सर्पिषः ॥ १६ ॥
दद्याद्गोः कुडवं सितार्धकतुलां धात्री वरी द्व्यंजली
मंदाग्नौ विपचेन्निपक्वशुभदिने सुस्निग्धभांडे क्षिपेत् ॥
यः खादेद्दिनशः प्रभातसमये मेहांश्च जीर्णज्वरं
पित्तं साम्लमसृक्स्रुतिं गुदट्शोषंक्राक्षिनासास्रु च ॥ १७ ॥
मंदाग्निं च विजित्य मुष्टिमतुलां कुर्याच्च शुक्रप्रदं

---

१ खांड। २ बेर। ३ सिंगाड।

पूगं गर्भकरं परं गदहरं क्षीणामसृग्दोषजित् ॥ १८ ॥
इति पूगीपाकः योगरत्नावलीतः ॥
श्रीखंडं त्रिसुगंधिकेसरकणा शुंठी वरी चांबुदं
शृंगाटं जलजं प्रियालबदरीधात्र्यब्जबीजं तुगा ॥
द्राक्षाजीरकधान्यकं ससुमनःपुष्पं च जातीदलं
शुद्धारं दरदं पलार्धकमिदं सन्नारिकेरांत्रमत् ॥ १९ ॥
पूगं चाष्टपलं च सौरभपयः प्रस्थत्रये संपचेत्
पश्चादामलकी वरी जलशरावार्धैश्च पिष्टीकृतम् ॥
शुष्कीकृत्य कटाहके च सघृते मंदाग्निना चूर्णयुक्
वंगव्योमपलार्द्धकं तु तुलया खंडेन पाकीकृतम् ॥ २० ॥
भुक्तं प्रातरिदं प्रमेहपवनाध्मानानि शूलानि च
क्षैण्यं दैन्यमसृक्स्रुतिं मुखगुदश्रोत्राक्षिलोमोद्भवाम् ॥
हन्याद्रोगजराविपत्तिशमनं मंदाग्निसद्बृंहणं
बल्यं वृद्धिकरं प्रमोदजनकं पूगं न किं सेव्यते ॥ २१ ॥
इति पूगीपाकः सारसंग्रहात्
दंतीदारुसठीशिलाह्वदहनैर्भल्लातकार्काभया-
स्नुग्वर्षाभ्रकरंजयुग्मवरुणैर्युक्पंचमूलीयुतैः ॥
इत्येभिर्दशपालिकैः सृतमपां द्रोणे पृथक्प्रस्थिकै-
रेभिश्चाग्निकुलत्थकोलकयवैः पादावशेषीकृते ॥ २२ ॥
अस्मिन्त्रीपकिरातरोहिषकणार्कपिल्लविश्वौषधै-
र्भार्गीचव्यगजाह्वपिप्पलियुतैरेभिश्च सिद्धं घृतम् ॥
एतन्मेहहरं क्षयक्षयकरं हिक्कापहं गुल्मजित्
पांडुत्वक्प्रतियातिहृद्गुदरुजः प्रध्वंसि धान्वंतरम् ॥ २३ ॥

---

१ लवंग। २ शुद्धलोहं। ३ नारियलकोगोला। ४ गोदुग्ध। ५ विसखपरा।

इति धान्वंतरं घृतं चिकित्सात्तः ॥

सूतं कांतं गंधतीक्ष्णे ताप्यं व्योषं फलत्रिकम् ॥
शिलाजतु शिला कोलबीजं रात्रिः कपित्थजम् ॥२४॥
त्रिःसप्तकृत्वो भृंगाद्भिर्भावयेन्निष्कसंज्ञकः ॥
मेघनादाख्यसूतश्च सर्वमेहान्प्रणाशयेत् ॥ २५ ॥
महानिंबस्य बीजानि पेषयेत्तंदुलांबुना ॥
सघृतान्यचिराद्धन्युः पानान्मेहांश्चिरंतनान् ॥ २६ ॥

इति मेघनादो रसः ॥

सूताभ्रमामलजलैः सप्ताहं भावयेद्रसम् ॥
हरिशंकरसंज्ञः स्याद्भुक्तः सर्वप्रमेहजित् ॥ २७ ॥

इति हरिशंकरो रसः ॥

रसस्य भस्मना तुल्यं वंगभस्म प्रकल्पयेत् ॥
अस्य गुंजाद्वयं हंति मेहान्क्षौद्रसमन्वितम् ॥ २८ ॥

इति वंगेश्वरो रसः ॥

एला सकर्पूरसिता सधात्री
जातीफलं गोक्षुरशाल्मलीत्वक् ॥
सूताभ्रवंगायसभस्मसर्व-
मेतत्समानं परिमर्दनीयम् ॥
निष्कार्धमात्रो मधुनावलीढो
निहंति सर्वामयमेहजातम् ॥ २९ ॥

इति प्रमेहकुठारो रसः रसरत्नप्रदीपात् ॥

इति श्रीयोगतरंगिण्यां प्रमेहचिकित्सानामैकपञ्चाशस्तरंगः ॥

---

१ हरिद्रा ।

द्विपञ्चाशस्तरंगः।

अथ मेदः ॥

अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ॥
मधुरान्नरसात्प्रायः स्नेहान्मेदो विवर्धते ॥ १ ॥
मेदो मांसविवृद्धित्वात्स्थूलस्फिगुदरस्तनः ॥
अयथोपचयोत्साहो नरोतिस्थूल उच्यते ॥ २ ॥

इति रुग्विनिश्चयात् ॥

प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ॥
केवलं वा रजन्यंते पीतं मेदस्विनां हितम् ॥ ३ ॥
सचव्यजीरकव्योषहिंगुसौवर्चलाभयाः ॥
मस्तुना सक्तवः पीता मेदोवृद्धिविनाशनाः ॥ ४ ॥
क्षारं वा तालपत्रस्य हिंगुयुक्तं पिबेन्नरः ॥
मेदोवृद्धिविनाशाय भक्तमंडसमन्वितम् ॥ ५ ॥
वासादलरसोपेतः शंखचूर्णेन संयुतः ॥
विल्वपत्ररसो वापि गात्रदौर्गंध्यनाशनः ॥ ६ ॥

इति श्रीयो० मेदश्चिकित्सानामद्विपंचाशस्तरंगः ॥

---

त्रयःपञ्चाशस्तरंगः।

अथोदरम् ॥

रुध्वा स्वेदांवुवाहीनि दोषाः स्रोतांसि संचिताः ॥
प्राणाग्न्यपानान्संदूष्य जनयंत्युदरं नृणाम् ॥ १ ॥

इति वृंदात् ॥

रक्तशालिर्यवा मुद्गा जांगलाश्च रसा हिताः ॥
विरेकास्थापनं शस्तं सर्वेषु जठरेषु च ॥ २ ॥
क्षीरेणैरंडजं तैलं पिबेन्मूत्रेण वा सकृत्[1]॥

---

१ एकवार।

ज्योतिष्मत्याः पिबेत्तैलं पयसा च विरेचनम् ॥ ३ ॥
सर्वेभ्यो जठरेभ्यस्तु शीघ्रं मुच्येत मानवः ॥
वातोदरी पिबेत्तैलं पिप्पलीलवणान्वितम् ॥ ४ ॥
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥
यवानीसैंधवाजाजीव्योषयुक्तं कफोदरी ॥ ५ ॥
सन्निपातोदरी तक्रं त्रिकटुक्षारसैंधवैः ॥
त्रिभिरथ परिवृद्धं पंचभिः सप्तभिर्वा
दशभिरथ विवृद्धं पिप्पलीवर्द्धमानम् ॥
इति पिबति पुमान्यस्तस्य न श्वासकास-
ज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ ६ ॥
स्नुहीपयोभावितानां पिप्पलीनां पयोश्नतः ॥
सहस्रमुपयुंजीत शक्तितो जठरामयी ॥ ७ ॥
पटोलमूलं रजनी विडंगं त्रिफलात्वचम् ॥
कंपिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ॥ ८ ॥
षडाद्यान्कार्षिकान्भागानंत्यान्द्वित्रिचतुर्गुणान् ॥
श्लक्ष्णचूर्णं ततो मुष्टिं गवां मूत्रेण वा पिबेत् ॥ ९ ॥
विरिक्तो जांगलरसैर्भुंजीत मृदुमोदनम् ॥
मंडं पेयां च पीत्वा वा सव्योषं षडहं पयः ॥ १० ॥
शृतं पिबेत्तच्चूर्णं पिबेदेवं ततः पुनः ॥
हंति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥
कामलां पांडुरोगं च श्वयथुं चापकर्षति ॥ ११ ॥
इति पटोलाद्यं चूर्णम् ॥
यवानी हपुषा धान्यं त्रिफला सोपकुंचिका ॥

१ मालकांगुनी । २ मिरचाई । ३ प्रमाण । ४ कुनरेपनः सन । ५ पहुंदिन । ६ कलोंजी ।

कारवी पिप्पलीमूलमजगंधा सठी वचा ॥ १२ ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रकम् ॥
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपंचकम् ॥ १३ ॥
विडंगं च समांशानि दंतीभागत्रयं तथा ॥
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥ १४ ॥
एवं नारायणो नाम चूर्णो रोगगणापहः ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदरांबुना ॥ १५ ॥
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥
दधिमंडेन विट्संगे दाडिमांबुभिरर्शसि ॥ १६ ॥
परिकर्तौतिवृक्षाम्लैरुष्णांबुभिरजीर्णके ॥
भगंदरे पांडुरोगे कासे श्वासे गलग्रहे ॥ १७ ॥
हृद्रोगे ग्रहणीदोषे कुष्ठे मंदानले ज्वरे ॥
दंष्ट्राविषे मूलविषे गरले कृत्रिमे विषे ॥
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ १८ ॥
इति नारायणं चूर्णम् ॥
त्रिवृता त्रिफला पाठा दंती कटुकरोहिणी ॥
चतुरंगुलमज्जा च तथा च कटुकत्रयम् ॥ १९ ॥
चित्रकं च बृहत्यौ च तथा च गजपिप्पली ॥
स्नुहीक्षीरं पलं दद्याद् घृतस्याष्टौ प्रदापयेत्॥ २० ॥
यावत्पिबति तद्विंदूंस्तावद्वेगान्विरिच्यते ॥
एतद्विंदुघृतं सिद्धमृषिभिः समुदाहृतम् ॥ २१ ॥
इति विंदुघृतम् ॥
रोहीतकाभयाशुंठीः पिबेन्मूत्रेण शक्तितः ॥

१ पोक । २ इन्द्रायन । ३ मद्यभेदेन । ४ मजनागारी नविषे । ५ अटी ।

सर्वोदरहरः ह्लीहमेहार्शःकृमिगुल्मनुत् ॥ २२ ॥
पातव्यो युक्तितः क्षारः क्षीरेणोदधिंशुक्तिजः ॥
पयसा च प्रयोक्तव्याः पिप्पल्यः ह्लीहशांतये ॥ २३ ॥
औदकानूपजं मांसं शाकं पिष्टकृतोंस्तिलाः ॥
व्यायामाध्वदिवास्वापपानाजीर्णं विवर्जयेत् ॥ २४ ॥

अत्र क्रव्यादो रसो हितः ॥

सूतगंधकणापथ्यातुल्यारग्वधकाढकम् ॥
मर्दयेद्वत्रिदुग्धेन तन्मापं खादयेद्दिनम् ॥ २५ ॥
नृणां जलोदरं हंति पथ्यं शाल्योदनं दधि ॥
चिंचाफलरसं चानुपानमत्र प्रयोजयेत् ॥ २६ ॥

इत्युदरारि रसः ॥

भ्रष्टटंकणतुल्यं तु मरिचं च रसं समः ॥
गंधकं पिप्पली शुंठी द्वौद्वौ भागौ विचूर्णयेत् ॥ २७ ॥
सर्वतुल्यं क्षिपेद्दंतीबीजं सर्वमकल्मषम् ॥
द्विगुंजं रेचनं चैतदुदराणि व्यपोहति ॥ २८ ॥

इति नाराचः ॥

इति श्रीयोगतरंगिण्यां उदरचिकित्सा नाम
त्रयःपंचाशस्तरंगः ॥

---

चतुःपञ्चाशस्तरंग ।

अथ श्वयथुः ॥

रक्तपित्तकफाद्वायुः शिराः प्राप्य बाह्यगाः ॥
शोथं करोति नवधा दोपक्ष्वेडाभिघाततः ॥ १ ॥
शुंठीपुनर्नवैरंडपंचमूलीशृतं जलम् ॥
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे ॥ २ ॥

---

१ सीपी । २ कृतं तिलाइत्यपि पाठः । ३ विषः ।

पटोलत्रिफलारिष्टदार्वीक्वाथः सगुग्गुलुः ॥
हंति पित्तभवं शोथं तृष्णाज्वरसमन्वितम् ॥ ३ ॥
पुनर्नवाविश्वत्रिवृहुडूचीशम्याकपथ्यामरदारुकल्कम् ॥
शोथे कफोत्थे महिषाक्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैव ४
कफे तु कृष्णा सिकता पुराणा पिण्याकशिग्रुत्वगभिप्रलेपः.
गुडार्द्रकं वा गुडपिप्पलीं वा गुडाभयां वा गुडनागरं वा ५
कर्षाभिवृद्ध्या त्रिपलप्रमाणं
खादेन्नरः पक्षमथापि मासम् ॥
शोथप्रतिश्यायगलास्यरोगान्
सश्वासकासारुचिपीनसादीन् ॥ ६ ॥
जीर्णज्वरार्शोग्रहणीविकारान्
हन्यात्तथान्यानपि वातरोगान् ॥
कृष्णाग्निविश्वघनजीरककंटकारी
पाठानिशाकरिकणामगधाजटानाम् ॥ ७ ॥
चूर्णं कवोष्णसलिलेन विलोड्य पीतं
नातः परं श्वयथुरोगहरं नराणाम् ॥ ८ ॥
ग्राम्यतैलघृतमद्यानि गुर्वम्ललवणानि च ॥
जांगलं च दिवास्वापं शोथवान्वर्जयेन्नरः ॥ ९ ॥
इति श्रीयोगतरंगिण्यां शोथचिकित्सा नाम
चतुःपंचाशस्तरंगः ॥

पञ्चपञ्चाशस्तरंगः

अथ मुष्कवृद्धिः ॥
अधोगतिर्वंक्षणतो मुष्कौ प्राप्य करोति हि ॥
दोषास्त्रमेदोमूत्रांत्रैः सप्तधांडोन्नतिं मरुत् ॥ १ ॥

१ पीपरामूल ।

यः पित्तदोषेण कुरंडरोगो भवेच्छिशोर्दक्षिणमुष्कभागे ॥
ततोर्द्धभागे श्रवणस्य वेधं वामस्य कुर्यात्परतोऽपरत्र ॥२
पथ्याक्षबीजशुंठीनिर्गुंडीनां मिथः समैश्चूर्णैः ॥
घृतमधुसहिता पिंडी न क्षमते मुष्कवृद्धिकथाम् ॥ ३ ॥
त्रिफलाक्काथगोमूत्रं पिबेत्प्रातरतंद्रितः ॥
कोष्ठवातोद्भवं शूलं निहन्याद्वृषणोद्भवम् ॥ ४ ॥
कषायलेपयोः प्रायो युज्यते रक्तचंदनम् ॥
चंदनं मधुकं पद्ममुशीरं नीलमुत्पलम् ॥ ५ ॥
क्षीरपिष्टैः प्रलेपः स्याद्दाहशोथव्रणापहः ॥
पंचवल्कलकल्केन सघृतेन प्रलेपनम् ॥ ६ ॥
सर्वं पित्तहरं कार्यं रक्तजे रक्तमोक्षणम् ॥
वचासर्षपतैलेन प्रलेपः शोथनाशनः ॥ ७ ॥
तैलमैरंडजं पीतं बलासिद्धं पयोऽन्वितम् ॥
आध्मानशूलोपचितामंडवृद्धिं जयेन्नरः ॥ ८ ॥
गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैंधवचूर्णयुक्ताम् ॥
खादेन्नरः कोष्णजलानुपानान्निहंति कूरंडमतिप्रवृद्धम् ९

इतिश्रीयोगतरंगिण्यां अंत्रवृद्धिचिकित्सा नाम पञ्चपंचाश स्तरंगः ॥

---

षट्पंचाशत्तरंगः

अथ वृध्नः ।

वंक्षणे दोषजः शोथो वृध्न इत्यभिधीयते ॥
मूलं बिल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः ॥ १ ॥
श्यामापूतिकरंजशिग्रुकतर्वर्श्चोपधारुष्करम् ॥
कृष्णाग्रंथिकचव्यपंचलवणाक्षाराजमोदान्वितम् ॥२॥

---

१ कर्णस्य । २ मिलाये ।

पीतं कांजिककोष्णतोयमथितैश्चूर्णीकृतं व्रध्नजित् ॥२॥
भृष्टश्चैरंडतैलेन कल्कः पथ्यासमुद्भवः ॥
कृष्णासैंधवसंयुक्तो वृध्नरोगहरः परः ॥ ३ ॥
इति श्रीयोगतरंगिण्यां वृध्नचिकित्सा नाम-
षट्पञ्चाशस्तरंगः ॥

सप्तपंचाशस्तरंगः

अथ गंडमाला ॥
गंडमालोरुभिर्गंडैः कंठदेशसमुद्भवैः ॥
एषैव चिरवृद्धा स्यादपची व्रणसंज्ञिका ॥ १ ॥
माक्षिकाढ्यः सकृत्पीतः क्वाथो वरुणमूलजः ॥
गंडमालां निहंत्याशु चिरकालानुबंधिनीम् ॥ २ ॥
विडंगामलसिंधूत्थरास्नोग्राक्षारदारुभिः ॥
तैलं चतुर्गुणे सिद्धं कटुतुंबीरसे शुभे ॥
गंडमालाहरं श्रेष्ठं गलगंडेपि शस्यते ॥ ३ ॥
इति तुंबीतैलम् ॥
व्योषं विडंगं मधुकं सैंधवं देवदारु च ॥
तैलमेभिः शृतं सम्यक्कृच्छ्रामप्यपचीं जयेत् ॥ ४ ॥
इति व्योषाद्यं तैलम् ॥
मुछुंदर्या विपक्वं तु क्षणात्तैलं वरं ध्रुवम् ॥
अभ्यंगान्नाशयेन्नृणां गंडमालां सुदारुणाम् ॥ ५ ॥
इति चुछुंदरीतैलम् ॥
सौभांजनं देवदारुकांजिकेन प्रयोजितम् ॥
कोष्णप्रलेपतो हन्यादपचीं दुस्तरामपि ॥ ६ ॥
इति सौभांजनम् ॥

१ वकचूर। २ सेंजनो।

अथ गलगंडः ॥

निबद्धः श्वयथुर्यस्य मुष्कवल्लंबते गले ॥
महान्वा यदि वा ह्रस्वो गलगंडं तमादिशेत् ॥ ७ ॥
जीर्णकर्कारुकरसो विडसैंधवसंयुतः ॥
नस्येन तरुणं हंति गलगंडं न संशयः ॥ ८ ॥
श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः ॥
सर्पिषा नियताहारो गलगंडप्रशांतये ॥ ९ ॥
तिक्तालांबुफले पक्वं सप्ताहमुषितं जलम् ॥
गलगंडं निहंत्याशु पानात्पथ्यानुशीलितम् ॥ १० ॥

अथ ग्रंथिः ॥

वातादयो मांसमसृक्प्रदुष्टाः
प्रदूष्य मेदश्च तथा शिराश्च ॥
वृत्तोन्नतं ग्रंथिमरुक्सशोफं
कुर्वंत्यतो ग्रंथिरिति प्रदिष्टः ॥ ११ ॥
हिंस्रा सरोहिण्यमृताथ भार्गी
स्योनाकबिल्वागुरुवाजिगंधा ॥
गोजीवपिष्टा सहतालपत्र्या
ग्रंथौ विधेयोऽनिलजे प्रलेपः ॥ १२ ॥
जलायुकाः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनं च ॥
द्राक्षारसेनेक्षुरसेन वापि
चूर्णं पिबेद्वापि हरीतकानाम् ॥ १३ ॥
मधूकजंब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेच्च ॥

१ कांकडी। २ श्वेतकोहल। ३ गोमूत्रेणपिष्टा। ४ तालपत्रेणसह। ५ लेपान्।

हितेषु दोषेषु यथा न पूर्वं ग्रंथौ भिषक्श्लेष्मसमुत्थितेषु॥
अमर्मजातं सममप्रपातं
तत्पक्कमेवापहरेद्विचार्य ॥
देहस्थिते वाससि सिद्धकर्मा
सद्यः क्षतोक्तं च विधिं विदध्यात् ॥ १३ ॥
शस्त्रेण चोत्पाट्य सुपक्कमाशु
प्रक्षालयेत्पथ्यतमैः कषायैः ॥
संशोधनैस्तंतुविशोधयेत्तु
क्षारोत्तरैः क्षौद्रघृतप्रगाढैः ॥ १४ ॥
सिद्धं च तैलं त्ववचारणीयं
विडंगपाठारजनीविपक्कम् ॥
मेदःसमुत्थे तिलकल्कदिग्धे
कृतोपरिष्टाद्द्विगुणं पटांतम् ॥ १५ ॥
हुताशतप्तेन मुहुः प्रदद्या-
ल्लोहेन धीमान्नववृद्धितायाम् ॥
प्रलिप्तदर्व्या त्वथ लाक्षया वा
प्रतप्तया स्वेदनमस्य कार्यम् ॥ १६ ॥
निपात्य वा शस्त्रमपोह्य मेदो
दहेत्तुपक्वं त्वथ वा विदार्य ॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः
सुवर्चलाद्यैर्हरितालमिश्रैः ॥ १७ ॥
ससैंधवैः क्षारघृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य ॥
तैलं विदध्याद्धिकरंजगुंजावंशावलेख्यैंगुदमूत्रसिद्धम्॥२१
लिप्तं यवक्षारविडंगबीजगंधोपलैः स्यान्मसृणीकृतैर्यत् ॥

१ वज्राकुर। २ गंधपाषाण। ३ कज्जलीकृतैः।

रक्तेन मिश्रैः सरटस्य सद्यस्तदर्बुदं शाम्यति नान्यथैतत्
इति राजमार्तंडात् ॥

वातार्बुदं क्षीरघृतांबुसिद्धै-
रुष्णैः सतैलैरुपनाहयेत्तु ॥
कुर्यात्तु मुख्यान्युपनाहनानि
सिद्धैश्च मांसैरथवेसवारैः ॥ २० ॥
स्वेदं विदध्यात्कुशलश्च नाड्या
शृंगेण रक्तं बहुशो हरेच्च ॥
वातघ्ननिर्यूहपयोऽम्लवर्गैः
सिद्धं सिताख्यां त्रिवृतां पिबेद्वा ॥२१॥
स्वेदोपनाहा मृदवस्तु पथ्या
पित्तार्बुदे क्वाथविरेचनं च ॥
विकृष्य सोदुंबरशाकगोजी-
पत्रैर्भृशं क्षौद्रयुतैः प्रलिंपेत् ॥ २२ ॥
शुद्धस्य जंतोः कफजेर्बुदे च
रक्ते च सिक्ते स्रवतेर्बुदं यत् ॥
मेदःकृते मांसकृतेपि कार्यं
व्रणोदितं सर्वचिकित्सितं च ॥ २३ ॥

इति श्रीयोगतरंगिण्यां गंडमालापचीगलगंडग्रं-
थ्यर्बुदचिकित्सानाम सप्तपंचाशस्तरंगः ॥

अष्टपंचाशस्तरंगः

अथ श्लीपदः ॥

श्लीपदः पादशोथः स्यान्मेदःकफसमुद्भवः ॥
नासाकर्णाक्षिहस्तादावप्याहुः केप्यमुं पुनः ॥ २८ ॥

१ तिति। २ वहेतां। ३ गोभीस्यापिपाठः।

धत्तूरैरंडवर्षाभूनिर्गुंडीशिग्रुसर्षपैः ॥
प्रलेपः श्लीपदं हंति चिरोत्थमपि दारुणम् ॥ २ ॥
कृष्णा[1]चित्रकदंतीनां कर्षमर्धपलंपलम् ॥
विंशतिश्च हरीतक्या गुडस्य च पलद्वयम् ॥ ३ ॥
मधुना मोदकं खादेच्छ्लीपदं हंति दुस्तरम् ॥
संपिष्टमारनालेन रूपिकामूलवल्कलम् ॥
प्रलेपाच्छ्लीपदं हंति बद्धमूलमपि दृढम् ॥ ४ ॥
पिंडारकतरुसंभवशिफा जयति सर्पिषा पीता ॥
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जंघायाम् ॥ ५
हितश्च लेपने नित्यं चित्रको देवदारु च ॥
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः ॥ ६ ॥
विडंगमरिचार्केषु नागरे चित्रके तथा ॥
भद्रदार्वेलकाख्ये च सर्वेषु लवणेषु च ॥
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥ ७ ॥
इति विडंगाद्यं तैलम् ॥
यवान्नं कटुतैलं च कूर्ममांसं च योजयेत् ॥
श्लीपदानां प्रशांत्यर्थमशांते दाहमग्निना ॥ ८ ॥
इति वृंदात् ॥

इति श्रीयोगतरंगिण्यां श्लीपदचिकित्सा नाम अष्टपंचाशस्तरंगः

---

## एकोनषष्टितमस्तरंगः

अथ विद्रधिः ॥
पृथग्दोषैः समस्तैश्च क्षतेन क्षतजेन च ॥

---

१ अर्कमूल।

गुल्मवद्विद्रधिर्ज्ञेयः स्त्रीस्तने रक्तविद्रधिः ॥ १ ॥
जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधा॥
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ २ ॥
वातघ्नौषधिकल्कैस्तु वसातैलघृतप्लुतैः ॥
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ ॥३ ॥
स्वेदोपनाहाः कर्तव्याः शिग्रुमूलसमन्विताः ॥
यवगोधूममुद्गैश्च स्विन्नपिष्टैः प्रलेपयेत् ॥ ४ ॥
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ॥
पैत्तिकं शर्करालाजामधुकैः सारिवायुतैः ॥ ५ ॥
प्रदिह्यात्क्षीरपिष्टैर्वा पयस्योशीरचंदनैः ॥
पिबेद्वा त्रिफलाक्वाथं त्रिवृताकल्कसंयुतम् ॥६ ॥
इष्टिकासिकतालोहगोशकृत्तुषपांसुभिः ॥
गोमूत्रपिष्टैः सततं स्वेदयेच्छ्लेष्मविद्रधिम् ॥ ७ ॥
सोभांजनस्य निर्यूहो हिंगुसैंधवसंयुतः॥
अचिराद्विद्रधिं हंति प्रातःप्रातर्निषेवितः ॥ ८ ॥
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ॥
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥ ९ ॥

कासीससैंधवशिलाजतुहिंगुचूर्ण
मिश्रीकृतो वरुणवल्कलजः कषायः ॥
अभ्यंतरोत्थितमपक्वमतिप्रमाणं
नृणामयं जयति विद्रधिमुग्रशोफम् ॥ १० ॥

अपक्वे त्वेतदुदितं पक्वे तु व्रणवत्क्रिया ॥ ११ ॥

इति श्रीयोगतरंगिण्यां विद्रधिचिकित्सा नाम
एकोनषष्टितमस्तरंगः

१ सैंहजनो।

षष्टितमस्तरंगः

अथ व्रणशोथः ॥

एकदेशोत्थितः शोथो व्रणानां पूर्वलक्षणम् ॥
दोषैः पृथक्समस्तैस्तै रक्तजागंतुजौ च षट् ॥ १ ॥

इति रुग्विनिश्चयात् ॥

आदौ विम्लापनं कुर्याद्द्वितीयमथ सेचनम् ॥
तृतीयमुपनाहं च चतुर्थं पाटनक्रियाम् ॥ २ ॥
पंचमं शोधनं चैव षष्ठं रोपणमिष्यते ॥
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ ३ ॥
अभ्यंज्य स्वेदयित्वा तु वेणुनाड्या ततः शनैः ॥
विम्लापनार्थं गृह्णीयात्तलेनांगुष्ठकेन वा ॥ ४ ॥
शोथे महति संरब्धे वेदनावति वा व्रणे ॥
यो न याति समं लेपस्वेदसेकापतर्पणैः ॥ ५ ॥
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात् ॥
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः ॥ ६ ॥
रक्तं हि विक्रियां याति तन्मोक्षे याति विक्रिया ॥
हरत्यष्टांगुलं तुंबी शृंगं च द्वादशांगुलम् ॥ ७ ॥
शिरा सर्वांगजं रक्तं जलौकाग्रंथिमुद्धृतम् ॥
तुंबी कफोत्थे वातोत्थे शृंगी पित्ते जलौकसः ॥ ८ ॥
संनिपातोत्थिते नाडी बहुदोषे प्रयोजयेत् ॥
मातुलुंगाग्निमंथौ च सुरदारु महौषधम् ॥ ९ ॥
अहिंस्रा चैव रास्ना च प्रलेपेनाशु शोथजित् ॥
दूर्वानलकमूलं च मधुकं चंदनं तथा ॥ १० ॥

१ अफारो २ ग्रंथिनाशनं । ३ स्नेहेनमर्दयित्वा । ४ विकारं । ५ बिजोरो ।

शीतलैश्च गणैः सर्वैः प्रलेपः पित्तशोथहा ॥
अंजगंधाश्वगंधा च कोला सरलया सह ॥ ११ ॥
ऐंकैषिका च शृंगी च प्रलेपः श्लेष्मशोथहा ॥
आलेपपूतिमांसानां मांसस्थानमरोहताम् ॥ १२ ॥
लेपः संरोपणः कार्यस्तिलजो मधुसंयुतः ॥
न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः ॥ १३ ॥
ससर्पिष्कैः प्रलेपः स्याच्छोथनिवारणः परः ॥
न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ॥ १४ ॥
न च पर्युषितं शुष्कं न वा संधारयेत्क्वचित् ॥
सतिलाः सातसीवीजाः दध्यम्लसक्तुपिंडिकाः ॥ १५ ॥
सकिण्वकुष्ठलवणाः शस्ताः स्युरुपनाहने ॥
शणमूलकशिग्रूणां फलान्यसितसर्षपाः ॥ १६ ॥
सक्तवः किण्वसुष्णानि द्रव्याण्येतानि पाचने ॥
हस्तिदंतं जले घृष्टं बिंदुमात्रप्रलेपनात् ॥ १७ ॥
अत्यर्थकठिने चापि शोथे पाचनभेदकम् ॥
चिरंबिल्वाग्निकौ दंतीचित्रकौ हयमारकः ॥ १८ ॥
कपोतकंकगृध्राणां पुरीषाणि च दारणे ॥
ततः प्रक्षालने क्काथः पटोलीनिंबपत्रजः ॥ १९ ॥
अविशुद्धे विशुद्धे वा न्यग्रोधादित्वगुद्भवः ॥
आलेपः पूतिमांसानां मांसस्थानामरोहणम् ॥ २० ॥
कल्कः संरोहणः कार्यस्तिलानां मधुना न्वितः ॥
निंबपत्रमधुभ्यां तु युतः संशोधनः परः ॥ २१ ॥
निंबपत्रं तिला दंती त्रिवृत्सैंधवमाक्षिकम् ॥

१ योकागंधिः। २ सारिवा। ३ सरलू। ४ मूल। ५ पु
६ पासोलेप। ७ कंजा। ८ भिलायो।

दुष्टव्रणप्रशमनो लेपः शोधनकेसरी॥ २२॥
निंवपत्रवचाहिंगुसर्पिर्लवणसैंधवैः॥
धूपनं कृमिरक्षोघ्नं व्रणकंडूरुजापहम्॥ २३॥
अग्निदग्धे व्रणे सम्यक्प्रयुंजीत चिकित्सितम्॥
पित्तविद्रधिवीसर्प्पशमनं लेपनादिकम्॥ २४॥
वाताभिभूतान्सर्वांश्च धूपयेदुग्रवेदनान्॥
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः॥ २५॥
श्रीवासगुग्गुल्वगुरुशालनिर्यासधूपिताः॥
कठिनत्वं व्रणा यांति नश्यंत्यास्राववेदनाः॥ २६॥
करंजारिष्टनिर्गुंडीरसो हन्याद्व्रणक्रिमीन्॥
लशुनेनाथ वा दद्याल्लेपनं कृमिनाशनम्॥ २७॥

ये क्लेदपाकस्रुतिगंधवंतो
व्रणा महांतः सरुजः सशोथाः॥
प्रयांति ते गुग्गुलुमिश्रितेन
पीतेन शांतिं त्रिफलारसेन॥ २८॥

इति त्रिफलागुग्गुलुः॥

अमृतापटोलमूलत्रिफलात्रिकटुक्रिमिघ्नानाम्॥
समभागानि रजांसि कौशिकभागः समः सर्वैः॥ २९॥
गोघृतवद्धां गुटिकां खादेदनुवासरं सदक्षमिताम्॥
जेतुं व्रणवातासृग्गुल्मोदरश्वयथुपांडुरोगान्वै॥ ३०॥

इत्यमृताद्यो गुग्गुलुः॥

जातीनिंवपटोलपत्रकटुकादार्वीनिशासारिवा-
मंजिष्ठाभयसिक्थतुत्थमधुकैर्नक्तांह्वबीजैः समैः॥

१ सिंहतुल्यः। २ भोजपत्र। ३ राल। ४ चीड़। ५ गुग्गुलु। ६ मोम। ७ कंजपा।

सर्पिः सिद्धमनेन सूक्ष्मवदना मर्मोश्रिताः स्राविणो
गंभीराःसरुजो व्रणाः सगतिकाः शुध्यंति शुष्यंति च ३

इति जात्याद्यं घृतम् ॥

स्वर्जिका च यवक्षारः कंपिल्लमहिछंदिका ॥
टंकणं श्वेतखदिरं तुल्यं चूर्णं च गोघृते ॥ ३२ ॥
सर्वं समांशं संचूर्ण्य मर्दयेत्प्रहरं दृढम् ॥
स्वर्जिकादिघृतं चैव सर्वव्रणविशोधनम् ॥ ३३ ॥
पूरणं कृमिकंडूघ्नं शीघ्रं पाटवकृत्तथा ॥

इति स्वर्जिकाद्यं घृतम् ॥

मनःशिला समंजिष्ठा सलाक्षारजनीद्वयम् ॥
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ३४ ॥

पुनर्नवानिंबपटोलशुंठी-
तिक्तानिशादार्व्यभयाकषायः ॥
सर्वांगशोफोदरकासशूल-
श्वासान्वितं पांडुगदं निहंति ॥ ३५ ॥

इति पुनर्नवाष्टकं ॥

अयोरजः सकासीसं त्रिफलाकुसुमानि च ॥
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ ३६ ॥
कालीयकफलाम्रास्थिहेमकालीसुरोत्तमैः ॥
लेपः सगोमयरसस्त्वक्सवर्णकरः परः ॥ ३७ ॥ *

अथ सद्योव्रणः ॥

सद्यः क्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ॥

---

१ सर्पकंचुका । २ अगर । ३ नागकेसर । ४ धारिया । * पारोटंक १ गंधक १ मुरदशंगटंक १ कवेलोटंक १ घृतन्याससर्व संमर्थ नाडीव्रणारी लेपादस्ययं मणा नदयति ॥

यष्टीमधुकयुक्तेन किंचिदुष्णेन सर्पिषा ॥ ३८ ॥
वुद्ध्वागंतुं व्रणं वैद्यो घृतक्षौद्रसमन्वितम् ॥
शीतां क्रियां प्रयुंजीत रक्तपित्तोष्मनाशिनीम् ॥ ३९ ॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥
पक्वाशयस्थे दातव्यं रेचनं च समासतः ॥ ४० ॥
क्वाथो वंशत्वगेरंडश्वदंष्ट्राश्मभिदाकृतः ॥
सहिंगुसैंधवः पीतः कोष्ठस्थं स्रावयेदसृक् ॥ ४१ ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन वा ॥
भुंजीतान्नं यवागूं वा पिवेत्सैंधवसंयुताम् ॥ ४२ ॥
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः ॥
सप्ताहात्परतः कार्याः शारीरव्रणवत्क्रियाः ॥ ४३ ॥
व्रणे श्वयथुरायासात्तै च रागश्च जागरात् ॥
तौ च रुक्च दिवास्वापात्ताश्च मृत्युश्च मैथुनात् ॥ ४४ ॥

सिंदूरकुष्ठविषहिंगुरसोनचित्र-
वाणांघ्रिलांगलिककल्कविपक्वतैलम् ॥
प्रासादमंत्रयुतहुंकृतनुन्नफेनः
क्लिन्नव्रणप्रशमनो विपरीतमल्लः ॥ ४५ ॥
खड्गाभिघातगुरुगंडमहोपदंश-
नाडीव्रणव्रणविचर्चिककुष्ठपामाः ॥
एता निहंति विपरीतकमल्लनाम
तैलं यथेष्टशयनाशनभोजनस्य ॥ ४६ ॥

इति विपरीतमल्लतैलं चक्रदत्तात् ॥

अथ भग्नानि ॥

आदौ भग्नं विदित्वा तु सेचयेच्छीतवारिणा ॥

---

१ अलु। २ सप्तदिनपर्यंत। ३ श्वयथुः। ४ पंचमूल।

पंकेनालेपनं कुर्याद्बंधनं च कुशान्वितम् ॥ ४७ ॥
आलेपनार्थं मंजिष्ठा मधुकं रक्तचंदनम् ॥
शतधौतघृते मिश्रं शालिपिष्टं च लेपनम् ॥ ४८ ॥
न्यग्रोधादिकषायस्तु सुशीतः परिषेचने ॥
पंचमूलीविपक्वं च क्षीरं दद्यात्सवेदने ॥ ४९ ॥
मूलं शृगालच्छिन्नायाः पीत्वा मांसरसेन तु ॥
तच्चूर्णीकृत्य सप्ताहादस्थिभंगं व्यपोहति ॥ ५० ॥
विल्वकर्णं मधुयुतमस्थिभंगे त्र्यहं पिवेत् ॥
पीत्वा चास्थि भवेत्सम्यग्वज्रसारनिभं दृढम् ॥ ५१ ॥
लवणं कटुकक्षारमम्लं मैथुनमातपम् ॥
व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च ॥ ५२ ॥

अथ नाडीव्रणः ॥

नाडीनां गतिमन्विष्य शस्त्रेणोत्पाट्य कर्मवित् ॥
सर्वव्रणक्रमं कुर्याच्छोधनं रोपणादिकम् ॥ ५३ ॥
नाडीं वातकृतां साधुपाटितां लेपयेद्भिषक् ॥
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ ५४ ॥
पैत्तिकीं तिलमंजिष्ठानागदंतीनिशाह्वयैः ॥
श्लैष्मिकीं तिलयष्ट्याह्वनिकुंभारिष्टसैंधवैः ॥ ५५ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेत्पूयशोधनैः ॥
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुताः ॥
सूत्रवर्तिर्व्रणे योज्या शोधिनी गतिनाशिनी ॥ ५६ ॥

घोंटाफलत्वङ्मदनाफलानि
पूगस्य च त्वग्लशुनं च मुख्यम् ॥

१ चाम्लभेपितमित्यपिपाठः। २ गोमा। ३ नागदोन्। ४ निशोन। ५ मदरीफल पुंगीफल।

स्नुह्यर्कदुग्धेन सहैष कल्को
वर्त्तीकृतो हंत्यचिरेण नाडीम् ॥ ५७ ॥
वर्त्तीकृतं माक्षिकसंप्रयुक्तं
नाडीघ्नमुक्तं लवणोत्तमं च ॥
दुष्टव्रणे यद्विहितं च तैलं
तत्सेव्यमानं गतिमाशु हंति ॥ ५८ ॥
जात्यर्कशंपाककरंजदंती-
सिंधूत्थसौवर्चलयावशूकैः ॥
वर्त्तिः कृता हंत्यचिरेण नाडीं
स्नुक्क्षीरलिप्ता सह सैंधवेन ॥ ५९ ॥
कृशदुर्बलभीरूणां नाडीमर्माश्रितापि च ॥
क्षारसूत्रेण तां छिंद्यान्न शस्त्रेण कदाचन ॥ ६० ॥
गुग्गुलुस्त्रिफलाव्योपैः समांसैश्चाज्ययोजितैः ॥
नाडीं दुष्टव्रणं चापि जयेदपि भगंदरम् ॥ ६१ ॥
इति सप्तांगगुग्गुलुः ॥
समूलपत्रां निर्गुंडीं पीडयित्वा रसं हरेत् ॥
तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम् ॥ ६२ ॥
इति श्रीयोगतरंगिण्यां शोथव्रणसद्योव्रणभग्ननाडीव्रणचिकित्सानामषष्टितमस्तरंगः ॥

एकषष्टितमस्तरंगः।

अथ भगंदरम् ॥
गुदस्य द्व्यंगुले क्षेत्रे पार्श्वतः पिडकार्त्तिकृत् ॥
भिन्नो भगंदरो ज्ञेयः स च पंचविधो मतः ॥ १ ॥
वातपित्तकफैस्त्रेधा चतुर्थः सन्निपाततः ॥

१ प्रयुक्तमित्यपि पाठः। २ अमलतास। ३ चयाद्दस्यपिपाठः।

उन्मार्गगः पंचमः स्यादेवं पंचविधो मतः ॥ २ ॥
गुदस्य श्वयथुं दृष्ट्वा विशोष्यादौ विशोधयेत् ॥
रक्तावसेचनं कार्यं यथा पाकं न गच्छति ॥ ३ ॥

खररुधिरसमेतं भूलतायाः शरीरं
दृषदि सहितमस्थ्ना सारमेयस्य पिष्टम् ॥
भवति समुपलेपादाशु भागंदरीणा-
मपि विषमतराणामापदां नाशहेतुः ॥ ४ ॥

वटपत्रेषिकासौडीगुडूच्यः सपुनर्नवाः ॥
सुपिष्टाः पिडकावस्थे लेपः शस्तो भगंदरे ॥ ५ ॥
पिडिकानामपक्वानामपतर्पणपूर्वकम् ॥
कर्म कुर्याद्विरेकांतं भिन्नानां वक्ष्यते क्रिया ॥ ६ ॥
स्नुह्यर्कदुग्धदार्वीभिर्वर्तिं कृत्वा विचक्षणः ॥
भगंदरगतिं ज्ञात्वा दद्याद्दुष्टविशोधिनीम् ॥ ७ ॥
दुष्टां सर्वशरीरस्थां नाडीं हन्यादसंशयम् ॥
रसेंद्रभागद्वितयं म्लेक्षक्षारचतुष्टयम् ॥ ८ ॥
काकजंघारसैर्मर्द्यं खल्ने दिवसपंचकम् ॥
ताम्रस्य संपुटे रुद्ध्वा सच्छिद्रे हंडिकांतरे ॥ ९ ॥
निवेश्य वालुकां दत्वा देयोऽग्निः प्रहराष्टकम् ॥
स्वांगशीतं समुद्धृत्य मधुटंकणसंयुतम् ॥ १० ॥
धमेन्मूषागतं तावद्यावद्भ्रमति तारवत् ॥
रूपराजरसः सोऽयं भगंदरविनाशनः ॥ ११ ॥
वल्लमात्रमिमं खादेत्त्रिफलामनुपाययेत् ॥
मुक्तः स्वल्पैरहोभिः स्याद्भगंदरमहागदात् ॥ १२ ॥

इति रूपराजो रसः ॥

---

१ कलोंजी। २ कुचा। ३ पापर। ४ सोमलस्येत। ५ भार्ग।

त्रिफलापुरुकृष्णानां त्रिपंचैकभागयोजिता गुटिका ॥
कुष्ठभगंदरनाडीदुष्टव्रणविशोधिनी कथिता ॥ १३ ॥
इति नवकार्षिको गुग्गुलुः ॥
तिलाभयालोध्रमरिष्टपत्रं निशावचाकुष्ठमगारधूमः ॥
भगंदरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोयम् ॥१४
त्रिफलारससंयुक्तं विडालास्थिप्रलेपनम् ॥
भगंदरं निहंत्याशु दुष्टव्रणविशोधनम् ॥ १५ ॥
चित्रकार्कौ त्रिवृत्पाठमलेपूहयमारकौ ॥
सुधां वचां लांगलीं च हरितालं मनःशिलाम् ॥ १६ ॥
ज्योतिष्मतीं च संहृत्य तैलं धीरो विपाचयेत् ॥
एतद्विष्यंदनं नाम तैलं दद्याद्भगंदरे ॥ १७ ॥
शोधनं रोपणं चैव दुष्टनाडीं विपोहयेत् ॥
इति चित्रकाद्यं तैलम् ॥
करवीरनिशादंतीलांगलीलवणाग्निभिः ॥
मातुलुंगार्कपयसा पचेत्तैलं भगंदरे ॥ १८ ॥
इति करवीराद्यं तैलम् ॥
भागो रसस्य गंधस्य द्वौ कन्याद्भिर्विमर्दयेत् ॥
कृत्वा गोलं ताम्रपात्रं तावत्तस्योपरि क्षिपेत् ॥१९॥
भस्मनापूर्य तद्भांडं वह्निं कुर्याद्दिनं तले ॥
शीतमुद्धृत्य जंबीरवारा तत्समधा पुटेत्॥ २० ॥
गुंजास्यमधुसर्पिभ्यां हंति सद्यो भगंदरम् ॥
तालमूलीं सलशुनां पिबेदनु सकांजिकाम् ॥ २१ ॥
इति रवितांडवो रसः ॥
व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च ॥

---
१ धूमसो। २ कठुमर। ३ चूनो। ४ जबीररसेन।

संवत्सरं परिहरेदुपरूढव्रणो नरः ॥ २२ ॥

अथोपदंशः ॥

हस्ताभिघातान्नखदंतघातादधावनादत्युपसेवनाद्वा ॥
योनिप्रदोषाच्च भवंति शिश्ने पंचोपदंशा विविधोपचारैः॥
जलौकापातनं च स्यादूर्ध्वाधःशोधनं तथा ॥
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरश्च सः ॥२४॥
पटोलनिंबत्रिफलागुडूचीकाथं पिबेद्वा खदिरासनाभ्यां॥
सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदंशापहरः प्रयोगः॥
त्रिफलायाः कषायेण भृंगराजरसेन वा ॥
व्रणप्रक्षालनं कुर्यादुपदंशप्रशांतये॥२६॥
दहेत्कटाहे त्रिफलां समांशीमधुसंयुताम् ॥
उपदंशप्रलेपोयं सद्यो रोपयति व्रणम् ॥ २७ ॥
जयांजात्यश्वमाराकेशम्याकानां दलैः पृथक् ॥
कृतं प्रक्षालने काथं मेढ्रपाके प्रयोजयेत् ॥ २८ ॥
करंजनिंबार्जुनसालजंबूवटादिभिः कल्ककषायसिद्धम् ॥
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम्॥२९

अथ शूकदोषाः

अक्रमाच्छेफसो वृद्धिं योभिवांछति मूढधीः ॥
व्याधयस्तस्य जायंते दश चाष्टौ च शूकजाः ॥ ३० ॥
हितं च सर्पिषः पानं पथ्यं वापि विरेचनम्॥
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम् ॥ ३१ ॥
शुकदोषे हरेद्रक्तं पक्के शोधनरोपणम् ॥
तिंदुकत्रिफलालोध्रैर्लेपस्तैलं च रोपणम् ॥ ३२ ॥

इति श्रीयो० भगंदरोपशूकदोषचि०एकषष्टितमस्त०

---

१ त्रिजेसार। २ मिष्यते वा पाठः।

द्वाषष्टितमस्तरंगः

अथ कुष्ठानि ॥

अत्युग्रपातकाहारघर्मश्रमविरेकिणाम् ॥
कुष्ठान्यष्टादश नृणां जायंते चोग्रकर्मणाम् ॥१॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु ॥
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं श्रेष्ठम् ॥ २ ॥
एलाकुष्ठविडंगानि निशाह्वा चित्रको वला ॥
दंती रसांजनं चेति लेप॰ कुष्ठविनाशनः ॥ ३ ॥
निंवभूनिंवपाठाब्दपटोलत्रिफलानलैः ॥
श्यामाशम्याकगायत्रीभार्गीवासकचंदनैः ॥ ४ ॥
वचामृताकणाशुंठीसठीद्राक्षानिशाह्वयैः
वत्सकत्वक्फलानंतामूर्वात्रायंत्यवल्गुजैः ॥ ५ ॥
ऐंद्रीगोपारुणीकटुविपकुम्भारिपर्पटैः ॥
कल्कचूर्णैः कपायाणां क्षौद्रयुक्तैरुपाचरेत् ॥ ६ ॥
क्रमः पित्तविसर्पोक्तः पुष्करीमूढयोर्हितः ॥
त्वक्पाके स्पर्शहानौ च सेचयेन्मृदितं पुनः ॥ ७ ॥
वलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥
महाकषायो गोमूत्रे सर्वकुष्ठान्तको भवेत् ॥ ८ ॥

इति महाकषायः ॥

दूर्वाभयासैंधवचक्रमर्दकुठेरकाः कांजिकतक्रपिष्टाः ॥
त्रिभिः प्रलेपैरपि वद्धमूलां दद्रूं च कंडूं च निवारयंति ९
गोमूत्रवारिसंपिष्टैः शिलातालांशेतुत्थकैः ॥
लेपः किटिभवीसर्पकुष्ठनाशाय पूजितः ॥ १० ॥

---

१ खेरसार । २ ब्राह्मी । ३ इंद्रजो । ४ जवासो । ५ यावची ।
६ इंद्रायण । ७ सारिवा । ८ मजीठ । ९ कुटकी । १० अडूसो ।
११ विडंग । १२ पमार । १३ समभागः। पादांशः ।

आरग्वधस्य पत्राणि कांजिकेन प्रलेपयेत् ॥
दद्रूकिटिभकुष्ठानि हंति सिध्मानमेव च ॥ ११ ॥
स्थौणेयारुङ्क्निशादूर्वाः सप्तवारप्रलेपनात् ॥
धत्तूररसपिष्टाश्च कंडुरक्तविनाशिकाः ॥ १२ ॥
कासमर्दकमूलं तु सौवीरेण प्रपेपितम् ॥
दद्रूकिटिभकुष्ठानि जयेदेतत्प्रलेपनात् ॥ १३ ॥
एडगजास्तिलसर्षपकुष्ठं मागधिकारजनीद्वयमुस्तम् ॥
पूतिकृतं दिवसत्रयमेतद्धंति सकुष्ठविसर्पककंडूः ॥१४॥
सिंदूरगुग्गुलुरसांजनसिक्थतुत्थै-
स्तुल्यांशकैः कटुकतैलमिदं विपक्वम् ॥
कच्छ्रां स्रवत्पिडकिनीमथ वापि शुष्का-
मभ्यंजनेन सकृदुद्धरति प्रसह्य ॥ १५ ॥
इति सिंदूराद्यं तैलम् ॥
कृत्वा कज्जलिकां रंगौ च कुनटीं द्वे जीरके द्वे निशे
गोदंतोपणनागएडगजिका वाकूचिका सार्षपा ॥
लोहे लोहविमर्दितं दृढतरं माहेश्वराख्यं घृतं
कंडूकुष्ठविचर्चिकादिशमनं पामाहरं स्वेदनात् ॥ १६ ॥
इति माहेश्वरं घृतम् ॥
खदिरत्रिफलानिंबपटोलामृतवासकैः ॥
अष्टकोऽयं जयेत्कुष्ठं कंडूविस्फोटकानि च ॥
विसर्पपामाकिटिभरोमांतिकमसूरिकाः ॥ १७ ॥
इति खदिराष्टकम् ॥
अर्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम् ॥

---

१ कूठ। २ कसोंदी। ३ पमारबीज। ४ गंधद्वितीयपाठः। ५ नक्रेण। ६ रांग। ७ मनसिल। ८ गोदंतीहरताल पागोदंत। ९ पानची।

नाशयेत्सर्षपं तैलं पामां कच्छूं विचर्चिकाम् ॥ १८ ॥
इत्यर्कतैलम् ॥
मंजिष्ठात्रिफलालाक्षाशिलागंधकरात्रिभिः ॥
तैलमादित्यसंपक्कं पामाकंडूविसर्पनुत् ॥ १९ ॥
इत्यादित्यपाकतैलम् ॥
हरितालशिलाब्दार्कपयोऽश्वारिजटात्रिवृत् ॥
शक्रद्रुलविशालारुङ्निशायुग्दारुचंदनैः ॥ २० ॥
कटुतैलं पचेत्प्रस्थं द्यक्षैर्विषपलान्वितैः ॥
सगोमूत्रं तदभ्यंगाद्दद्रूकुष्ठविनाशकृत् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रयोजयेत् ॥ २१ ॥
इति लघुमरिचाद्यं तैलम् ॥
धात्रीखदिरयोः क्काथं पीत्वा वल्गुजसंयुतम् ॥
शखेंदुधवलं श्वित्रं हंति तूर्णं न संशयः ॥ २२ ॥
मंथितेन पिबेच्चूर्णं काकोदुंबरिवल्गुजम् ॥
तैलाक्तो घर्मसेवी स्यात्तक्राशी श्वित्रमुद्धरेत् ॥ २३ ॥
इंद्रासनं समाधाय प्रशस्तेहनि चोद्धृतम् ॥
तच्चूर्णं मधुसर्पिभ्यां लिहेत्क्षीरं घृताशनः ॥ २४ ॥
हत्वा स सर्वकुष्ठानि जीवेद्वर्षशतत्रयम् ॥
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ॥ २५ ॥
वृष्यः संसमो मेध्यः कुष्ठहा कामचारिणः ॥
यः खाददभयारिष्टमरिष्टामलकानि च ॥
स जयेत्सर्वकुष्ठानि मासादूर्ध्वं न संशयः ॥ २६ ॥
इति वृंदात् ॥

१ कनेरकीजड। २ गोमयरस। ३ कूट। ४ हरिद्रे। ५ देवदारु। ६ दधा। ७ कडूमर। ८ कृततैलाभ्यंगः। ९ भांग। १० नाम।

कुडवो वल्गुजवीजाद्धरितालचतुर्थभागसंमिश्रः ॥
मूत्रेण गवां पिष्टः सवर्णकरणः परः श्वित्रे ॥ २७ ॥
चत्वारो वोल्लभागाः स्युर्द्वौ भागौ तु कुलिंजनात् ॥
मस्तकी चैकभागा स्याद्यवानीपोटलीयुते ॥ २८ ॥
जले समुचिते हंड्यां घर्ममध्ये दिनत्रयम् ॥
संस्थाप्य तज्जलं लेपाद्धंति दद्रूं न संशयः ॥ २९ ॥

इति वोल्लजलम् ॥

चंद्रसूर्याख्यवीजानि प्रपुन्नाटस्य तानि च ॥
कंकरया अपि वीजानि समांशत्रितयं क्षिपेत् ॥ ३० ॥
सर्वद्विगुणतक्रेण सूक्ष्मं संपिष्य साधयेत् ॥
दिनत्रयं ततो वन्यगोमयेन प्रधर्षयेत् ॥ ३१ ॥
तं कल्कं लेपयेत्पश्चाद्दद्रूर्गच्छति निश्चितम् ॥
निंवगोपारुणार्कद्वीत्रायंतीत्रिफलाधनम् ॥ ३२ ॥
पर्पटावल्गुजानंतावचाखदिरचंदनम् ॥
पाठाशुंठीसटीभार्गीवासाभूनिंववत्सकम् ॥ ३३ ॥
श्यामेंद्रवारुणीमूर्वाविडंगेंद्रविषानलम् ॥
हस्तिकर्णामृताद्रेष्का पटोलं रजनीद्वयम् ॥ ३४ ॥
कणारग्वधससौंहं कृष्णामूलोच्चटाफलम् ॥
मंजिष्ठा लांगली रास्ना नक्तमालः पुनर्नवा ॥ ३५ ॥
दंती वीजकसारश्च भृंगराजंकुरंटकम् ॥
एषां द्विपलिकान्भागाञ्जलद्रोणे विपाचयेत् ॥ ३६ ॥

---

१ वीजाबोल २ मस्लगी। ३ हालोंप्रसिद्धः। ४ कगहीकेवीज। ५ दद्रूइतिक्षेपः। ६ सारिवा। ७ मजीठ। ८ कुटकी। ९ निसोत। १० ऊटकटेइरीकेफल। ११ मोरेढरीतस्याभावेमरोरफरी। १२ एरण्ड। १३ सतपूरः। १४ पीपरामूल १५ चिरमिठि। १६ कंजा। १७ पीपावासो।

अष्टभागावशिष्टं च कषायमवतारयेत् ॥
भल्लातकसहस्राणि क्षिप्त्वा त्रीण्यर्मेणेंभसि ॥ ३७ ॥
चतुर्भागावशिष्टं च कषायमवतारयेत् ॥
तौ कषायौ समादाय वस्त्रपूतौ च कारयेत् ॥ ३८ ॥
एकीकृत्य कषायौ तौ पुनरग्नावधिश्रयेत् ॥
गुडस्यैकतुलां दत्वा लेहवत्साधयेद्भिषक् ॥ ३९ ॥
भल्लातकसहस्राणां मज्जानं तत्र दापयेत् ॥
त्रिकटुत्रिफलामुस्तसैंधवानां पलंपलम् ॥ ४० ॥
विडंगं चित्रकं कुष्ठं चंदनं च पलंपलम् ॥
सौगंधिकस्य दातव्यं चूर्णं पलचतुष्टयम् ॥ ४१ ॥
दीप्यकस्य पलं चैव चातुर्जातं पलंपलम् ॥
संमेल्य प्रक्षिपेत्कोष्णे घृतभांडे निधापयेत् ॥ ४२ ॥
महाभल्लातको ह्येष महादेवेन निर्मितः ॥
प्राणिनां तु हितार्थाय नाशयेच्छीघ्रमेव तु ॥ ४३ ॥
चित्रमौदुंबरं दद्रुमृक्षजिह्वं सकाकणम् ॥
पुंडरीकं च चर्माख्यं विस्फोटं रक्तमण्डलम् ॥ ४४ ॥
कृच्छ्रं कापालिकं कुष्ठं पामां चापि विपादिकाम् ॥
वातरक्तमुदावर्तं पांडुरोगं वमिं कृमीन् ॥ ४५ ॥
अर्शांसि षट्प्रकाराणि श्वासं कासं भगन्दरम् ॥
अनुपानेन दातव्यं छिन्नातोयेन वा भिषक् ॥ ४६ ॥
भोजनेन सदा योज्यमुष्णं चाम्लं विशेषतः ॥

इति महाभल्लातकः ॥

मुंडीरसेन संसिद्धं घृतं हंति विपादिकाम् ॥४७ ॥
मंजिष्ठा कुटजो घनामृतवचा शुंठीहरिद्राद्वयं

१ द्रोणे। २ सुहागे।

क्षुद्रारिष्टपटोलकुष्ठकटुकाभार्ङ्गीविडंगाग्निकम् ॥
मूर्वादारुकलिंगभृंगमगधात्रायंतिपाठावरी-
गायत्रीत्रिफलाकिरातकमहानिंबासनारग्वधं ॥ ४८ ॥
श्यामावल्गुजचंदनं सवरुणं पूतीकशाखोटकम् ॥
वासापर्पटसारिवाप्रतिविषानंताविपालाजलम् ॥
मंजिष्ठादिरयं कषायविधिना नित्यं पुमान्यः पिबे-
त्त्वग्दोषास्त्वचिरेण यांति विलयं कुष्ठानि चाष्टादश४९॥
वातरक्ते प्रसुप्तौ च विसर्पे विद्रधौ तथा ॥
सर्वेषु रक्तदोषेषु मंजिष्ठादिः प्रशस्यते ॥ ५० ॥
इति बृहन्मंजिष्ठादिः ॥
पिबति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तः पामलो यः पलार्द्धम् ॥
त्रिदिवसमभिषिक्तः क्षीरभोजी च शीघ्रं
भवतिकनकदीप्तिः कामयुक्तो मनुष्यः ॥ ५१ ॥
क्षारास्त्रयस्त्रिकटुकं पंचैव लवणानि च ॥
वचा कुष्ठं हरिद्रे द्वे विडंगं चित्रकं विषम् ॥
हरितालशिलागंधसिंदूरं तुत्थखर्परम् ॥ ५२ ॥
रामठं च रसोनश्च मदनं च रसांजनम् ॥
भल्लातकं वाकुचिका चोकं कर्पूरकं तथा ॥ ५३ ॥
लांगली च पटोली च हंसपादी तथैव च ॥
तेजनी मुरमांसी च कंपिलं खदिरांतरम् ॥
एतच्चूर्णं समांशेन वज्र्यर्कपयसा श्रुतम् ॥
षड्गुणं सार्षपं तैलं कारंजं वा विशेषतः ॥ ५५ ॥

१ शतावरी। २ खेरसार। ३ वंदाल। ४ नेत्रबाला ५ गधक। ६ स्पूकवरी।

तैलं गंधर्वजं वापि तिलतैलं तथैव च ॥
तैलाच्चतुर्गुणं मूत्रं गोमहिष्यश्वसंभवम् ॥ ५६ ॥
हस्तिगर्दभजं वापि तथोष्ट्राजाविजं क्षिपेत् ॥
सर्वमेकत्र संपक्कं कटाहे मंदवह्निना ॥ ५७ ॥
तैलावशेषं संगृह्य रुजामभ्यंगमाचरेत् ॥
वातरक्तविनाशाय दद्रूकंडूविचर्चिकाः ॥ ५८ ॥
अष्टादशानि कुष्ठानि मांसमेदोगतानि च ॥
दुष्टव्रणानि सर्वाणि जीर्णनाडीव्रणानि च ॥ ५९ ॥
भगंदरं च दुर्नामलूतागर्दभजालकम् ॥
एतत्तैलं सदाभ्यंगात्सर्वकुष्ठं व्यपोहति ॥ ६० ॥

इति कुष्ठकालानलं तैलम् ॥

सिंदूरं चंदनं मांसी विडंगं रजनीद्वयम् ॥
प्रियंगु पद्मकं कुष्ठं मंजिष्ठा खदिरं वचा ॥ ६१ ॥
जात्यर्कत्रिवृतानिंबाः करंजो विषमेव च ॥
कृष्णाचित्रकलोध्रं च प्रपुंनाटं च संहरेत् ॥ ६२ ॥
श्लक्ष्णं पिष्टानि सर्वाणि योजयेत्तैलमात्रया ॥
अभ्यंजने प्रयुंजीत सर्वकुष्ठानि नाशयेत् ॥ ६३ ॥
पामाविचर्चिकाकच्छूविसर्पादिहरं परम् ॥
रक्तपित्तोत्थितान्हंति रोगानेवंविधान्बहून् ॥ ६४ ॥

इति बृहत्सिंदूराद्यं तैलम् ॥

सैंधवं मदनं रालं मधु सर्पिः पुरोगुडम् ॥
गैरिकं स्फुटितौ पादौ लिप्तौ पंकजसन्निभौ ॥ ६५ ॥

इति सैंधवाद्यं घृतम् ॥

---

१ अडिकोतेल। २ अभ्यंगेनेतिपाठः।

कार्पासिकापत्रविमिश्रकाक-
जंघाकृतो मूलकवीजयुक्तः ॥
तक्रेण लेपः क्षितिपुत्रवारे
सिध्मानि सद्यो नयति प्रणाशम् ॥ ६६ ॥
उन्मत्तकस्य बीजानि मानकक्षारवारिणा ॥
कंदुतैलं विपक्तव्यं शीघ्रं हंति विपादिकाम् ॥ ६७ ॥
जंबीरद्रवमध्ये तु प्रक्षाल्यनेटमंडनम् ॥
दशांशं टंकणं दत्वा खंडशः परिमेलयेत् ॥ ६८ ॥
चतुर्गुणो गाढपटे निबध्य प्रहरद्वयम् ॥
दोलायंत्रेण संस्वेद्यं प्रदीपप्रमिते ऽनले ॥ ६९ ॥
चूर्णतोये कांजिके च कूष्माडांबुनि तैलके ॥
त्रिफलांबुनि तत्पश्चात्क्षालयित्वाम्लवारिणा ॥ ७० ॥
ततः पलाशमूलत्वग्वारिपिष्टं प्रशोषयेत ॥
महिषीमूत्रसंपिष्टं पुनस्तं परिशोषयेत् ॥ ७१
तं गोलकं शरावाभ्यां संपुटीकृत्य यत्नतः ॥
खाते गजपुटे पक्त्वा स्वांगशीतं समुद्धरेत् ॥ ७२ ॥
अजादुग्धैः पुनः पिष्ट्वा शोपयेद्गोलकीकृतम् ॥
आढकं भस्म पालाशं हंडिकायां दृढं क्षिपेत् ॥ ७३ ॥
सम्यक्चूर्णस्य कुडवं दत्वा तत्र विचक्षणः ॥
स्थापयेद्गोलकं तत्र पुनश्चूर्णं च भस्म च ॥ ७४ ॥
यथाधूमो वह्नियाति न तथा तां विमुद्रयेत् ॥
द्वात्रिंशत्प्रहरांश्चुल्यां वह्निं भक्तवदर्पयेत् ॥ ७५ ॥
स्वांगशीतं समुद्धृत्य संचूर्ण्य नटमण्डनम् ॥

१ भौमवारे । २ कंदकोशार । ३ दत्वार्क । ४ पातालपुर्के । ५ चूर्णं ।

हिमकुंदेंदुसंकाशं निर्धूमं कृष्णवर्त्मनि ॥ ७६ ॥
रक्तिकाऽस्य प्रदातव्या पुराणगुडयोगतः ॥
पथ्यं च चणकस्योक्तं रोटिका षष्टिकौदनम् ॥ ७७ ॥
निर्ल्लोणं किंच नाप्यन्यत्र खादेदेकविंशतिम् ॥
दिवा निवातगतिकः सर्वव्यापारवर्जितः ॥ ७८ ॥
गलत्कुष्ठं पुंडरीकं श्वित्रं कापालिकं तथा ॥
औदुंबरं ऋक्षजिह्वं काकणं स्फोटमुल्वणम् ॥ ७९ ॥
वातरक्तं पांडुरोगं दद्रूं पामां विचर्चिकाम् ॥
विसर्पमर्शांसि तथा विपादीं च भगंदरम् ॥ ८० ॥
सर्वथा क्रमशो हंति सेवितं हरितालकम् ॥
अन्यानपि व्रणान्सर्वानंधकारमिवांशुमान् ॥ ८१ ॥

इति तालं। अत्र नागोपि ॥

तालताप्यशिलासूतं शुद्धं सैंधवटंकणम् ॥
समांशं चूर्णयेत्खल्वे सूताद्विगुणगंधकम् ॥ ८२ ॥
गंधतुल्यं मृतं ताम्रं जंबीरैर्दिनपंचकम् ॥
मर्दितं षट्पुटैः पाच्यं भूधरे संपुटोदरे ॥ ८२ ॥
पुटेपुटे द्रवैर्मर्द्यं सर्वमेतत्तु षट्पलम् ॥
द्विपलं मारितं ताम्रं लोहभस्म चतुःपलम् ॥ ८३ ॥
जंबीराम्लेन तत्सर्वं दिनं मर्द्यं पुटेत्ततु[1] ॥
त्रिंशदंशं विषं चास्य क्षिप्त्वा सर्वं विचूर्णयेत् ॥ ८४ ॥
माहिषाज्येन संमिश्र्य निष्कार्द्धं भक्षयेत्सदा ॥
मध्वाज्यैर्वाकुचीचूर्णं कर्षमात्रं लिहेदनु ॥
सर्वकुष्ठं निहंत्याशु महातालेश्वरो रसः ॥ ८५ ॥

इति महातालेश्वरो रसः ॥

---

१ अग्नौ।

गुंजाफलानि चूर्णानि लेपयेच्छ्वेतकुष्ठनुत् ॥
शिलापामार्गभस्मापि लिप्त्वा श्वित्रं विनाशयेत्॥८७॥
भस्म सूतसमो गंधो मृतायस्ताम्रगुग्गुलु ॥
त्रिफला च महानिंबश्चित्रकश्च शिलाजतु ॥ ८८ ॥
इत्येतच्चूर्णितं कुर्यात्प्रत्येकं शाणपोडशम् ॥
चतुःपष्टिकरंजस्य बीजचूर्णं प्रकल्पयेत् ॥ ८९ ॥
चतुःपष्टि मृतं चाभ्रं मध्वाज्याभ्यां विलोडयेत् ॥
स्निग्धभांडे धृतं खादेद्विनिष्कं सर्वकुष्ठनुत् ॥
रसः कुष्ठकुठारोऽयं गलत्कुष्ठविनाशनः ॥ ९० ॥

इति कुष्ठकुठारो रसः ॥

मांसेक्षुतैलांवुकुलत्थमाप-
विदाह्यभिष्यंदपयोदधीनि ॥
निष्पावपिष्टाध्यसनादि निद्रां
त्वग्दोषवान्स्त्रीं लवणं च जह्यात् ॥ ९१ ॥

इति श्रीयोगतरंगिण्यां कुष्ठचिकित्सा नाम
द्वापष्टितमस्तरंगः ॥

---

त्रयःपष्टितमस्तरंगः

अथ शीतपित्तोदर्दोत्कोठः ॥
वरटीदंशवद्देहे कंडूलः शीतपित्ततः ॥
उदर्दः स पृथुः प्रोक्त उत्कोटो भूरितोदवान् ॥ १ ॥
गैरिकं सैंधवं चैव कुसुंभं कुंकुमं समम् ॥
घृतलिप्ता अमी घ्नंति शीतपित्तमुदर्दकम् ॥ २ ॥
सगुडां पिप्पलीं यस्तु खादेत्पथ्यान्नभुङ् नरः ॥
तस्य नश्यंति समाहादुदर्दाः सर्वदेहजाः ॥ ३ ॥

सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सह ॥
कटुतैलेन संमिश्रमेतदुद्वर्तनं हितम् ॥
शीतपित्त उदर्दाते उत्कोठे च विशेषतः ॥ ४ ॥
इति श्रीयोगतरंगिण्यां शीतपित्तोदर्दोत्कोठचिकित्सा-
नाम त्रयःषष्टितमस्तरंगः

## चतुःषष्टितमस्तरंगः

अथाम्लपित्तम् ॥
अत्यम्लकटुकाहारादंतकाष्ठातिघर्षणात् ॥[1]
दिवास्वप्नाद्रसास्तिक्तोम्लो ह्यस्याद्भवते बलात् ॥ १ ॥
अविपाकक्लमोत्क्लेदतिक्ताम्लोद्गारगौरवैः ॥
हृत्कंठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक् ॥ २ ॥
वमनानंतरं तत्र विरेकं मृदु कारयेत् ॥
सम्यग्वांतविरक्तस्य सुस्निग्धस्यानुवासनम् ॥ ३ ॥
तिक्तभूयिष्ठमाहारं पाचनं चापि कल्पयेत् ॥
यवगोधूमविकृतिं तीक्ष्णसंस्कारवर्जितम् ॥
यथार्श्वं लाजसक्तूंश्च सितामधुयुतांल्लिहेत् ॥ ४ ॥
निस्तुषयववृषधात्रीक्काथस्त्रिसुगंधिमधुयुतःपीतः ॥
अपनयति चाम्लपित्तं यदि भुंक्ते मुद्गयूषेण ॥ ५ ॥
एलातुगाचोचशिवाभयानां
त्वग्ग्रंथिपाठीरदलोलकानाम् ॥
चूर्णं सितातुल्यमपाकरोति
प्रौढाम्लपित्तं दिवसाष्टभुक्तम् ॥ ६ ॥
इति वैद्यसर्वस्वात् ॥

---

१ बहुदंतधावनात्। २ तज। ३ धनियो।

कुडवमितमिह स्यान्नालिकेरं सुपिष्टं
पलपरिमितसर्पिः पाचितं खंडतुल्यम् ॥
निजपयसि तदेतत्प्रस्थमात्रे विपक्वं
गुडवदथ सुशीते शाणमात्रं क्षिपेच्च ॥७॥
धान्याकपिप्पलिपयोदतुगाद्विजीरैः
साकं त्रिजातमिभकेशरवह्निचूर्णं ॥
हंत्यम्लपित्तमरुचिं क्षयमस्रपित्तं
शूलं वमिं सकलपौरुषकारि पुंसाम् ॥ ८ ॥
इति नालिकेरखंडः योगरत्नावलीतः ॥
शुद्धसूतसमं गंधं मृतताम्राभ्ररूप्यकम् ॥
तुल्यांशं मर्दयेद्यामं रुद्ध्वा लघुपुटे पचेत् ॥ ९ ॥
अक्षधात्रीहरीतक्यः क्रमवृद्ध्या विपाचयेत् ॥
जलेनाष्टगुणेनैव ग्राह्यमष्टावशेषकम् ॥ १० ॥
अनेन भावयेत्पूर्वं पक्वं सूतं पुनःपुनः ॥
पंचविंशतिवारं तु तावता भृंगजैर्द्रवैः ॥ ११ ॥
शुष्कं तच्चूर्णितं खादेत्पंचगुंजं मधुप्लुतम् ॥
रसो लीलाविलासोयमम्लपित्तं नियच्छति ॥ १२ ॥
इति लीलाविलासो रसः ॥
कूष्मांडस्य रसो ग्राह्यः पलानां शतमात्रकम् ॥
रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम् ॥ १३ ॥
लघ्वग्निना पचेत्तावद्यावद्भवति पिंडितम् ॥
धात्रीतुल्या सिता योज्या पलार्द्धं लेह्ययेत्सदा ॥
अम्लपित्तं वातपित्तं मूर्छां श्वासं च नाशयेत् ॥ १४ ॥
इति कूष्मांडावलेहः रसरत्नप्रदीपात् ॥

१ नालिकेरमज्जे । २ नागकेसर । ३ गजपुंगेरथपिप्पलः । ४ भक्ष

पिप्पल्याः कुडवं चूर्णं घृतस्य कुडवद्वयम् ॥
पलषोडशकं खंडाच्छतावर्याः पलाष्टकम् ॥ १५ ॥
शिवायाः स्वरसस्यापि पलषोडशकं मतम् ॥
क्षीरप्रस्थद्वये साध्यं लेहीभूतेत्र निक्षिपेत् ॥ १६ ॥
त्रिजातकाभयाजाजीधान्यमुस्तशिवातुगाः ॥
एतेषां कार्षिकं चूर्णं कर्षार्द्धं कृष्णजीरकम् ॥ १७ ॥
नागरं नागकं[१] जातिफलं समरिचं हिमम्[२] ॥
दत्वा पलत्रयं क्षौद्रं स्निग्धभांडे निधापयेत् ॥ १८ ॥
प्रातर्यथाबलं लिह्यादम्लपित्तप्रशांतये ॥
हृल्लासारोचकच्छर्दिपिपासादाहनाशनम् ॥
शूलहृद्रोगशमनं हृद्यं चेदं रसायनम् ॥ १९ ॥

इति खंडपिप्पली योगरत्नावलीतः ॥

द्राक्षापथ्ये समे कृत्वा तयोस्तुल्यां सितां क्षिपेत् ॥
संकुट्याक्षद्वयमितां तत्पिंडीं रचयेद्भिषक् ॥ २० ॥
तां खादेदम्लपित्तार्तो हृत्कंठदहनापहाम् ॥
तृण्मूर्छाभ्रममंदाग्निनाशिनीमामवातहाम् ॥ २१ ॥

इति द्राक्षादिगुटिका ॥ अत्रापि चंद्रकररसः ॥

त्रिकटुत्रिफलामुस्तविडंगदहनाः समाः ॥
एतेषां चूर्णितानां च प्रत्येकं च पलं भवेत् ॥ २२ ॥
कर्षद्वयं गंधकस्य तदर्द्धं पारदस्य च ॥
विडालपदमात्रं तु लिह्यात्समधुसर्पिषा ॥ २३ ॥
शीतोदकं चानुपिवेत्क्रमायूषं पयस्तथा ॥
अम्लपित्तं चाग्निमांद्यं परिणामरुजं तथा ॥

१ नागकेसर। २ कर्पूर।

कामलां पांडुरोगं च हन्यादत्र न संशयः ॥ २४ ॥
इति रसामृतं चूर्णम् ॥
शतावरीमूलकल्के घृतं सिद्धं पयोऽन्वितम् ॥
पचेन्मृद्वग्निना गव्यं क्षीरं दत्वा चतुर्गुणम् ॥ २५ ॥
नाशयेदम्लपित्तं च वातपित्तभवान्गदान् ॥
रक्तपित्तं तृषां मूर्छां श्वासं संतापमेव च ॥ २६ ॥
इति शतावरीघृतं योगरत्नावलीतः ॥
यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत् ॥
नाशयेदम्लपित्तं च वमिं चारुचिमेव च ॥ २७ ॥
अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः ॥
गुडकूष्मांडकं चैव तथा खंडामलक्यपि ॥
गुडक्षीरकणासिद्धं सर्पिर्वात्र प्रयोजयेत् ॥ २८ ॥
इति योगतरंगिण्यां अम्लपित्तचिकित्सा नाम
चतुःषष्टितमस्तरंगः ॥

पञ्चषष्टितमस्तरंगः

अथ विसर्पः ॥
क्षुद्रपामाकृतिर्देहे परितः परिसर्पणात् ॥
विसर्पो जायते जंतोस्तोदस्रावरुजाकरः ॥ १ ॥
विरेकवमनालेपसेवनासृग्विमोक्षणात् ॥
उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥ २ ॥
शिरीषयष्टीनवचंदनैलामांसीहरिद्राद्वयकुष्ठवालैः ॥
लेपो दशांगः सघृतः प्रयोज्यो विसर्पदुष्टव्रणशोथहारी ३
इति दशांगः ॥

१ इन्द्रजव ।

वृषखदिरपटोलपत्रनिंब-
मृतमामलकीकषायकल्कैः ॥
घृतमभिनवमेतदाशु पक्कं
जयति सदास्रविसर्प्पकुष्ठगुल्मान् ॥ ३ ॥
इति श्रीयोगतरंगिण्यां विसर्पचिकित्सानाम
पञ्चषष्टितमस्तरंगः

षट्षष्टितमस्तरंगः।

अथ विस्फोटाः
अग्निदग्ध इव स्फोटा विस्फोटाः स्युर्ज्वराननाः ॥
क्वचित्सर्वत्र देहेषु रक्तपित्तसमुद्भवाः ॥ १ ॥
किराततिक्तकारिष्टयष्ट्याह्वांबुदवासकम ॥
पटोलपर्पटोशीरत्रिफला कौटजान्वितम् ॥
किरातादिरयं प्रोक्तो गणो विस्फोटनाशनः ॥ २ ॥
पटोलसप्तच्छदनिंबवासाफलत्रिकच्छिन्नरुहाविपक्कम् ॥
तत्पंचतिक्तं घृतमाशु हन्यात्त्रिदोषविस्फोटविसर्पकंडूः
पटोलामृतभूनिंबवासकारिष्टपर्पटैः ॥ ३ ॥
खदिराह्वयुतैः क्काथो विस्फोटज्वरशांतये ॥ ४ ॥
चंदनं नागपुष्पं[१] च तंडुलीयकवारिणा ॥
शिरीषवल्कलं जातीलेपः स्याद्दाहनाशनः ॥ ५ ॥
इति श्रीयोगतरंगिण्यां विस्फोटचिकित्सानाम्
षट्षष्टितमस्तरंगः

सप्तषष्टितमस्तरंगः

..थ स्नायुकः
शाखासु कुपितो दोषः शोफं कृत्वा विसर्पवत् ॥

१ नागकेसर

कुर्युस्तंतुनिभान्कीरान्स्नायवस्ते निरूपिताः ॥ १ ॥
कुष्ठरामठशुंठीभिः कल्कं शिग्रुसमन्वितम् ॥
पानलेपनयोगेन तंतुकीटविनाशनम् ॥ २ ॥
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुंडीस्वरसं त्र्यहम् ॥
पिबेत्स्नायुकमत्युग्रं निहंत्येव न संशयः ॥ ३ ॥
शिग्रुमूलदलैः पिष्टैः कांजिकेन ससैंधवैः ॥
लेपनं स्नायुरोगाणां शमनं परमुच्यते ॥ ४ ॥
इति स्नायुकचिकित्सा ॥
अथ मसूरिका ॥
मसूराकृतिसंस्थानः पिडिकाः स्युर्मसूरिकाः ॥
आसां पूर्वं ज्वरः कंडूर्गात्रभंगो रतिभ्रमः ॥ ५ ॥
अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निंबपत्रं हरिद्रे ॥
विविधविषविसर्पान्कुष्ठविस्फोटकण्डू-
रपनयति मसूरीः शीतपित्तं ज्वरं च ॥ ६ ॥
इत्यमृतादिः ॥
कपीतनक्षीतकरात्रियुग्ममांसीनतैलामयवारिशीतैः ॥
लेपः ससर्पिः प्रणुदत्यवश्यं विस्फोटदाहज्वरकान्विसर्पान्
इति दशांगलेपः
पटोलमूलारुणतंडुलानां तथैव धात्रीखदिरेण संयुतम्
पिबेज्जलं सुक्वथितं सुशीतं मसूरिकारोगविनाशनं परम् ८
यस्तु कोद्रवको नाम कफमारुतकोपजः ॥
सप्ताहाद्द्वादशाहाद्वा स्वयमेवोपशाम्यति ॥ ९ ॥
दिवसैरेकविंशत्या शाम्यंति च मसूरिकाः ॥

१ शिरसः २ मुलेठी । ३ कुठ ।

स्तोत्रपाठग्रहजपैर्धर्मपावनकर्मभिः॥
शीतलाराधनैश्चंडीपाठैश्चैता उपाचरेत्॥ ११॥
इति योगतरंगिण्यां मसूरिकाचिकित्सानामसप्तप-
ष्टितमस्तरंगः

अष्टषष्टितमस्तरंगः

अथ क्षुद्ररोगाः॥
क्षुद्ररोगाः समासेन चतुस्त्रिंशत्प्रकीर्तिताः॥
ग्रंथभूयस्त्वभीत्या च वक्ष्यामि कियतोऽत्र तान्॥ १॥
तत्राजगल्लिकामामां जलौकाभिः समाचरेत्॥
विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभीम्॥ २॥
इरवेल्लीगंधनाम्नीं जयेत्पित्तविसर्पवत्॥
मधुरौषधिसिद्धेन सर्पिषा च जयेद्व्रणम्॥ ३॥
रक्तावशेषैर्बहुभिः स्वेदनैरपतर्पणैः॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः॥ ४॥
पनसिकां कच्छपिकां तेनैव विधिना जयेत्॥
साधयेत्कठिनानन्यान्छोथान्दोषसमुद्भवान्॥ ५॥
अंधालजीं कच्छपिकां तथा पाषाणगर्दभीम्॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्॥ ६॥
कफमारुतसंभूते लेपः पाषाणगर्दभे॥
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्॥ ७॥
मनःशिलालभल्लातसूक्ष्मैलागुरुचंदनैः॥
जातीपल्लवयुक्तैश्च निंबतैलं विपाचयेत्॥ ८॥
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुद्रवम्॥
शिरां च पाददारीषु वेधयेत्तत्वशोधनीम्॥ ९॥

---

१ दुर्गापाठैः। २ इरजाल।

स्नेहस्वेदोपपन्नौ तु पादावालेपयेन्मुहुः ॥
मधूच्छिष्टवसामज्जाघृतक्षारैर्विमिश्रितैः ॥ १० ॥
सर्ज्जाह्वसिंधूद्भवयोश्चूर्णं मधुघृतप्लुतम् ॥
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥ ११ ॥
करंजबीजं रजनी कासीसं मधुकं मधु ॥
रोचना हरितालं च लेपोऽयमलसे हितः ॥ १२ ॥
दहेत्कंदरमुद्धृत्य तैलेन दहनेन वा ॥
विष्यमुष्णांबुना स्विन्नमाकृष्याभ्यज्य तं व्रणम् ॥१३॥
दत्वा सर्जरसं चूर्णं बुद्ध्या व्रणवदाचरेत् ॥
स्वरसेन हरिद्रायाः पात्रे कृष्णायसेऽभयाम् ॥ १४ ॥
संस्थाप्य तज्जकल्केन लिंपेच्चिप्यं मुहुर्मुहुः ॥
निंबोदकेन वमनं पद्मिनीकंटके हितम् ॥ १५ ॥
निंबोदककृतं सर्पिः सक्षौद्रं पानमिष्यते ॥
अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत् ॥ १६ ॥
त्रिफलाखदिरक्वाथो व्रणानां पूर्वधावने ॥
रसांजनं विशेषेण पानलेपनयोर्हितम् ॥ १७ ॥
गुदभ्रंशे गुदस्नेहैरभ्यज्याशु प्रवेशयेत् ॥
प्रविष्टं स्वेदयेच्चापि बद्धं गोफणया दृढम् ॥ १८ ॥
कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम् ॥
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ १९ ॥
मूषिकानां वसाभिर्वा गुदे सम्यक्प्रलेपनम् ॥
स्विन्नमूषिकमांसैर्वा स्वेदाच्च गुदनिर्गमः ॥ २० ॥
चर्मकीलं जतुमणिं माषकं तिलकालकम् ॥
उद्धृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ॥ २१ ॥

---

१ मौम । २ चक्रदाकी । ३ कदलनामकशस्त्रेण उद्धृत्य ।

युवानपिडिकान्यच्छनीलिकाव्यंगशर्कराः ॥
शिराव्यधैः प्रलेपैश्च जयेदभ्यंजनैस्तथा॥ २२॥
लोध्रधान्यवचालेपस्तारुण्यपिडिकापहः ॥
व्यंगेषु चार्जुनत्वक्च मंजिष्ठावृषमाक्षिकैः॥ २३॥
लेपः सनवनीतो वा श्वेताश्वखुरजामसी[1]॥
रक्तचंदनमंजिष्ठाकुष्ठं लोध्रं तथैव च॥ २४॥
वटांकुराश्च व्यंगघ्ना वक्त्रकांतिप्रदास्तथा॥
केवलान्पयसा पिष्ट्वा तीक्ष्णाञ्छाल्मलिकंटकान्॥ २५॥
आलिप्तं त्र्यहमेतेन भवेत्पद्मोपमं मुखम्॥
पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च॥ २६॥
मूत्रपिष्टप्रलेपोयं शीघ्रं हन्यादरूपिकाम्॥
लेपयेत्परितः कल्कैस्तैलमभ्यंजने हितम्॥ २७॥
कुटंनटशिखीजातीकरंजकसतुत्थकैः॥
हरिद्राद्वयमंजिष्ठा त्रिफलारिष्टचंदनैः॥
एतत्तैलमरूषीणां सिद्धमभ्यंजने हितम्॥ २८॥
इति हरिद्रादितैलम्
इंद्रलुप्ते शिरां विध्वा शिलाकासीसतुत्थकैः॥
लेपयेत्परितः कल्कैस्तैलमभ्यंजने हितम्॥ २९॥
कुटंनटशिखिजातीकरंजकवीरकैः॥
अवगाढं पदं चापि प्रच्छाद्य च पुनःपुनः॥ ३०॥
गुंजाफलैश्चिरं लिपेत्केशभूमिं समंततः॥
इंद्रलुप्तापहो लेपो मधुना बृहतीरसः॥ ३१॥
हस्तिदंतमषीं कृत्वा छागक्षीरी रसांजनम्॥

१ श्वेतघोडाकेखुरकोमिर्हीचूर्ण। २ कथिताः ३ हरितालम्।

रोमाण्यनेन जायंते लेपात्पाणितलेष्वपि ॥ ३२ ॥
लोहमलामलककल्कैः सजपाकुसुमैर्नरः सदा स्नायी ॥
पलितानीह न पश्यति गंगास्नायीव नरकाणि ॥ ३३ ॥
मंजिष्ठा मधुकं लाक्षा मातुलुंगश्च यष्टिका ॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा ॥ ३४ ॥
आजं पयस्तु द्विगुणं शनैर्मृद्वग्निना पचेत् ॥
नीलिका पिडिकाव्यंगमभ्यंगादेव नाशयेत् ॥ ३५ ॥
मुखं प्रसादोपचितं नीलकार्कश्यवर्जितम् ॥
सप्तरात्रप्रयोगेण भवेत्कनकसुन्दरम् ॥ ३६ ॥

इति मंजिष्ठाद्यं तैलम् ॥

इति श्रीयोगतरंगिण्यां क्षुद्ररोगचिकित्सा नामाष्टषष्टितमस्तरङ्गः ॥ ६८ ॥

एकोनसप्ततितमस्तरंगः

प्रोक्तं यज्जनकात्मजेन तदिदं रोगापहं प्राणिनाम् ॥३॥
इति खदिराद्यं तैलम् ॥
रोगेषु वक्त्रगलतालुसमुत्थितेषु
क्काथः फलत्रिककटुत्रयकट्फलानाम् ॥
स्याद्वाथ पर्पटककट्फलविश्वभार्गी-
भूतीकधान्यघनदारुवचाभयानाम् ॥ ४ ॥
इति चिकित्सातः ॥
संचर्वितैर्वक्कधृतैः प्रशांतिं
वक्त्रामयो गच्छति जातिपत्रैः ॥
दंताश्च वीजैर्बहुलद्रुमस्य
स्थानच्युता अप्यचला भवंति ॥ ५ ॥
माक्षिकं पिप्पलीसर्पिर्विमिश्रं धारयेन्मुखे ॥
दंतशूलहरं प्रोक्तं प्रधानमिदमौषधम् ॥ ६ ॥
दंतचालेषु गंडूषो वब्बूलत्वक्कृतो हितः ॥
गृहधूमयवक्षारपाठाव्योपरसांजनैः ॥ ७ ॥
तेजोह्वा त्रिफला लोध्रश्चित्रकश्चेति चूर्णितः ॥
सक्षौद्रं धारयेदास्ये गलरोगविनाशनम् ॥ ८ ॥
इति कालकचूर्णम् ॥
सिंधूत्थं केवलं धार्यं दंतशूलविनाशनम् ॥
जैपालत्वेपो दंतानां पीडाक्रमिविनाशनः ॥ ९ ॥
फलान्यम्लानि शीतांबु रूक्षान्नं दंतधावनम् ॥
तथातिकठिनं भक्ष्यं दंतरोगी विवर्जयेत् ॥
मनःशिला यवक्षारो हरितालं ससैंधवम् ॥
दार्वी त्वक्चेति संचूर्ण्य माक्षिकेण समन्वितम् ॥ ११ ॥

१ कंजा। २ मोरसली।

मूर्छितं घृतमंडेन कंठरोगेषु धारयेत् ॥
मुखरोगेषु च श्रेष्ठं पीतकं नामकीर्तितम् ॥ १२ ॥
इति पीतकं चूर्णम् ॥

जीवंतिकामदनतुत्थकचित्रवल्ल-
मेदायुतं कमलशालिसमन्वितं वा ॥
दुग्धं शृतं शमयति स्फुटितोपसर्ग-
मालेपनादधरसंस्रवमाशु हन्यात् ॥ १३ ॥
सघृतफाणिततैलविमिश्रितं
कनकगैरिकसर्जसमन्वितम् ॥
सलवणं मदनं विनिवारय-
त्यधरजान्स्फुटितांश्च महाव्रणान् ॥ १४ ॥

जातीपत्रपुनर्नवातिलकणाकोरंटकुष्ठं वचा
शुंठीदीप्यहरीतकीसमकृतं चूर्णं मुखे धारितम् ॥
घातघ्नं कृमिदंतशूलशमनं दुर्गंधदोषापहं
शैथिल्यक्षयकारि दंतपटुताबीजं च जात्यादिकम् ॥ १५
इति जात्यादिकवलः योगरत्नावल्याः ॥
कांचनारत्वचः क्वाथः प्रातर्गंडूषकैर्धृतः ॥
जिह्वादरदरं हंति स्फोटानपि रुजाकरान् ॥ १६ ॥
इति वृंदात् ॥
कुष्ठैलवालुकैलासमधुकधान्याकयष्टिमधुकवलः ॥
हरति मुखपूतिगंधं रसोनमदिरादिगंधं च ॥ १७ ॥
प्रियंगुकाश्मीरजकोलमज्जा-
ह्रीवेरकैश्चंदनभागयुक्तैः ॥

---

१ चमेली २ पीतकीरत। ३ दुग्धविकार। ४ पीआवांसी।
५ भनमापन। ६ ऐलुआ।

पिष्टैः प्रलेपो विहितो मुखस्य
द्युतिं शशांकादधिकां विधत्ते॥ १८॥
तांबूलमध्यास्थितचूर्णकेन
दग्धं मुखं यस्य भवेत्कथंचित्॥
तैलेन गंडूषमसौ विदध्या-
दम्लारनालेन पुनःपुनर्वा॥ १९॥

इति राजमार्तंडात्॥

जातीदलैलामधुमातुलुंगपत्रैः सलाजैर्युतपिप्पलीकैः॥
कृतोवलेहः कुरुते नराणां कंठे ध्वनिंकिन्नरनादतुल्यं२०
कुंकुमं चंदनं पत्रमुशीरं कमलोत्पलम्॥
गोरोचना हरिद्रे द्वे मंजिष्ठामधुयष्टिका॥ २१॥
सारिवालोध्रपत्तंगाः कुष्ठं गैरिककेसरे॥
स्वर्णवल्ली प्रियंगुश्च कालेयं रक्तचंदनम्॥ २२॥
एभिरक्षमितैर्भागैस्तैलप्रस्थं विपाचयेत्॥
अभ्यङ्गाद्राजपत्नीनां ये चान्ये धनिनो नराः॥ २३॥
तिलकाः पिडिका व्यंगा नीलिका मुखदूषिकाः॥
नश्यंत्यनेन देहस्य दुश्छाया च विवर्णता॥ २४॥
नाशयित्वा च जनयेद्रूपं चातिमनोहरम्॥
पद्मकेसरवर्णाभं मुखं भवति कांतिमत्॥ २५॥

इति कुंकुमाद्यं तैलम्। वैद्यालंकारात्॥

जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः॥
क्वाथः क्षौद्रयुतः शीतो गंडूषान्मुखपाकजित्॥ २६॥
पटोलनिंबजंब्वाम्रमालतीनां च पल्लवैः॥

---

१ चंद्रमसः। २ नागवेल। ३ जपा। ४ जवासो।

कृतः क्काथः प्रयोक्तव्यो मुखपाकस्य धावने ॥ २७ ॥
सप्तच्छदोशीरपटोलमुस्ताहरीतकीमुस्तकरोहिणीभिः॥
यष्टयाह्वराजद्रुमचन्दनैश्च क्काथं पिबेत्पाकहरं मुखस्य२८
खदिरस्य तुलां तोयद्रोणे पक्त्वाष्टशेषिते ॥'
जातीकोशेंदुपूगाम्रचातुर्जातमृगांडजैः ॥ २९ ॥
पृथक्कर्षमितैः पिष्टैर्मेलयित्वा चणोपमाम् ॥
गुटीं कृत्वा मुखे धृत्वा सा निहंत्यखिलान्गदान् ॥
जिह्वादंतोष्ठवदनगलतालुसमुद्भवान् ॥ ३० ॥

इति खदिरगुटी ॥

इति श्रीयोगतरंगिण्यां मुखरोगचिकित्सा नाम
एकोनसप्ततितमस्तरंगः ॥

---

सप्ततितमस्तरंगः

अथ कर्णरोगः ॥

करोति विगुणो वायुर्मलं संगृह्य कर्णयोः ॥
सकफः पाकवाधिर्यशूलस्रावादिकान्गदान् ॥ १ ॥
तैलं कांजिकवीजपूरकरसक्षौद्रैः समूत्रैः शृतं
स्यात्क्षौद्रार्द्रकशिग्रुमूलकदलीकंदद्रवैर्वा समैः ॥
शुंठीतुंबुरुहिंगुभिः शृतमथ स्यात्कर्णशूलापहं ॥
सिद्धं विल्वगणेन साजपयसा मूत्रेण वाधिर्यजित्॥ २ ॥

हिंग्वब्ददारुमिसिमूलकभस्मभूर्ज-
त्वक्क्षारसिंधुरुचकोद्भिदशिग्रुविश्वैः ॥
सस्वर्जिकाविडवचांजनमातुलंग-
रंभारसैः समधुशुक्तमिदं विपक्कम् ॥ ३ ॥
तैलं प्रसिद्धमपि तच्छ्रवणामयघ्नं

---

१ गरणेत्यपि पाठ । २ वस्तमूत्रेण । ३ सामरलवण । ४धरमा । ५ मदिरा ।

कर्णप्रसादबधिरत्वहरं नराणाम् ॥
भ्रूमस्तकश्रवणशष्कुलिकांतरेषु
शूलापहं चरकशास्त्रचिकित्सितोक्तम् ॥ ४ ॥
इति क्षारतैलं चिकित्सातः ॥
रामठं निंबपत्राणि फेनं सागरसंभवम् ॥
एतानि समभागानि सद्भिर्देयं सितं विषम् ॥ ५ ॥
गोमूत्रेण समायुक्तं कटुतैलं विपाचयेत् ॥
तेनैव पूरयेत्कर्णं नरकुंजरवाजिनाम् ॥ ६ ॥
कर्णरोगं निहंत्याशु लेपनाच्छिरसो गदान् ॥
नाम्ना कर्णामृतं तैलं ब्रह्मणा निर्मितं पुरा ॥ ७ ॥
इति कर्णामृतं तैलम् ॥
आर्द्रकसूर्यावर्तकसौभांजनकमूलकस्वरसाः ॥
मधुतैलसैंधवयुताः पृथगुक्ताः कर्णशूलहराः ॥ ८ ॥
अर्कस्य पत्रं परिणामपीत-
माज्येन लिप्तं शिखिना च तप्तम् ॥
आपीड्य तोयं श्रवणेभिषिक्तं
निहंति शूलं बहुवेदनं च ॥ ९ ॥
तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ॥
छागमूत्रं प्रशंसंति कोष्णं सैंधवसंयुतम् ॥ १० ॥
हिंगुतुंबुरुशुंठीभिः कटुतैलं विपाचयेत् ॥
कर्णशूले प्रणादे वा पूरणं हितमुच्यते ॥ ११ ॥
इति हिंग्वाद्यं तैलम्। चिकित्सातः ॥
अपामार्गक्षारजलेतत्कृतकल्केन साधितं विजलम् ॥

१ अतरालेत्यपिपाठः। २ इलइल। ३ इतिमत्वारः प्रयोगाः कथिताः।
४ अग्निना। ५ तैलम्।

अपहरति कर्णनादं बाधिर्य्यं चापि पूरणतः ॥१२॥

इत्यपामार्गतैलम् ॥

शंबूकस्य तु मांसेन कटुतैलं विपाचयेत् ॥

तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥ १३ ॥

इति शम्बूकतैलम् ॥

चूर्णेन गंधकशिलारजनीभवेन

मुष्टचंशकेन कटुतैलपलाष्टकं तु ॥

धत्तूरपत्ररसतुल्यमिदं विपक्कं

नाडीं जयेच्चिरभवामपि कर्णजाताम् ॥ १४ ॥

इति गन्धकतैलम् । योगरत्नावलीतः ॥

शुष्कमूलकशुंठीनां क्षारो हिंगु सनागरम् ॥

सुक्तं चतुर्गुणं दद्यात्तैलमेतद्विपाचयेत् ॥ १५ ॥

बाधिर्यं कर्णशूलं च पूयस्रावं च कर्णयोः ॥

कृमयश्चापि नश्यंति तैलस्यास्य च पूरणात् ॥ १६ ॥

इति लघुक्षारतैलं कृष्णात्रेयात् ॥

स्वर्जिकामूलकं शुष्कं हिंगु कृष्णा महौषधम् ॥

शतपुष्पा च तैस्तैलं मस्तुपक्कं चतुर्गुणम् ॥ १७ ॥

कर्णनादं च बाधिर्यं शूलं चास्य व्यपोहति ॥

बाधिर्यं बालवृद्धोत्थं चिरोत्थं च विवर्जयेत् ॥

स्नानं शीतांबुपानं च मैथुनं च विवर्जयेत् ॥ १८ ॥

महिषीनवनीतयुतं सप्ताहं धान्यराशिपर्युषितम् ॥

नवमुसालिकंदचूर्णं वृद्धिकरं कर्णपालीनाम् ॥ १९ ॥

शतावरीवाजिगन्धापयस्येरंडबीजकैः ॥

---

१ क्षीरमध्यगतो. । २ गंधकादीनां मिलितं पलमात्रमाणम्. ।

तैलं विपक्वं सक्षीरं पालीनां वृद्धिकृत्परम् ॥
इति शतावरीतैलम् ॥[1]
इतिश्रीयोगतरंगिण्यां कर्णरोगचिकित्सानाम
सप्ततितमस्तरंगः ॥

एकसप्ततितमस्तरंगः
अथ नेत्ररोगः ॥
अंजनं पूरणं क्वाथपानं मानेन शस्यते ॥
आ चतुर्थाद्दिनादाममभिष्यंदेपि लोचनम् ॥१॥
गंडूषांजननस्यादिर्हीनानां कफकोपतः ॥
षट्सप्ततिर्नेत्ररोगा दुःसहाः स्युरुपेक्षिताः ॥ २ ॥
रसटंकणसिंधूत्थव्योषत्वर्परतुत्थकैः ॥
सवेतसाम्लैः सक्षौद्रैर्वर्तिर्नेत्रगदापहा ॥ ३ ॥
इति रसादिवर्त्तिः रसरत्नप्रदीपात् ॥
जीवंती मधुकं द्राक्षा कटुकस्य फलानि च ॥
सटी पुष्करमूलं च व्याघ्री गोक्षुरकं बला ॥ ४ ॥
नीलोत्पलं चामलकीं त्रायमाणां दुरालभम् ॥
पिप्पलीं च समः पिष्ट्वा घृत चैव विपाचयेत् ॥ ५ ॥
एतद्व्याधिसमूहस्य रोगराजं समुच्छ्रितम् ॥
रूपमेकादशविधं सर्पिरेव व्यपोहति ॥ ६ ॥
इति नेत्ररोगे जीवंत्याद्यं घृतम् ॥
लंघनालेपनस्वेदशिराव्यधनरेचनैः ॥
उपाचरेदभिष्यंदमंजनाश्च्योतनादिभिः ॥ ७ ॥
अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ॥
पंचैते पंचरात्रेण रोगा नश्यंति लंघनात् ॥ ८ ॥

---
१ भूम्यामले। २ वक्ष्माण। ३ पोटलीमिचोलो।

पटलप्रतिलोचनजा विकारा-
स्तेषामभिष्यंदसमुद्भवानाम् ॥
श्लेष्माश्रयत्वादिह लंघनं प्राक्
प्रशस्यते मुद्गरसौदनं च ॥ ९ ॥
आश्चोतने सत्रिफला सलोध्रा
सचंदना दारुनिशा प्रशस्ता ॥
आलेपने चंदनगैरिकं च
सतार्क्ष्यशैलाभयमेतदिष्टम् ॥ १० ॥

यष्टीगुडूचीत्रिफलासदार्वी-
निःक्काथ्य तत्काथमथ प्रभाते ॥
निपीय नेत्रे च निषिच्यतेन
सद्योक्षिपाकं विजहाति जंतुः ॥ १७ ॥
इति यष्ट्याः क्काथः ॥
त्रिफलाया रसप्रस्थं प्रस्थं भृंगरसस्य च॥
वृषस्य च रसप्रस्थं शतावर्याश्च तत्समम्॥ १८॥
आजं क्षीरं गुडूच्याश्च आमलक्या रसं तथा ॥
उत्पलं मधुकं क्षीरं काकोली त्रिफला कणा ॥ १९ ॥
द्राक्षासितोपला व्याघ्री चैषां कल्कैर्विपाचयेत्॥
गव्यं घृतं च तत्सिद्धं महात्रैफलनामकम् ॥ २० ॥
ऊर्ध्वपानमधःपानं मध्यपानं च शस्यते ॥
यावन्तो नेत्ररोगाः स्युस्तावन्नोप्यपकर्षति ॥ २१॥
नक्तांध्ये तिमिरे काचे नीलिकापटलेर्बुदे ॥
अभिष्यंदेधिमंथे च पक्ष्मकोपे च दारुणे ॥ २२ ॥
नेत्ररोगेषु सर्वेषु रक्तपित्तकफेषु च ॥
अदृष्टिं मंददृष्टिं च कफवातप्रदूषिताम् ॥ २३ ॥
स्रावतो वातपित्ताभ्यां सकंड्वासन्नदूरदृक् ॥
पटुदृष्टिकरं सद्यो बलवर्णाग्निवर्धनम् ॥
सर्वनेत्रामयं हन्यात्महात्रैफलकं घृतम् ॥ २४ ॥
इति महात्रैफलकं घृतं योगरत्नावल्याः॥
क्काथेन कल्कविधिना च फलत्रिकस्य
पक्वं घृतं जयति नेत्ररुजः समस्ताः ॥
कुष्ठप्रमेहमुखकर्णकपोलनासा-
रोगान्भगंदरगतिव्रणगंडमालाः ॥ २५ ॥

इति लघुत्रिफला घृतं कालिकातः ॥
श्वेतकरवीरकिसलयविच्छेदरसेन पूरिताक्षस्य ॥
तत्कालसमुत्पन्नो नयने कोपः शमं याति ॥ २९ ॥
इति राजमार्त्तंडात् ॥
ससैंधवं लोध्रमथाज्यभ्रष्टं सौवीरपिष्टं सितवस्त्रबद्धम् ॥
आश्चोतनं तन्नयनस्य कुर्यात्कंडूरुजारागविनाशहेतु ॥
निंबत्वचोदुंबरवल्कलेन वातारियष्टी मधुचन्दनेन ॥
पिंडीकृतातीव हिताक्षिकोपे वातेन पित्तेन कफेन वापि*
हरीतकीसैंधवतार्क्ष्यशैलैः सगैरिकैः स्वच्छजलप्रपिष्टैः ॥
बाह्ये प्रलेपं नयनस्य कुर्यात्सद्योक्षिरोगोपशमार्थमेनं ॥
वासामृतावचान्याघ्रीपटोलत्रिफलादलैः ॥
मतिमान्पाययेत्क्वाथं सर्वाभिष्यंदनाशनम् ॥ ३० ॥
निशाब्दत्रिफलादार्वीसितामधुसमन्वितम् ॥
अभिघाताक्षिशूलघ्नं नारीक्षीरं सुपूरितम् ॥ ३१ ॥
कृष्णात्रेयात् ॥
प्रत्यक्पुष्पीमूलं ताम्रमये भाजने ससैंधवत्थम् ॥
मधुना सहितं घृष्टं चक्षुःकोपं हरत्याशु ॥ ३२ ॥
इति राजमार्तंडात् ॥
वातारिपत्रे पुटपाचितानां द्रवं दलानां वरमल्लिकायाः ।
संमर्दयेत्सिधुफलेन कांस्ये तेनांजनेनांजितलोचनस्य।
सद्योक्षिनिष्यंदमकांडकंडूरथाधिमंथादिगदान्निहंति ३३
इति सारसंग्रहात् ॥
अटरूपाभयानिंबधात्रीमुस्ताक्षकूलकैः ॥

---

* अथान्यप्रकारः जपरीभा बीजाबोल दोधानुत्य शीतकीत्रिवली नि-
बुकद्रवेण समर्थ सर्षपसमा वटी कार्या मात्रां पानीयेनांजयेत् तिमिरकाचपटल
कंडूरोगाः नश्यति नात्र संशयः । २ श्लोक

स्रावरक्तकफं हंति चक्षुष्यं वासकादिकम् ॥ ३४ ॥

इति वासकादिक्वाथः ॥

वासा घनं निंबपटोलपत्रं तिक्तामृता चंदनवल्कलं च ॥
कालिंगदार्वीदहनं च शुंठीभूनिंबधात्री विजया विभीतम्
तथा यवक्वाथमथाष्टशेषं पिबेदिमं पूर्वदिने कषायम् ॥
तैमिर्यकंडूपटलार्बुदं च शुक्रं तथा सव्रणमव्रणं वा ३६ ॥
दाहं सरागं सरुजं सपित्तं हन्यात्समस्तानपि नेत्ररोगान्

इति पृथुवासादिः ॥

पटोलवासकारिष्टगुडूचीत्रिफलाघनम् ॥
पंचमूली सयष्ट्याह्वा चंदनं विश्वभेषजम् ॥ ३७ ॥
पटोलादिर्गणः प्रोक्तः सर्वनेत्रामयापहः ॥
वातिकं पैत्तिकं चैव श्लैष्मिकं सान्निपातिकम्॥ ३८ ॥
स्रावं रक्तप्रकोपं च पटोलादिर्व्यपोहति ॥ ३९ ॥

इति पटोलादिर्गणः ॥

चित्रकमूलत्रिफलापटोलयवसाधितं पिबेदंभः ॥
सघृतं निशि चक्षुष्यं तिमिरं च विशेषतो हंति ॥ ४० ॥
धात्रीफलं निंबकपित्थपत्रं
यष्ट्याह्वलोध्रं खदिरं तिलाश्च ॥
क्वाथः सुशीतो नयने निषिक्तः
सर्वप्रकारं विनिहंति शुक्रम् ॥ ४१ ॥
वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः ॥
क्षिप्रमंजनतो हंति शुक्रं चातिघनोन्नतम् ॥ ४२ ॥

इति राजमार्तंडात् ॥

किंशुकस्वरसभावितं मुहुर्नैकमालतरुबीजजं रजः ॥

१ पटोलइतिपाठ । २ कजा ।

वर्तियोगविधिना विनाशयत्याशु नेत्रगतपुष्पपांडुताम् ॥
यस्त्रैफलं चूर्णमपथ्यवर्जी सायंसमश्नाति समाक्षिकाज्यं
समुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्यः ४४

इति मतिमुकुरात् ॥

जातरोगा विनश्यंति न भवंति कदाचन ॥
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥ ४५ ॥
हरीतकी वचा कुष्ठं पिप्पलीमरिचानि च ॥
विभीतकस्य मज्जा च शंखनाभिर्मनःशिला ॥ ४६ ॥
सर्वमेतत्समीकृत्य छागीक्षीरेण पेषयेत् ॥
नाशयेत्तिमिरं काचं पटलान्यर्बुदानि च ॥ ४७ ॥
अधिकान्यपि मांसानि रात्र्यंधं पुष्पकं तथा ॥
वर्तिश्चंद्रोदया नाम्ना नृणां नेत्रप्रदायिनी ॥ ४८ ॥

योगरत्नावलीतः ॥

निशाद्वयाभयामांसीकुष्ठकृष्णाविचूर्णितैः ॥
सर्वनेत्रामयान्हन्यादेतत्सौगतमंजनम् ॥ ४९ ॥

इति मतिमुकुरात् ॥

रसेंद्रभुजगौ[1] तुल्यौ तयोर्द्विगुणमंजनम्[2] ॥
ईषत्कर्पूरसंमिश्रमंजनं नयनामृतम्[3] ॥ ५० ॥
तिमिरं पटलं काचं शुक्रमर्मार्बुदानि च ॥
क्रमात्पथ्याशिनो हंति तथान्यानपि दृग्गदान् ॥ ५१ ॥
हिंगुना द्रोणपुष्प्या वा रसेनांजितलोचनः ॥
अचिरात्कामलां व्याधिं नरो जयति निश्चितम् ॥ ५२ ॥
गुंजामूलं वस्तमूत्रेण पिष्टं निर्घृष्टं वा वारिणा भद्रमुस्ता
आंध्यं सद्यस्तैमिरं हंति पुंसामत्युद्धाढं नेत्रयोरंजनेन ॥

१ सीसे। २ सुरमा। ३ कर्पूरं पारदस्य चतुर्थांशः।

कलितरुफलमज्जास्निग्धपट्टे प्रविष्टो
हरति नयनपुष्पं स्तन्ययोगांजनेन ॥
श्रवणमलसमेतं मारिचं पंकमक्ष्णोः
क्षपयति किल नैशीमंधतां स्त्रीप्रियोक्तम् ॥ ५४ ॥
वैद्यदर्शनात् ॥

पिप्पली त्रिफला लाक्षा लोध्रकं च ससैंधवं ॥
भृंगराजरसे घृष्टं गुटिकांजनमिष्यते ॥ ५५ ॥
अर्मं सतिमिरं काचं कंडूं शुक्रं तथार्जुनम् ॥
अंजनं नेत्रजान्रोगान्निहंत्येव न संशयः ॥ ५६ ॥
इत्यश्विनीकुमारसंहितायाः ॥

श्वेतस्य कांचनारस्य मूलं दुग्धेन पेषितं ॥
घृष्टं तास्रेंजनं हंति सद्यो नेत्ररुजं पृथुम् ॥५७॥
तुलस्या विल्वपत्रस्य रसौ ग्राह्यौ समांशकौ ॥
ताभ्यां तुल्यं पयो नार्य्यास्त्रितयं कांस्यपात्रके ॥ ५८ ।
अयःस्थं त्रिफलाचूर्णं सर्पिपा सह योजितम् ॥
भुक्तोपरि पिवेत्सार्यं मासेनांधोऽपि पश्यति ॥ ५९ ॥
भुक्त्वा पाणितले घृष्ट्वा चक्षुपो यदि दीयते॥
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ ६० ॥

मुक्ताभस्मसिताभ्रपौररसकश्रोतोंजनैनांडजा-
तुल्यांभोभवशंखनाभिचंपलाभृंगोत्तमोमज्जभिः ॥
वर्त्तिश्चंद्रकला निहंति तिमिरं चित्रं किमत्र स्फुटं
कंडूमंडलकाचशुक्रतिमिरांभःस्रावपिल्लानपि ॥६१॥
इति चंद्रकलावर्तिः ॥

---

१ बेहडो । २ गाठो । ३ स्त्रीदुग्धेन । ४ कर्णमलयुक्त । ५ मरिचचूर्ण । ६ रात्रिभवा । ७ श्वेतअभ्रक । ८ गूगर । ९ समुद्रफेन । १० दालचीनी । ११ त्रिफला ।

गजवल्ल्या दृढं मर्द्यं ताम्रेण प्रहरं पुनः ॥
कज्जलं तत्समुत्पाद्य तेनांजितविलोचनः ॥
सद्यो नेत्ररुजं हंति समूलां पाकसंभवाम् ॥६२॥

योगरत्नप्रदीपात् ॥

हरेणुकां सैंधवसंप्रयुक्तां श्रोतोंजयुक्तामुपकुल्यया च ॥
पिष्ट्वाजमूत्रेण कृता च वर्त्तिर्नक्तांधविध्वंसकरी नराणाम् ॥

इति कलिकातः ॥

निर्वापयेत्रैफलके कषाये
नागं विधिज्ञः शतधा हुताशे ॥
संताप्य संताप्य ततः शलाकां
कृत्वास्य शुद्धेन रसेन लिंपेत् ॥ ६४ ॥
तयांजिताक्षो मनुजः क्रमेण
सुपर्णदृष्टिर्भवति प्रसह्य ॥
जयेदभिष्यंदमथाधिमंथ-
मर्मार्जुनौ वै तिमिरारिपिल्लान् ॥ ६५ ॥

इति सारसंग्रहान्नेत्रसंजीवनी शलाका ॥

शाकाम्लमद्यमत्स्यांश्च धूममैथुनमाषकान् ॥
तीक्ष्णानि घर्मं धूलिं च नेत्ररोगी विवर्जयेत् ॥ ६६ ॥
शालितंडुलगोधूममुद्गसैंधवगोघृतम् ॥
गोपयःश्च सिता क्षौद्रं पथ्यं नेत्रगदे हितं ॥ ६७ ॥*

इति श्रीयोगतरंगिण्यांनेत्ररोगचिकित्सा नामैकसप्ततितमस्तरंगः ॥

---

६ ताबूलरसेन । ७ संभालु० ।

* औरधफुलेकी । नीरमली, कस्तूरी, ममीरा, समुद्रफेन, थोथा, सुरमा, सखनाभि, रसोत, रतनजोत, पीपर, बोरबाल, निंबुरसमें खरल करिके गोली बाधनी, घिसके आंजनी फूली जाय । इति नुसखायामलात् ।

द्विसप्ततितमस्तरंगः

अथ नासारोगः॥

अर्शांसि पीनसः स्रावः क्वचिच्छोणितपूययोः॥
रोगा नासोद्भवास्तेषां क्षयो नस्यादिभिर्भवेत्॥ १॥
गुडमरिचविमिश्रं पीतमाशु प्रकामं
हरति दधि नराणां पीनसं दुर्निवारम्॥
यदि तु सघृतमन्नं क्षुण्णगोधूमचूर्णं
त्यजति तदुपसेवी तत्कुतोऽस्यावकाशः॥ २॥
पिबति शिशिरमंभो यः प्रभूतं निशायां
तदनु च शयनीयाधिष्ठितो याति निद्राम्॥
ध्रुवमतिविषमोपि क्षीयतेस्य त्रिरात्रात्
अधिगतपरिपाकः पीनसः श्वासहेतुः॥ ३॥
नवोत्पन्नं प्रतिश्यायं स्नातस्य हरतेऽचिरात्॥
मरिचं क्षौद्रसंयुक्तं सगुडं दधिमाक्षिकम्॥ ४॥
चत्वार्यत्र शतानि चित्रकजटायुक्पंचमूलामृता-
धात्रीणामुदकार्मणैस्त्रिभिरपां द्रोणेन च क्वाथयेत्॥
पादस्थे क्वथने गुडस्य च शतं पथ्याढकेनान्वितं
पक्तव्यं गृतशीतले च मधुनः प्रस्थार्द्धमात्रं क्षिपेत्॥५॥
व्योपस्य त्रिसुगंधिकस्य च पलान्यत्रैव षट्प्राक्षिपे-
त्क्षारस्यार्द्धपलं रसायनमिदं संसेव्यते सर्वदा॥
शोषश्वासप्रलापकासवमथुश्लेष्मप्रतिश्यायिभिः
क्षीणोरःक्षतहिक्किभिः कफशिरोरुग्भिःप्रणष्टाग्निभिः ६॥
इति चित्रकहरीतकी योगरत्नावलीतः॥
पाठाद्विरजनीपूर्वापिप्पलीजातिपल्लवैः॥

---

१ शय्यायां प्रविष्टः। २ पलानि। ३ चतुर्द्रोणैः।

दत्त्वा च तैलं संसिद्धं नस्यतः पीनसापहम् ॥ ७ ॥
हिंगुव्योपविडंगकट्फलवचारुक्तीक्ष्णगंधायुतै-
र्लाक्षाश्वेतपुनर्नवाकुटजजैः पुष्पोद्भवैः सौरसैः ॥
इत्येभिः कटुतैलमेतदनले मंदे समूत्रं शृतं
पीतं नासिकया यथाविधि भवेन्नासामयिभ्यो हितम् ८
इति हिंग्वादितैलं चिकित्साकलिकातः ॥
कट्फलं शृंगवेरं च पिप्पलीमरिचानि च ॥
सटी पुष्करमूलं च भार्गी मधुरसा वरा ॥ ९ ॥
अभया कृष्णलवणं शृंगी कर्कटकस्य च ॥
एतच्चूर्णवरं प्रोक्तं क्वाथो वा मूत्रमूर्छितः ॥ १० ॥
पीनसे स्वरभेदे च तमके सहलीमके ॥
संनिपातेनिलकफे कासे श्वासे च शस्यते ॥ ११ ॥
इति कट्फलादिचूर्णक्वाथः ॥
नासावनाहे कर्तव्यं पानं गव्यस्य सर्पिषः ॥
नासास्रावेऽतितीक्ष्णस्य नस्यं द्रव्यस्य कल्पयेत्॥ १२
नासाशोषे क्षीरपानं शंसितं च प्रशस्यते ॥
प्रतिश्यायेषु सशिरःपीनसे नवसादरम् ॥ १३ ॥
समानकालचूर्णं च सूक्ष्मं संचूर्ण्य तद्द्वयम् ॥
गुंजामात्रं तु तच्चूर्णं नस्यं प्रधमनं चरेत् ॥ १४ ॥
इति श्रीयोगतरंगिण्यां नासारोगचिकित्सानाम
द्विसप्ततितमस्तरंगः ॥ ७२ ॥

त्रिसप्ततितमस्तरंगः ।

अथ शिरोरोगचिकित्सा ॥
अकालपलितं पीडासूर्यावर्तार्द्धभेदकाः ॥
इत्यादयः शिरोरोगास्तान्यथादोपमाचरेत् ॥ १ ॥

कुष्ठमेरंडजं मूलं लेपात्कांजिकपेषितम् ॥
शिरोऽर्तिं नाशयत्याशु पुष्पं वा मुचकुंदजम् ॥ २ ॥
देवदारुनतं कुष्ठं नलदं विश्वभेषजम् ॥
लेपः कांजिकसंपिष्टस्तैलयुक्तः शिरोर्तिनुत् ॥ ३ ॥
सारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम् ॥
सर्पिस्तैलयुतो लेपः सूर्यावर्तार्द्धभेदयोः ॥ ४ ॥
सितोपलायुतं घृष्टं मदनं गोपयोन्वितम् ॥
नस्यतोनुदिते सूर्ये निहंत्येवार्द्धभेदयोः ॥ ५ ॥

स्मरफलतिलपर्णीबीजसंयुक्तभूता-
कुशदलघटबीजत्वग्रजोऽक्षीशतुल्याम् ॥
प्रधमनविधिना तद्वत्तमात्रं शिरोरु-
कप्रलपनकफतंद्रासन्निपातं निहन्यात् ॥

इति स्मरफलादिप्रधमनम् ॥

सशर्करं कुंकुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे ॥
भ्रूकर्णनासाक्षिशिरोर्धशूले दिनादिवृद्धिप्रभवे च रोगे ७॥

इत्यर्द्धभेदः ॥

एरंडमूलं तगरं शताह्वा जीवंतिरास्ना सहसैंधवं च ॥
भृंगं विडंगं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलं॥

आजं पयस्तैलचतुर्गुणं च
चतुर्गुणं भृंगरसं च दत्वा ॥
पक्कं च षड्बिंदव एतदीया
नस्येन हन्युः शिरसो विकारान् ॥ १ ॥
च्युतांश्च केशांश्चलितांश्च दंता-
न्निबद्धमूलांश्च दृढीकरोति ॥

---

१ मदनफल। २ सूर्यावर्त।

सुवर्णदृष्टिप्रतिमां च दृष्टिं
वाह्वोर्वलं चाप्यधिकं ददाति ॥ १० ॥
इति षड्विंदुतैलम् ॥
षटप्ररोहकेशिन्याश्चूर्णेनादित्यपाचितम् ॥
गुडूचीस्वरसैस्तैलमभ्यंगात्केशरोहणम् ॥ ११ ॥
मांसीकुष्ठं तिलाः कृष्णाः सारिवामूलमुत्पलम् ॥
सक्षौद्रक्षीरपिष्टानि केशसंवर्धनं परम् ॥ १२ ॥
मार्कवस्वरसभावितगुंजावीजचूर्णपरिपाचिततैलम् ॥
मिश्रितं त्रुटिजटासुरकाष्ठैः केशभारजननं जनतायाः ॥
मांसीवलावकुलजामलकैः सकुष्ठैः ॥
पिष्टैः प्रलिप्तशिरसो न पतंति केशाः ॥
स्निग्धायतानि कुटिलाकृतयो भवंति
ये प्रच्युता अपि मिलिंदकुलप्रकाशाः ॥ १४ ॥
वृहतीफलरसपिष्टं गुंजायाःफलमथापि वा मूलम् ॥
हेमनिघृष्टं लिप्तं व्यपहरति महेंद्रलुप्तरूपम् ॥ १५ ॥
नीलोत्पलाक्षफलमज्जतिलाजगंधाः
सार्द्धं प्रियंगुलतया समधूकनरकैः ॥
संपेष्य यः प्रकुरुते वहुशः प्रलेपं
खालित्यमस्य न पदं विदधाति मूर्ध्नि ॥ १६ ॥
पलत्रयं माजुफलं हरीतक्याः पलं तथा ॥
आमलस्यास्तु सैंधव पलिकं खदिरस्य च ॥ १७ ॥
तुत्थस्यापि पलैकं तु नीलोत्पला दशैव तु ॥

नवसादरकस्यैकं लोहचूर्णस्य चैककम् ॥ १८ ॥
तुवर्याः पलमेकं तु पलं ताम्रविशस्तथा ॥
अतिश्लक्ष्णमिदं घृष्टं भृंगराजरसैश्चिरम् ॥ १९ ॥
संधितं त्रिदिनं लोहे भिन्नांजनसमप्रभम् ॥
रूक्षीकृत्य कचानादौ पुनस्तेनावलेपयेत् ॥ २० ॥
वातारिपत्रैरावेष्ट्य सुप्तिं कुर्याद्विचक्षणः ॥
प्रातस्तैलामलैः स्नात्वा नरो जायेत निश्चितम् ॥ २१ ॥
भिन्नकज्जलभृंगालीनिभकुंतलसंततिः ॥
कृमिजे च शिरोरोगे व्योपनक्ताह्वशिग्रुजैः ॥ २२ ॥
अजामूत्रेण संपिष्टैर्नस्यं कृमिहरं परम् ॥
विडंगसर्जिकादंतीहिंगुमूत्रेण संयुतम् ॥ २३ ॥
विपक्वं सार्पपं तैलं कृमिघ्नं नस्यतः स्मृतम् ॥
भद्रं श्रियं पुंडरीकं मधुकं नीलमुत्पलम् ॥ २४ ॥
पद्माख्यं वेतसं मूर्वां लामज्जकमथापि वा ॥
दार्वीहरिद्रामंजिष्ठाशारिवोशीरपद्मकम् ॥ २५ ॥
एतैरालेपनं कुर्याच्छंखकस्य प्रशांतये॥
अनंतवाते कर्त्तव्यो रक्तमोक्षःशिराव्यधैः ॥ २६ ॥

इति विडंगाद्यं तैलं ॥ *

इति श्रीयोगतरंगिण्यां शिरोरोगचिकित्सानाम त्रिसप्ततितमस्तरंगः ॥ ७३ ॥

चतुःसप्ततितमस्त रंगः।

अथ प्रदरः ॥

अतिमार्गाश्वगमनप्रभूतसुरतादिभिः ॥

---

१ सिवर। * ॐ उज्जैननगरदेवपालराजाजडात्रसेमहादेवकोलिगहाजाय आधासीसीकूहरे आधासीसीकहाचलीनारीमानवीकेमांयेपरलेकसेउतराजसेंउता-रीनैंवेडतरोगुदकीसक्तमेरीभक्तफुरोमन्त्रईश्वरीवाचा ॐ ॥

प्रदरो जायते स्त्रीणां योनिरक्तस्रुतिः पृथुः॥ १ ॥
अशोकवल्कजं क्वाथं शृतं दुग्धं सुशीतलम् ॥
यथाबलं पिबेत्प्रातः शीघ्रासृग्दरनाशनम् ॥ २ ॥
जीरकप्रस्थमेकं तु क्षीरस्याढकमेव च ॥
घृतप्रस्थार्द्धसंयुक्तं शनैर्मंदाग्निना पचेत् ॥ ३ ॥
सुशीते शर्कराप्रस्थं द्वयं चापि विनिक्षिपेत् ॥
चातुर्जातकणाविश्वमजाजी च घनं जलम् ॥ ४ ॥
दाडिमं रसजं धान्यं रजनी पटवासकम् ॥
वंशजातं यवक्षारं प्रत्येकं तु पलार्धकम् ॥ ५ ॥
जीरकस्यावलेहोयं प्रदरापहरः परः ॥
ज्वरप्रमेहतृड्दाहकृच्छ्रक्षैण्यविनाशनः ॥ ६ ॥
इति जीरकस्यावलेहः ॥
दार्वीरसांजनवृषाब्दकिरातविल्व-
भल्लातकैरपि कृतो मधुना कपायः ॥
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥ ७ ॥
कुशमूलं समुद्धृत्य पेषयेत्तंदुलांबुना ॥
एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते ॥ ८ ॥
भूम्यामलकमूलं हि पीतं तंदुलवारिणा ॥
दिनद्वयं त्रयं वापि स्त्रीरोगं नाशयेद्ध्रुवम् ॥ १० ॥
धात्रीरसं सितायुक्तं योनिदाहापहं पिबेत् ॥
शर्करायुतसंयुक्तं लोध्रं प्रदरनाशनम् ॥ ११ ॥
क्वाथस्तिलानां विनिधायपीतः
कटुत्रयं ब्राह्मणयष्टिचूर्णं ॥

१ नेत्रवाला। २ पीयावांसो। ३ भ्रमरंटी।

निहंति सद्यः कुसुमं सलोध्रं
स्त्रीणामसृग्दाहमतिप्रवृद्धम् ॥ १२ ॥
पारदं टंकणं गंधं पृथग्भागं समाहरेत् ॥
शुष्कं कमलिनीकंदं वेदभागं विमर्दयेत् ॥
लिंगीरसेन तत्सर्वं दिवसत्रितयं बुधः ॥
मधुना भावितं पश्चात् खादेद्वल्लचतुष्टयम् ।
सिताकर्षं क्षीरपलमनुपानं पिबेदनु ॥
प्रदरं योनिशूलं च रक्तातीसारमुल्वणम् ॥
रक्तमेहं मूत्रकृच्छ्रं त्रिदिनान्नाशयेद्ध्रुवम् ॥
इति गुह्यरोगारिः कल्पतरोः ॥
इति श्रीयोगतरंगिण्यां प्रदरचिकित्सानामचतुःसप्ततितमस्तरंगः ॥७४॥

---

## पञ्चसप्ततितमस्तरंगः ।

अथ गर्भस्थितिः ॥
ऋतोः समहेनि सुतो विषमे च सुता मता ॥
अतः समदिने गच्छेत्पुत्रकामो वरांगनाम् ॥१॥
क्षीरेण श्वेतबृहतीमूलं नासापुटे पिबेत् ॥
पुत्रार्थं दक्षिणा नासा वामा सा कन्यकाप्रदा ॥ २ ॥
पयसा लक्ष्मणामूलं पुत्रोत्पत्तिस्थितिप्रदम् ॥
नासयास्येन वा पीतं वटशुंगाष्टकं नवम् ॥
वारिणा शुक्लपक्षेहि पुष्येण तु समाहृतम् ॥ ३ ॥
वाग्भटात् ॥
एरंडस्य च बीजानि मातुलुंगस्य चैव हि ॥

---

१ पुरादिवसे । २ ऊनादिवसे । ३ पुमानितिशेषः ।

सर्पिषा परिपिष्टानि पिबेद्गर्भप्रदानि तु ॥ ४ ॥

चक्रदत्तात् ॥

गोघृतेन सह नागकेसरं श्लक्ष्णचूर्णितमृतौ नितंबिनी ॥
गव्यदुग्धनिरता पिबेद्यदा सा तदा नियतमेववीरसूः॥५॥

लिंगाकारं लक्ष्मणायाश्च मूलं
योगे लब्धं सर्पिषा नस्ययोगात् ॥
पीत्वा सूते पुत्रमत्यंतवीर्यं
पश्चादन्यानप्यमंदांगयष्टिः ॥ ६ ॥

वस्तमूत्रं च सघृतं नवनीतं च माहिषम् ॥
पलत्रयं पिबेन्नारी वंध्या सूते सुतोत्तमम् ॥ ७ ॥

इति गर्भस्थितिः ॥

तैलाविलं सैंधवखंडमादौ-
निधाय रंडा निजयोनिमध्ये ॥
नरेण सार्द्धं रतमातनोति या
सा नैव गर्भं लभते कदाचित् ॥ ८ ॥

धत्तूरमूलिकापुष्पे गृहीत्वा कटिसंस्थिता ॥
गर्भं निवारयत्येव रंडावेश्यादियोषिताम् ॥ ९ ॥

तंडुलीयकमूलानि पिष्ट्वा तंडुलवारिणा ॥
ऋत्वंते तु त्र्यहं पीत्वा वंध्याः कुर्वंति योषितः ॥ १० ॥

धूपिते योनिरंध्रे च निंबकाष्ठेन युक्तितः ॥
ऋत्वंते रमते या स्त्री न सा गर्भमवाप्नुयात् ॥ ११ ॥

गुंजेनबीजं टंकत्रितयं नावच्च दाडिमीमूलम् ॥
तुवरीटंकद्वितयं सिंदूरं टंकयुगलं च ॥ १२ ॥
संमर्द्यं खल्लमध्ये तोयेनैनन्निपीय गर्भवती ॥

१ चैरांई। २ चानरजेन। ३ गाजरबीजं।

रंडा योषिद्गर्भं वेश्या वा पातयत्याशु ॥ १३ ॥
पलाशबीजमध्वाज्यलेपात्सामर्थ्ययोगतः ॥
योनिमध्ये ऋतौ गर्भं न धत्ते स्त्री कदाचन ॥ १४ ॥
तालीसगैरिके पीते विडालपदमात्रके ॥
शीतांबुना चतुर्थेऽह्नि वंध्या नारी प्रजायते ॥ १५ ॥
इति गर्भनिवारणम् ॥
मधुकं शाकबीजं च पयसा सुरदारुकम् ॥
अश्मंतकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ १६ ॥
वृक्षादनी वयस्या च तथैवोत्पलसारिवा ॥
अनंता सारिवा कृष्णा पद्मा मधुकमेव च ॥ १७ ॥
बृहतीद्वयकाश्मर्यः क्षीरभृंगात्वचो घृतम् ॥
पृथक्पर्णीबलाशिग्रुश्वदंष्ट्रामधुयष्टिकाः ॥ १८ ॥
शृंगाटकं बिसं द्राक्षा कशेरुर्मधुकं सिता ॥
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः ॥ १९ ॥
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥
कपित्थबिल्वबृहतीपटोलं च निदिग्धिका ॥ २० ॥
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥
नवमे मधुकानंतापयस्याशारिवाः पिबेत् ॥ २१ ॥
योजयेद्दशमे मासि क्षीरं सिद्धं पयस्यया ॥
लज्जालुधातकीपुष्पमुत्पलं मधुलोध्रकम् ॥ २२ ॥
जलस्थया स्त्रिया पीतं गर्भपातं निवारयेत् ॥
पतंतं स्तंभयेद्गर्भं कुलालकरमृत्तिका ॥ २३ ॥
मधुच्छागीपयःपीता किंवा श्वेताद्रिकर्णिका ॥

१ मधुआकोबीज । २ पाषाणभेद । ३ गुडूची । ४ कमलतंतु ।
५ मासमासप्रति ।

पारावतमलं पीतं त्र्यहं तंडुलवारिणा ॥
गर्भिणीगर्भतो रक्तं स्तंभयेन्निपतद्द्रुतम् ॥ २४ ॥
शर्कराबिसतिलं समांशकं माक्षिकेण सह भक्ष्यते यया॥
नास्ति गर्भपतनोद्भवं भयं पापभीतिरिव तीर्थसेवया२५
शृंगाटकं बिसं द्राक्षा कशेरुर्मधुकं सिता ॥
निवारयंत्यमी गर्भं पीताः परमवेदनम् ॥ २६ ॥
कंकतीमूलमाबद्धं कुमारीसूत्रकैर्दृढम् ॥
कटिदेशे नितंबिन्या गर्भं स्तंभयते ध्रुवम् ॥ २७ ॥
कशेरुशृंगाटकजीवनीयपद्मोत्पलैरंडशतावरीभिः ॥
सिद्धं पयः शर्करया समेतं संस्थापयेद्गर्भमुदीर्णशूलम्२८
कुशकाशेरुबूकाणां मूलैर्गोक्षुरकस्य च ॥
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम्॥ २९ ॥
इति गर्भसंरक्षणम् ॥
उन्नते दक्षिणे कुक्षौ गर्भे च परिमंडले ॥
पुत्रं प्रसूयते वामे कन्यां क्लीबं समेऽगना ॥ ३० ॥
प्रत्यक्पुष्प्याः पारिभद्रस्य यद्वा
मूलं यद्वा काकजंघासमुत्थम् ॥
कट्यां बद्धं योषितां सत्प्रसूतिं
योगे युक्त्या संहृतं साधु कुर्यात् ॥ ३१ ॥
मूलं प्रत्यक्पुष्प्याः पाठाया वा निवेशितं तु मुखे ॥
स्त्रीणां तु प्रसवानां प्रसवं कुरुते सुखेनैव ॥ ३२ ॥
यदि तत्प्रत्यक्पुष्प्यास्त्रुट्यति मूलं तदर्थमुद्धरता ॥
कन्या भवति तदानीमत्रुटिते तत्र पुत्रः स्यात् ॥ ३३ ॥
पुटदग्धभुजगकंचुककज्जलमधुपूरितेक्षणद्वंद्वा ॥

१ खिरटी। २ शुभनक्षत्रे।

सद्यो भवति विशल्या विमूढगर्भापि गर्भवती ॥ ३४ ॥
इति राजमार्तंडात् ॥
पाठा[1]सुरसा[2]सिंहास्यमयूरकजटा[3]ः पृथक् ॥
नाभिवस्तिभगे लिप्ताः सुखं नारी प्रसूयते ॥ ३५ ॥
हिमवद्दक्षिणे पार्श्वे सुरसा नाम यक्षिणी ॥
तस्या नूपुरशब्देन विशल्या भव गर्भिणि ॥ ३६ ॥
मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्यस्य रश्मयः ॥
मुक्तः सर्वभयाद्गर्भ एहि माचिर माचिर स्वाहा ॥ ३७॥
इहामृतं च सोमश्च चित्रभानुश्च[4] भामिनि ॥
उच्चैःश्रवाश्च[5] तुरगो मंदिरे निविशंतु ते ॥ ३८ ॥
इत्यक्षतान्क्षिपेत् ॥
इदममृतमपां समुद्धृतं वै
तव लघुगर्भविमोक्षणाय देवि ॥
तदनलपवनार्कवासवास्ते
सह लवणांबुधरै[6]र्दिशंतु शांतिम् ॥ ३९ ॥
जलं च्यावनमंत्रेण सप्तवाराभिमंत्रितम् ॥
पीत्वा प्रसूयते नारी दृष्ट्वा वा चक्रवर्धनम् ॥ ४० ॥
कलापक्षार्कऋतुदिङ्मन्वष्टाष्टादशांबुधीन् ॥
विलिखेन्नवकोष्ठेषु त्रिंशाख्यं यंत्रमुत्तमम् ॥ ४१ ॥

| | | |
|---|---|---|
| १६ | २ | १२ |
| ६ | १० | १४ |
| ८ | १८ | ४ |

१ तुलसी । २ अडूसो । ३ मोरशीखाः । ४ सूर्यः । ५ इंद्रः ।
६ क्षारसमुद्रः ।

गुंजामूलस्य खंडानि सप्तसप्तदलानि च ॥
खंडितानि कटिस्थानि सुप्रसूतिं प्रकुर्वते ॥
बाणपुंखा जटा वाथ विशल्यां कुरुतेंगनाम् ॥ ४२ ॥
इति मूढगर्भचिकित्सा ॥
आर्द्रहेमफलं पिष्ट्वा कटुतैलं चतुर्गुणम् ॥
विपचेद्धटिकायुग्मं तत्तैलं हेमसुंदरम् ॥
दुष्टप्रस्वेदशमनं सूतिकादोषनाशनम् ॥ ४३ ॥
इति हेमसुंदरं तैलम् ॥
रसे कनकसंभवे कटुकतैलमापाचये-
द्वचार्कनकदुग्धिकारजनिनागरैः कल्कितैः ॥
इदं कनकसुंदरं भवति दुष्टसंस्वेदजित्
समस्तपवनामयप्रणुदनल्पकांतिप्रदम् ॥ ४४ ॥
इति कनकसुंदरं तैलम् ॥
पिप्पली पिप्पलीमूलं चव्यं शुंठीयवानिका ॥
जीरके द्वे हरिद्रे द्वे विडं सौवर्चलं तथा ॥ ४५ ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ॥
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥ ४६ ॥
कांजिकं वज्रकं नाम बलवर्णाग्निदीपनम् ॥
मक्कलं शूलशमनं परं क्षीराभिवर्धनम् ॥ ४७ ॥
इति वज्रकांजिकम् ॥
आज्यस्यांजलियुग्ममत्र पयसः कंसं तुलार्द्धं तथा
खंडस्यापि पचेद्विचूर्णितमिदं विश्वौषधं निक्षिपेत्
अस्यार्द्धं गुडवद्विपाच्य विधिना मुष्टित्रयं धान्यकं
मिस्याः पंचपलं पलं कृमिरिपोःसाजाजि जीरं तथा ४८॥

१ धत्तूर। २ चोक।

व्योषांभोददलोरगद्रविडिका भृंगस्य च प्रक्षिपे-
त्तृट्कासज्वरपांडुरोगशमनं विड्भेदविध्वंसनम् ॥
शूलारोचकनाशतनं क्रमिहरं मंदाग्निसंदीपनं ॥
सूतीनां खलुखंडनागरमिदं सौभाग्यदं सेवितम् ॥ ४९॥
इति सौभाग्यशुंठी ॥
दशमूलीशृतं तोयं कवोष्णं पिप्पलीयुतम् ॥
पीतं तत्सूतिकारोगसुदग्रमपि कृंतति ॥ ५० ॥
इति दशमूलादिः ॥
सहचरकुलत्थपुष्करदारुनिशादारुवेरसक्काथः ॥
पीतः सहिंगुलवणः शमयति शूलज्वरौ सूत्याः ॥ ५१ ॥
इति सहचरादिः क्काथः ॥
संयोजितो दलितया कणया कवोष्णो
निर्गुंडिकालशुननागरजः कषायः॥
पीतो निहंति कफमारुतपित्तजातं
सूत्यामयं सकलमेव सुदुस्तरं च ॥ ५२ ॥
इति निर्गुंड्यादिः ॥
देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम् ॥
भूनिंबः कट्फलं मुस्तं तिक्ता धान्यं हरीतकी ॥ ५३ ॥
गजकृष्णा सुदुःस्पर्शा गोक्षुरुर्धन्वयासकः ॥
बृहत्यतिविषाच्छिन्ना पर्पटः कृष्णजीरकम् ॥ ५४ ॥
समभागानि सर्वाणि सिंधुरामठसंयुतम् ॥
पिबेदष्टावशेषं तु प्रसूतां पाययेत्स्त्रियम् ॥ ५५ ॥
सहितानुल्बणस्वेदज्वरशूलशिरोर्तिभिः ॥
निहंति सूतिकारोगान्वातपित्तकफोद्भवान् ॥ ५६ ॥

१ मोथा । २ पत्रज । ३ नागकेसर । ४ लोणाइत्यर्थ. ।

नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः ॥
क्षीराढकेन संयुक्तां खंडस्यार्धतुलां पचेत् ॥ ५७ ॥
शताह्वाजीरकव्योषत्रिसुगंधियवानिकाः ॥
ग्रंथिकं कृष्णजीरं च मधुकं च विडंगकम् ॥ ५८ ॥
लवंगं धान्यकं मांसी तालीसं नागकेसरम् ॥
कारवीमिसिचव्याग्निमुस्तानां च पलंपलम् ॥ ५९ ॥
लेहीभूतमिदं सिद्धं घृतभांडे निधापयेत् ॥
तद्यथाग्निबलं खादेत्सूतिका तु विशेषतः ॥ ६० ॥
बल्यं वर्ण्यं तथायुष्यं वलीपलितनाशनम् ॥
वयसः स्थापनं हृद्यं मंदाग्नेर्दीपनं परम् ॥६१ ॥
आमवातप्रशमनं सौभाग्यकरमुत्तमम् ॥
मक्कल्लशूलशमनं सूतिकारोगनाशनम् ॥ ६२ ॥

इति सौभाग्यशुंठी अनुभूता वाग्भटात् ॥

सूताभ्रगंधोषणलोहशंख-
वन्योपलाभस्मविषं सुपिष्टम् ॥
एकेंदुचंद्रानलवार्धिकुंभि-
कलैकभागैः क्रमशो विवृद्धम् ॥ ६३ ॥
प्रसूतिवातानिलदंतबंध-
मार्द्रायुना घोरसुसंनिपाते ॥
निजानुपानैर्निजपथ्ययोगैः
सर्वातिसारग्रहणीगदेषु ॥
प्रतापलंकेश्वरनामधेयो
रसः प्रयुक्तो गिरिराजपुत्र्या ॥ ६४ ॥

इति प्रतापलंकेश्वररसः ॥

१ पार्वत्या ।

अमृतानागरसहचरभद्रोत्कटपंचमूलजलदजलम् ॥
शृतशीतं मधुसहितं हरति परं सूतिकाशूलम् ॥ ६५ ॥

इति योगतरंगिण्यां सूतिकाचिकित्सानाम
पञ्चसप्ततितम स्तरंगः॥

षट्सप्ततितमस्तरंगः।

संयोजितं पल्लवपंचकेन
जातीप्रसूनैर्मधुकान्वितैश्च ॥
सूर्यांशुतप्तं घृतमंगनाना-
मभ्यंगतो हंति वरांगगंधम् ॥ १ ॥
मृणालपद्मोत्पलवीजयुक्तं
तैलं तथोशीरयुतं विपक्वम् ॥
पैच्छिल्यशैथिल्यविगंधितानां
नाशं करोति स्मरमंदिरस्य ॥ २ ॥
हरितालभागपंचकमेको भागः पलाशभस्मभवः ॥
भागश्च यवक्षारः स्याल्लेपाद्योनिलोमहरः ॥ ३ ॥
इति राजमार्तंडात् ॥
दग्ध्वा शंखं क्षिपेद्रंभारसेन क्षारयोजितम् ॥
तुल्यांशं लेपितं हंति लोमं गुह्यगतं ध्रुवम् ॥४॥

इति श्रीयोगतरंगिण्यां स्त्रीरोगचिकित्सानाम
षट्सप्ततितमस्तरंगः ॥

सप्तसप्ततितमस्तरंगः।

अथ वालकरोगाः ॥
त्रिविधः कथितो वालः क्षीरान्नोभयवर्त्तनः ॥
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसंभवः ॥ १ ॥

---

१ मोथा।

कुष्ठं वचाभयाभार्गी[1] केतकं क्षौद्रसर्पिषा ॥
वर्णायुःकांतिजननो लेहो बालस्य सर्वथा ॥ २ ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥
मृत्पिंडेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा ॥ ३ ॥
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥
नाभिपाके निशालोध्रप्रियंगुमधुकैः शृतम् ॥ ४ ॥
तैलमभ्यंजने शस्तमेभिर्वाप्यथ चूर्णकम्॥ ५॥

वचाकुष्ठशंखाब्जलोहैः शिशूनां
शरीरे धृतैर्याति रक्षांसि नाशम् ॥
कुंनटय[2]र्कदुग्धाज्यविश्वैः सकुष्ठैः
प्रलेपोथ वा नित्यमेषां विधेयः ॥ ६ ॥

प्राचीगतं पांडुरसिंदुवार-
मूलं शिशूनां गलके निबद्धम् ॥
करोति दंतोद्भववेदनाया
निःसंशयं नाशमकांड एव ॥ ७॥

सप्तच्छदार्कच्छदनक्तमाल-
मूलैस्तुरंगारिजटासमेतैः ॥
उत्सादितांगः पशुमूत्रपिष्टै-
र्ह्रीबेरमुंडीसलिलाभिषिक्तः ॥
दिने दिने याति शिशुः प्रवृद्धिं
पतिर्निशानामिव शुक्लपक्षे ॥ ८ ॥

इति राजमार्तंडात् ॥

हरिद्राद्वयय[3]ष्ट्याह्वासिंहीश[4]क्रयवैः कृतम् ॥

---

१ ब्राह्मी । २ मनशिल । ३ मनशिल । ४ समानु ।

शिशोर्ज्वरातिसारघ्नं कार्पथं सर्वरोगजित् ॥ ९ ॥
पृष्टिपर्णी शताह्वा च लीढा माक्षिकसर्पिषा ॥
ग्राहिणी दीपनी हंति मारुतार्ति सकामलाम् ॥ १० ॥
ज्वरातिसारपांडुघ्नी बालानां सर्वरोगनुत् ॥
मूर्वानिशासर्षपरामसेनशिवासमंगांबुदकारवीणाम् ११॥

छागीपयोभिः सह पेषितानाम्-
मुद्वर्तनं स्याज्ज्वरहं शिशूनाम् ॥
शृंगीं सकृष्णाब्दविषां विचूर्ण्य
लेहं विदध्यान्मधुना शिशूनाम् ॥ १२ ॥
कासज्वरच्छर्दिभिरर्दितानां
समाक्षिकां वातिविषामथैकाम् ॥ १३ ॥

द्विवार्ताकीफलरसं पंचकोलं च लेहयेत् ॥
एकद्वित्राणि वस्त्राणि वातपित्तकफज्वरे ॥ १४ ॥

विल्वं च पुष्पाणि च धातकीनां
जलं च रोध्रं गजपिप्पली च ॥
क्वाथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥ १५ ॥

नागरातिविषामुस्तावालकेंद्रयवैः शृतम् ॥
बालकं पाययेत्प्रातः सर्वातीसारनाशनम् ॥ १६ ॥
कल्कः प्रियंगुकोलास्थिमध्यमुस्तरसांजनैः ॥
क्षौद्रालीढः कुमारस्य च्छर्दितृष्णातिसारनुत् ॥ १७ ॥

यस्ताम्रचूडविहगोभयपार्श्वपक्ष-
पुच्छैर्गवाज्यसहितैः कृतधूपकोंगे ॥

---

१ कासश्वासवमीहरं इत्यपिपाठः । २ चिरायतो । ३ छिन्ना इत्यपिपाठः । ४ मजीठ ।

आरभ्य जन्मदिवसाद्दिनसप्तकं हि
बालस्य तस्य न कुतश्चन भीतिरेति ॥ १८ ॥

इति राजमार्तंडात् ॥

लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्कितः ॥
बालस्य रुंध्यान्नियतं रक्तस्रावं प्रवाहिकाम् ॥ १९ ॥
हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ॥
पीत्वा कुमारः स्तन्येन मुच्यते तालुकंटकात् ॥ २० ॥
गृहधूमनिशाकुष्ठराजिकेंद्रयवैः शिशोः ॥
लेपस्तक्रेण हंत्याशु सिध्मापामाविचर्चिकाः ॥ २१ ॥
पंचमूलीकषायेण सघृतेन पयः शृतम् ॥
सशृंगवेरं सगुडं शीतं हिक्कार्दितः पिबेत् ॥ २२ ॥
द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ॥
लीढं श्वासं निहंत्याशु कासं च तमकं तथा ॥ २३ ॥
भेषजं पूर्वमुद्दिष्टं महातापज्वरादिषु ॥
कार्यं तदेव बालानां तेषु दाहादिकं विना ॥ २४ ॥
त एव दोषा दुष्यास्ते ज्वराद्या व्याधयश्च ते ॥
अतस्तदेव भैषज्यं किंतु मात्रा कनीयसी ॥ २५ ॥
अतसीकारवीमुस्तासर्षपैः सपयोधरैः॥
दार्वीभूनिंबमूर्वार्कहरिद्राभिश्च लेपकः ॥
ज्वरं निहंति बालस्य महांतमपि वासरैः ॥ २६ ॥
गंधकमेको भागो भागद्वितयं च जातिफलम्
जातीपत्रं नागभागत्रितयं च खदिरस्य ॥ २७ ॥
वल्कलजातैः क्वाथैः सं मिलितं कांचनारस्य ॥
पीतः स्तन्यविमिश्रो नाशयति शिशोर्ज्वरं तं च॥ २८ ॥
जिह्वापिडिकापाकं गुदपाकं लेपनाच्च पानाच्च ॥

धावनतस्तत्तोयैर्नश्यंति शिशोर्गुदे रोगाः ॥ २९॥
सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः ॥
विडालविड्जालोम मेषशृंगी वचा मधु ॥ ३० ॥
धूपः शिशोर्ज्वरघ्नोयं सर्वग्रहनिवारणः ॥ ३१ ॥
क्षणादुद्विजते बालः क्षणाद्भ्रमति रोदिति ॥
नखैर्दंतैर्दारयति धात्रीमात्मानमेव च ॥ ३२ ॥
ऊर्ध्वं निरीक्षते दंतान्खादेत्कूजाति जृंभते ॥
भ्रुवौ क्षिपति दंतौष्ठं फेनं वमति चासकृत ॥ ३३ ॥
क्षामोतिनिशि जागर्त्ति शून्यांगो भिन्नविट्स्वरः ॥
मत्स्यशोणितगंधश्च न चाश्नाति यथापुरा ॥ ३४ ॥
सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम् ॥
वचाकुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि वा ॥ ३५ ॥
सारिवा सैंधवं चैव पिप्पली घृतमष्टमम् ॥
मेध्यं घृतमिदं सिद्धं पातव्यं च दिने दिने ॥ ३६ ॥
दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान्भवेत् ॥
न पिशाचा न रक्षांसि न भूतानि न मातरः ॥
प्रद्रवंति कुमाराणां पिबतामष्टमंगलम् ॥ ३७ ॥

इत्यष्टमंगलं घृतम् ॥

सटीकिरातसिद्धार्थमूर्वामुस्तोपकुंचिकाः॥
श्वेताशिरीष इत्येषां छागीक्षीरेण लेपनम् ॥ ३८ ॥
ज्वरदाहवमीरेकरक्षातृड्नाशनं शिशोः ॥

इति वैद्यालंकारात् अष्टमंगलमुद्वर्त्तनम् ॥

पादकल्केऽश्वगंधायाः क्षीरेष्टगुणिते पचेत् ॥
घृतं देयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ ३९ ॥

इत्यश्वगंधादिघृतम् ॥

लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणम् ॥
रास्नाचंदनकुष्ठाब्दावाजिगंधानिशायुतैः ॥४०॥
शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः ॥
बालानां ज्वररक्षोघ्नमभ्यंगाद्बलवर्णकृत् ॥४१॥

इति लाक्षादितैलं वृंदात् ॥

अथ ग्रहजुष्टप्रतीकारः ॥

प्रथमे दिवसे मासे वर्षे नंदा शिशोर्ग्रहः ॥
तथा गृहीतमात्रस्य प्रथमं भवति ज्वरः ॥
कुथत्यनेकधा रोगाद्विकारं कुरुतेपि च ॥१॥
द्वितीये दिवसे मासे वर्षे सुनंदा तद्गृहीतःस्तन्यं न गृह्णाति
तृतीयेदिवसेमासे वर्षेपूतना० ॥३॥
चतुर्थे दिवसे मासे वर्षे मंडितकानाम० ॥ ४॥
पंचमे दिवसे मासे वर्षे पूतनानाम०॥५॥
षष्ठे दिवसे मासे वर्षे शकुनिनाम० ॥६॥
सप्तमे दिवसे मासे वर्षे शुष्करेवतीनाम मातृका ॥७॥
अष्टमे दिवसे वर्षे आर्यकानाम ग्रहः॥८॥
नवमे दिवसे मासे वर्षे सूतिकानाम्नी ॥९॥
दशमे दिवसे मासे वर्षे निर्ऋतिनाम ॥१०॥
एकादशे दिवसे मासे वर्षे पिलिपिंडिकानाम० ॥ ११ ॥
द्वादशे दिवसे मासे वर्षे कामुकानाम बालग्रहः ॥ १२ ॥
नदीतीरे दयारुष्टमहादेवीस्वरूपकम् ॥
कृत्वा पूजा च कर्तव्या पुष्पधूपादिभिस्तथा ॥ १३ ॥
देवीं मूर्तौ नमावाद्य संकल्पं कृत्वा अमुकगोत्रस्यास्यैतस्य
बालस्य शरीरेस्थितसर्वग्रहशांत्यर्थं सर्वग्रहबालिं कार्यं
तत्र नामभेदेन पूजा कुर्यात्॥ ॥ॐ हुंफट् स्वाहा॥ इति

मंत्रेण स्नानवस्त्रचन्दनाक्षतधूपदीपनैवेद्यसप्तपताकासप्त-
दीपादिकं विधाय॥ततोगुडोदकमत्स्यमांससुरावटकान्न-
स्विन्नगोधूमादि तदग्रे परिवेष्य ॥ ॐ नमो भगवते रुद्राय
सत्यसुवसत्यसुवहुंफट्स्वाहा॥ इतिमंत्रंपठित्वा वालकेन
मुष्टिमात्रमन्नं संग्राह्यम् पूर्वंपरिवेपितान्ते त्याजयेत् ॥
ततोन्यतःमुष्टिमात्रमन्नं मंत्रेण क्षिपेत्॥ॐ फट्वैनतेया-
य नमः॥ ततोन्यमपि॥न्हांन्हांक्षः॥इति त्रिवारं वलिं द-
त्वा वालप्रमाणपुष्पमालांगृहीत्वावालोपरि त्रिःपरिभ्रा-
म्य॥ ॥ ॐ कारिणिस्वर्णपक्ष वालकं रक्षरक्ष स्वाहा ॥
इति मंत्रेण तां कंठेऽर्पयेत् ॥ ततस्तत्सर्वं रात्रौ चतुष्पथे
स्थापयित्वा पश्चादपश्यन्नेवगृहमागच्छेत्॥ ततो गृहमा-
गत्य शांत्युदकेन अश्वत्थपत्रेण वालमभिषिंचेत् ॥ शां-
तिरस्तु पुष्टिरस्तु तुष्टिरस्तु यच्छ्रेयस्तदस्तु ॥ इत्यभिषिं-
चेत् ॥ ततो माहेश्वरधूपेन वालं धूपयेत् ॥ स यथा ॥
कर्पासास्थिमयूरपिच्छवृहतीनिर्माल्यपिंडीतक-
त्वङ्मांसीवृषदंशविड्नखकणाकेशाहिनिर्मोककैः ॥
नागेंद्रद्विजहिंगुशृंगमरिचैस्तुल्यैः कृतं धूपनं
कृत्योन्मादपिशाचराक्षससुरावेशग्रहघ्नं परम् ॥

इति धूपः ॥ अथ मंत्रः ॥ ॐनमो रावणाय हन
हन मुंचमुंच स्वाहा ॥ एवं दिनत्रयं कार्यं चतुर्थेऽन्हि
चतुरो विप्रान्भोजयेत् ॥ सुवर्णदानं शुभं भवति ।
वालो यो ऽचिरजातः स्तन्यं न गृह्णाति तर्हि वै तस्य ॥
सैंधवधात्रीमधुघृतपथ्याकल्केन घर्षयेज्जिह्वां ॥
वालानां ज्वरवांतिरेककसनश्वासेषु शृंगीविषा-
कृष्णाब्दं मधुयुक्तधार्द्रपदुर्हिग्वेलाज्यमानाहके ॥



6902

कृच्छ्रे मस्तुयुता त्रुटिर्द्विजगदे दंष्ट्रचा शुनः शस्यते
कार्श्ये क्षीरविदारिकासृतघृतं द्राक्षादिके नीलरुजा ॥
इति श्रीयोगतरंगिण्यां बालरोगचिकित्सानाम
सप्तसप्ततितमस्तरंगः ॥

अष्टसप्ततितमस्तरंगः ।

अथ विषम् ॥
स्थावरं जंगमं चैव द्विविधं विषमुच्यते ॥
स्थावरं वत्सनाभादिसर्पादीनां तु जंगमम् ॥ १ ॥
यः पिबति पुण्यदिवसे जलपिष्टसितपुनर्नवामूलम् ॥
तत्संनिधौ न वर्षं वृश्चिकभुजगाः प्रसर्पंति ॥ २ ॥
मसूरीं निंबपत्राभ्यां खादेन्मेषगते रवौ ॥
अब्दमेकं न भीतिः स्याद्विषार्त्तस्य न संशयः ॥ ३ ॥
तंडुलीयकमूलं तु पीतं तंडुलवारिणा ॥
तक्षकेणापि दष्टं हि निर्विषं कुरुते नरम् ॥ ४ ॥
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ॥
भावितं सर्प्पदष्टानां पाननस्यांजने हितम् ॥ ५ ॥
दंशोपरि निबध्नीयात्तक्षणाच्चतुरंगुलम् ॥
क्षौमादिभिर्वैणिकया सिद्धैर्मंत्रैश्च मंत्रयेत् ॥ ६ ॥
अंबुवत्सेतुबंधेन स्तंभ्यते विषमं विषम् ॥
नक्तमालफलव्योषाबिल्वमूलनिशाद्वयम् ॥ ७ ॥
सौरसं पुष्पमाजं वा मूत्रं बोधनमंजनम् ॥
वंध्याककोंटिकीमूलं छागमूत्रेण भावितम् ॥ ८ ॥
नस्यं कांजिकसंपिष्टं विषोपहतचेतसः ॥
इति सर्पविषम् ॥
अजाक्षीरेण संपिष्टा शिरीषफलमिश्रिता ॥

उपकुल्या विषं हंति वृश्चिकस्य प्रलेपतः ॥ ९ ॥
कार्प्पासपत्रैः संपिष्टैः साज्यैर्लेपो विषापहः॥
वृश्चिकस्याथवा वत्सनाभलेपः प्रशस्यते ॥ १० ॥

मनःशिलाकुष्ठकरंजबीज-
शिरीषकाश्मीरभवैः समांशैः ॥
विनिर्मितास्ये विधृतावलिप्ता
संहारिणी वृश्चिकवैकृतस्य ॥ ११ ॥

अवतारयत्यधोनीतमूर्द्ध्वमारोपितं तु वर्द्धयति ॥
वृश्चिकगरलं विधिवत्सायकपुंखाभवं मूलम् ॥ १२ ॥
द्विरदपुरीषसमुत्थच्छत्रकवह्निवारफलकृता गुटिका ॥
वृश्चिकविषस्य कुरुते संक्रमणमाशु करे विधृता ॥१३॥

अथ मंत्रो लिख्यते ॥

ॐआदित्य रथवेगेन विष्णुबाहुबलेन च ॥
सुपर्णपक्षवातेन भूम्यां गच्छ महाविष ॥ १४ ॥

ॐपक्षयोगिपादाज्ञाश्रीशिवोत्तमप्रभु-
पादाज्ञा भूम्यां गच्छ महाविष ॥ १५ ॥

इति मंत्रं वृश्चिकविद्धस्य कर्णे जपेत् एकविंशतिवा-
रं दंशं स्पृष्ट्वैकविंशतिवारं चाभिमंत्रयेन्निर्विषो भवतिनरः

इति वृश्चिकविषम् ॥

अंकोलमूलनिःक्वाथं फाणितं सघृतं लिहेत् ॥
तैलाक्तश्चित्रनानांशगरदोषविषापहः ॥ १७ ॥
शर्कराचूर्णसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥
लेहः प्रशमयत्युग्रं नानायोगकृतं विषम् ॥ १८ ॥

इति कृत्रिमविषम् ॥

---

१ दुग्धविकार ।

काकोदुंबरिकामूलं धत्तूरकफलान्वितम् ॥
पीतं तंडुलतोयेन सारमेयविषापहम् ॥ १९ ॥
इति श्वानविषापहम् ॥
पिचुमंदशमीवटकल्कयुतं
क्वथितं जलमाशु विलेपनतः ॥
नखदंतविषाणि निहंति नृणां
विषमान्यखिलान्यपि सत्यमिदम् ॥ २० ॥
सोमवल्कोश्वकर्णश्च गोजिह्वा हंसपद्यपि ॥
रजन्यौ गैरिकं लेपः पिडिकामक्षिकाविषे ॥ २१ ॥
इति पिडिकामक्षिकाविषम् ॥
मरिचं नागरोपेतं सिंधुसौवर्चलान्वितम् ॥
नागवल्लीरसो हन्याल्लेपनाद्वरटीविषम् ॥ २२ ॥
इति वरटीविषम् ॥
नागरं गृहकपोतपुरीषं वीजपूररसो हरितालम् ॥
सैंधवं च विनिहंति विलेपादाशु भृंगजनितं विषमेतत्॥
इति भ्रमरविषम् ॥
आगारधूममंजिष्ठारजनीलवणोत्तमैः ॥
लेपो जयत्याखुविषं कोशातक्यथवा सिता ॥२४ ॥
इति मूषकविषम् ॥
शिरीषबीजैः कुलिशद्रुमस्य क्षीरेण पिष्टैः कृतलेपनानां॥
विषं विनाशं व्रजति क्षणेन मंडूकदंशप्रभवं नराणां२५॥
इति मंडूकविषम् ॥
शनौ निमंत्र्य यष्टिं च पूर्वपुष्करिणीस्थिताम् ॥
रवौ प्रातस्तत्र गत्वा विद्वान्संयतमानसः ॥ २६ ॥

१ घोंकड। २ कायफल। ३ कनेर। ४ सहुंडस्य। ५ घरोंदर।

तडागसंस्थितस्तंभात्काष्ठमानीय खंडशः ॥
पिबेद्बद्धः प्रमुच्येत नार्यां बद्धेंद्रियोऽपि च ॥ २७ ॥

इति स्त्रीवद्धविषम् ॥

कृष्णवेत्रस्य निःक्वाथः कल्को घृतविमिश्रितः ॥
शृंगिमत्स्यविषं हंति बर्हिपक्षेण धूपनम् ॥ २८ ॥

इति शृंगिमत्स्यविषचिकित्सा ॥

पिपीलिकाभिर्दष्टानां मक्षिकामशकैस्तथा ॥
गोमूत्रेण वरालेपः कृष्णवल्मीकमृत्कृतः ॥ २९ ॥

इति पिपीलिकाविषम् ॥

लेपः प्रदीपतैलस्य खर्जूरविषनाशनः ॥
हरिद्राद्वयलेपो वा सगैरिकमनःशिलः ॥ ३० ॥

इति शतपदीविषम् ॥

कटभ्यर्जुनशैरीषसेलुक्षीरद्रुमत्वचः॥
कषायकल्कचूर्णाःस्युः कीटलूताव्रणापहाः ॥ ३१ ॥
रजनीद्वयमंजिष्ठापतंगगजकेसरैः ॥
शीतांबुपिष्टैरालेपः सद्योलूताविषापहः ॥ ३२ ॥
गैरिकर्णद्वियं सेलुः पाटला द्वे पुनर्नवे ॥
कपित्थश्च शरीषश्च लेपो लूताविषापहः॥ ३३ ॥

इति लूताविषम् ॥

इति श्रीयोगतरंगिण्यां विषचिकित्सानामा
ष्टसप्ततितमस्तरंगः ॥

एकोनाशीतितमस्तरंगः ।

अथ रसायनम् ॥

यज्जराव्याधिशमनं भेषजं तद्रसायनम् ॥

१ त्रिफला। २ कानखिजूरा । ३ मालकागनी । ४ लिसोडो । ५ गमगेरन ।

पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ १ ॥
अविशुद्धशरीरस्य युक्तो रसायनो विधिः ॥
न भाति वाससि क्लिष्टे रंगयोग इवार्पितः ॥ २ ॥
सिंधूत्थशर्कराशुंठीकणामधुगुडैः क्रमात् ॥
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ३ ॥

मंडूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम् ॥
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शंखपुष्प्याः ॥ ४ ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ॥
मेध्यानि चैतानि रसायनानि
सेव्या विशेषेण तु शंखपुष्पी ॥ ५ ॥
यः कुष्ठचूर्णं रजनीविरामे
मध्वाज्यसम्मिश्रितमत्ति नित्यम् ॥
समत्तमातंगबलः सुगंधि-
र्वाग्मी चिरायुश्च भवेन्मनुष्यः ॥ ६ ॥

शिशिरे योऽश्वगंधायाः कंदचूर्णं पलोन्मितम् ॥
मासमत्ति समध्वाज्यं स वृद्धोऽपि युवा भवेत् ॥ ७ ॥
घृतामलकशर्करातिलपलाशबीजानि यः
समानि शयनस्थितो मधुयुतानि खादेन्निशि ॥
वलीपलितवर्जितस्तरुणनागतुल्यो बली
बृहस्पतिसमः पुमान्भवति सोऽचिरेण ध्रुवम् ॥ ८ ॥
इति राजमार्तंडात् ॥

---

१ युवा ।

ये मासमेकं स्वरसं पिबंति दिनेदिने भृंगसमुत्थमत्र ॥
क्षीराशिनस्ते बलवर्णयुक्ताः समाशतं जीवितमाप्नुवंति
असिततिलविमिश्रान्पल्लवान्भक्षयेद्यः
ससुरभिपयसो वै भृंगराजस्य मासम् ॥
भवति च चिरजीवी व्याधिभिर्निर्विमुक्तो
भ्रमरसदृशकेशः कामचारी मनुष्यः ॥ १० ॥

पीताश्वगंधा पयसार्द्धमासं
घृतेन तैलेन सुखांबुना वा ॥
कृशस्य पुष्टिं वपुषो बिभर्ति
नरस्य सस्यस्य यथांबुवृष्टिः ॥ ११ ॥

इति वृंदात् ॥

सततमरुष्करपिप्पलिवृद्धि-
र्वपुषि निरामयतां विदधाति ॥
कनकशिलाजतुगुग्गुलुधात्री-
फललशुनत्रिफलामययोगः ॥ १२ ॥
घृतदधिमधुरपयोदधिमंडै-
रुपसि कृतः करिकर्णपलाशः ॥
स्थगयति हि स्थिरतां स्थविराणां
विदधाति वपुर्बलवत्ताम् ॥ १३ ॥
एरंडतैलमथ निंबफलास्थितैल-
मेतद्रसायनमनामयकायकारि ॥
ज्योतिष्मतीफलपलाशफलोद्भवं वा
तैलं वलीपलितहारि भिषक्प्रदिष्टम् ॥ १४ ॥

१ भिलवा ।

धात्रीफलानि पयसांपतिवारिणा वा
स्विन्नानि यः शिशिरकालसमुद्भवानि ॥
निष्कुलान्यथ तिलैरसितैः समानि
खादेदनामयवपुः स पुमाञ्छतायुः ॥ १५ ॥
ससितया वचयामलकैरथ
त्रिफलया त्वथवा घृतमिश्रया ॥
कनकलोहरजः सदलंकृतं
परमिदं हि रसायनमुच्यते ॥ १६ ॥

इति कालिकातः ॥

अंभसां प्रसृतीरष्टौ रवावनुदिते पिबेत् ॥
वातपित्तकफाञ्जित्वा जीवेद्वर्षशतं दृढम् ॥ १७ ॥
व्यंगवलीपलितघ्नं पीनसवैस्वर्यकासशोषघ्नम् ॥
रजनीक्षयेंबुनस्यं रसायनं दृष्टिजननं च ॥ १८ ॥
मलकंचुकपरिमुक्तः पूतः षड्गुणगंधकजारितः सूतः ॥
निजसेवकजननूतनकल्पः सुरतविधौ दलितोत्तमतल्पः ॥
सिंदूराख्यः सूतो वरया प्रातर्जग्धो घृतमधुरया ॥
वितरति तरुणिमरूपमुदारं वृद्धस्यापि विमोहति दारम् ॥
वलिरेको घृतमरिचनियुक्तः पलितवलिघ्नः प्रातर्भुक्तः ॥
तद्वन्मारितमभ्रं सत्वं किमपरमस्ति रसायनतत्वं ॥ २१ ॥

इति चर्पटितः ॥

इति श्रीयोगतरंगिण्यां रसायनाधिकारोनाम
एकोनाशीतितमस्तरंगः ॥

---

अशीतितमस्तरगः ॥

अथ वाजीकरणम् ॥

अतिव्यवायशीलो वा न च वाजीक्रियारतः ॥

ध्वजभंगमवाप्नोति स शुक्रक्षयहेतुकं ॥ १ ॥
प्रसाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च जायते ॥
साध्यानामवशिष्टानां कार्यो वाजीकरो विधिः ॥ २ ॥
पिप्पलीलवणोपेतौ वस्तांडौ क्षीरसर्पिषा ॥
साधितौ भक्षयेद्यस्तौ स गच्छेत्प्रमदाशतम् ॥ ३ ॥
वस्तांडसिद्धे पयसि भावितानसकृत्तिलान् ॥
यः खादेत्स पुमान्गच्छेत्स्त्रीणां शतमपूर्ववत् ॥ ४ ॥
मृतं नागाभ्रकं तीक्ष्णं समं खल्वे विमर्दयेत् ॥
धत्तूरबीजं विजया शाल्मली मधुकेन च ॥ ५ ॥
नागवल्लीद्रवैर्भाव्यं त्रिवारं चार्कशोषितम् ॥
चतुर्गुंजामितं खादेच्छर्कराघृनसंयुतम् ॥ ६ ॥
पंडत्वमग्निमांद्यं च प्रमेहविंशतिं तथा ॥
हरते कुरुते वीर्यं पुष्पधन्वा रसो नृणाम् ॥ ७ ॥
चूर्णं विदार्याः सुकृतं स्वरसेनैव भावितम् ॥
शर्करामधुसर्पिर्भ्यां युक्तं लीढ्वा पयः पिबेत् ॥ ८ ॥
एतेनाशीतिवर्षोपि युवेव परिहृष्यति ॥
विदारीकंदचूर्णं तु घृतेन पयसा नरः ॥ ९ ॥
उदुंबरसमं खादेद्वृद्धोपि तरुणायते ॥
गोक्षुरुकः क्षुरकः शतमूली वानरिनागवलातिवला च ॥
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति १०
इति वृंदात् ॥

शतावरीनागवलाविदारिका-
त्रिकंटकैरामलकीफलान्वितैः ॥
विचूर्णितैः पंचभिरेकशः पृथक्
प्रकल्पितैर्वा घृतमाक्षिकप्लुतैः ॥ ११ ॥

इति प्रयोगाः षडिमे भिषग्वरै-
रुदीरिताः शर्करया समन्विताः ॥
नृणामनेकप्रमदोपसर्पिणां
प्रधानधातोरतिरेककारणाः ॥ १२ ॥
सघृतमधुबलात्रयस्य चूर्णं
समधुसिताघृतमुच्चटोद्भवं वा ॥
समधुकमथ माषमुद्गपर्ण्यो-
रमृतलतामलकत्रिकंटकं वा ॥ १३ ॥
इति कथितमिदं हि पुष्पिताग्रा-
चरणचतुष्टयवेष्टनेन शिष्टैः ॥
अभिमतमसकृद्व्यवायभाजा-
मिह खलु योगचतुष्कमाविकल्प्य ॥ १४ ॥
पिबति यः पयसा कृतशोधन-
स्त्रिकंटकं मधुकं वड्डपुत्रिकाम् ॥
अतिबलामथ नागबलां बला-
मिह हि नागबलः स पुमान्भवेत् ॥ १५ ॥

इति चिकित्सातः ॥

कुष्ठं कट्फलसैंधवं त्रिकटुकं मेथीयवानीद्वयं
वासा मोचरसं विदारिमुशली जातीफलं चित्रकम् ॥
जीरं चापरजीरकं गजकणा द्राक्षाभया वानरी
तालीसं त्रिसुगंधिकं त्रिलवणं वैभीतकं शृंगिका ॥ १६ ॥
रंभा कंदशतावरीद्वयसटीयष्टीप्रियालामृता
जातीपत्रलवंगकेसरजलं गोक्षुरकं शाल्मली ॥
धात्रीमाषपुनर्नवाश्च कनकं शृंगाटकं मस्तकी

१ गंजानाम। २ लाजाहुली। ३ आकाशकन्द।

मांसी चापि वलात्रयं च नलदं भार्गीभकर्णस्तिलाः १७
कंकोलं करहाटकं च विजया श्रीरुग्गंधा कुहू-
र्मज्जोपद्मजवीजभेदमखिलं चूर्णीकृतं स्निग्धकम् ॥
एतत्कर्षमितं पृथक् पृथगथो तुर्यांशतुल्यां जयां
तस्यार्द्धांशमितं मृताभ्रकमहिर्वंगं तदर्धं क्षिपेत् ॥ १८ ॥
लोहं मारितमेतदर्धममलं सूतं तदर्धं मृतं
सर्वेभ्यो द्विगुणा सिताथ मधुना चाज्येन संमिश्रयेत् ॥
कार्यास्तस्य पलप्रमाणवटिकाः खादेद्यथाग्नि प्रगे
नक्तं चेति जराविपत्तिशमनीमेकां च दुग्धं पिवेत् ॥१९॥
एषा सौगतसिंहनामभिषजा लोके प्रकाशीकृता
हम्मीराय महीभुजे शतवधूसंभोगभाजे भृशम् ॥
एषा वीर्यकरी महामयहरी क्षुद्बोधतेजस्करी
कांतिस्थौल्यमतिप्रकाशजननी चिंतामयध्वंसिनी २०॥
तारुण्योद्धतकामिनीजनमहादर्पद्विपानां महा-
सिंही सर्वमनोविनोदनकरी श्रीकामदेवाभिधा ॥ २१ ॥

इति कामदेववटी ॥

कर्पूरागुरुचोचवोलनलिकालाक्षासटीधातकी-
पुष्पैः सप्तदलैलवालुसुरसाशैलेयमांसीप्लवैः ॥
एलाकुंकुमरोचनादमनकश्रीवासजातीफलैः
कंकोलक्रमुकाजटामदमुराकौंतीलवंगामयैः ॥ २२ ॥
बालोशीरमृणालजातिकुसुमस्थौणेयचंडानलै-
र्जातीपत्रकुलीरपद्मकयुतैः स्पृक्कान्वितैः पालिकैः ॥
लाक्षायोजनवल्लिलोध्रसलिलैस्तैलं विपाच्यार्ककं
तेनाभ्यज्य तनुं जरन्नपि भवेत्स्त्रीणां परं वल्लभः ॥२३॥

१ वरमज्जा। २ बीजागोठ। ३ रेणुक।

शुक्राढ्यो द्युतिमानल्पतनयः पंढोपि रत्युत्सुको
वंध्या गर्भवती भवेदपि तथा वृद्धापि सूते सुतम् ॥
कंडूस्वेदविचर्चिकामलहरं दौर्गंध्यकुष्ठापहं
दस्राभ्यां परिकीर्तितं बहुगुणं तैलं सुगंधाभिधम् ॥२४॥

इति महासुगंधितैलम् ॥

पलं गोक्षुरबीजस्य द्विपलं कपिकच्छुकम् ॥
पलं नागबलाबीजं पलमेकं शतावरी ॥ २५ ॥
विदारीकंदचूर्णस्य पलद्वयमथापरम् ॥
द्विपलं त्रपुसीबीजं वाजिगंधापलत्रयम् ॥ २६ ॥
बाला च तालमूली च गुडूची रक्तचन्दनम् ॥
त्रिसुगंधकणाधात्रीलवंगं नागकेसरम् ॥ २७ ॥
एतानि कर्षमात्राणि सूक्ष्मचूर्णानि कारयेत् ॥
बालशाल्मलिमूलं च भावयेदेकविंशतिः ॥ २८ ॥
कशाकाशशिफासमशर्करासमयोजितम् ॥
दुष्टं शुक्रं वीर्यहानिं मूत्ररुच्छ्राणि यानि च ॥ २९ ॥
मूत्राघातं मूत्रदोषं जयेच्छुक्रविवर्धनम् ॥
शतं गच्छति च स्त्रीणां हयतुल्यपराक्रमः ॥ ३० ॥
वंध्या पुत्रमवाप्नोति भुक्त्वा चूर्णमिदं क्रमात् ॥
कामदेवाभिधं चूर्णं धन्वंतरिनिरूपितम् ॥ ३१ ॥

इति कामदेवचूर्णम् ॥

अश्वगंधाप्रस्थमेकमजाक्षीरे चतुर्गुणे ॥
घृतस्य प्रस्थमादाय खंडप्रस्थत्रयं तथा ॥ ३२ ॥
प्रस्थार्धाश्वतिलान्माषान्पाचयेन्मृदुवह्निना ॥
व्योषत्रिजातहपुषाशताह्वाशतमूलिका ॥ ३३ ॥
दीप्यपौष्करकौ जाती सटी गोक्षुरकंजला ॥

यवानी ग्रंथिकं लोहं नागं शुल्वं पलंपलम् ॥ ३४ ॥
दत्वा सिद्धेऽत्र विधिवत्प्रातः खादेद्यथाबलम् ॥
सर्ववातामयान्हंति कटिपृष्ठिगुदास्थितान् ॥३५॥
अस्थिभंगं तथा शोफं संधिवातं सुदारुणम् ॥
व्रणहृद्रोगगुल्मार्शःश्वासकासप्रमेहनुत् ॥
अश्विभ्यां विहितो योगो वाजीकरणमुत्तमम् ॥३६॥
इत्यश्वगंधापाकः वृंदात् ॥
चत्वारो व्योमभागास्तदनु निगदितं भागयुग्मं च वंगं
भागैकं शंभुबीजं त्रितयमपि मृतं तत्समा सिद्धमूली ॥
चातुर्जातं लजातीफलमरिचकणानागरं देवपुष्पं
जातीपत्रं च भागद्वितयमथ पृथक्सर्वमेकत्र चूर्ण्यम् ३७
सर्वांशा सिता स्याद्घनमधुसहितामोदकीकृत्य चैतत
खादेदग्निं समीक्ष्य प्रसभमभिनयानंदसंवर्द्धनाय ॥
योगो वाजीकराख्योऽयमिह निगदितो भैरवानंदनाम्ना
निःशेषव्याधिहंता दलितवहुवधूदामकंदर्पदर्पः॥ ३८ ॥
इति मदनमंजरीवटिका ॥
...............लागुसाग्रहापटवासकः ॥
प्रत्येकं कुडवं त्वेतदश्वगंधापलाष्टकम् ॥ ३९ ॥
क्षीरपंचाढके पक्त्वा घृतप्रस्थेन पाचयेत् ॥
आत्मगुप्ताप्रस्थमेकमश्वगंधासशीलकम् ॥ ४० ॥
सुशीते शर्कराप्रस्थत्रयमात्रं विनिक्षिपेत् ॥
चातुर्जातं त्रिकटु च जातीपत्रीकुबेरकम् ॥ ४१॥
जातीफलं लवंगं त्वक्तगरं मुशली मिशिः ॥
आकल्पधान्याजीराब्धिनिम्बमांशीपलत्रयम् ॥ ४२ ॥
हपुषापुष्करं दीप्यं प्रत्येकं चूर्णितं पलम् ॥

तुगालोहाभ्रवंगेभ्यः प्रत्येकं द्विपलं क्षिपेत् ॥ ४३ ॥
पलं पारदताम्रं तु अहिफेनपलं तथा ॥
विजयाष्टपलं शुद्धं मुक्ता चार्द्धपलं भवेत् ॥ ४४ ॥
विंशान् मेहान्श्वासकासं पांडुहर्षबलक्षयम् ॥
वातव्याधिमुरस्तंभं हिक्काशोफकटिग्रहम् ॥
शूलहृद्रोगमंदाग्निक्षयपीनसनाशनः ॥ ४५ ॥

इति कपिकच्छुपाकः

कूष्मांडस्य तुलां विधाय विधिवत्स्विन्नां प्रविष्टां पुन
र्युक्तां कर्षमितैः सुचूर्णिततमैर्व्योपाम्लजीराग्निभिः ।
चातुर्जातवराबलात्रयवरीतालीसमेथीत्रिवृ-
द्दंतीवारणपिप्पलीक्षुरतिलाद्राक्षात्रिकंटांबुदैः ॥ ४६
चव्याश्वाभयचारवानरिसटीयष्टीतुगापिप्पली-
मूलाद्यैः सलवंगशाल्मलिजयाकंकोलजातीफलैः ॥
जातीकोशविदारिसिंधुमुशलीशृंगाटकैः सर्पिषः
प्रस्थेनाभ्रपलेन वापि सितया सार्द्धं तुलामानया ४७।
युक्त्या साधु विपाच्य भाजनगतं कृत्वा यथाग्नि प्रगे
कूष्मांडस्य रसायनं सुललितं शुद्धो नरः शीलयेत् ॥
वृष्यं बृंहणमग्निदीपनकरं यक्ष्माक्षुपित्तापहं
पांडुश्वासजितं च पित्तशमनं मेहादिरोगप्रणुत् ॥ ४८ ॥
एतेनातिवली वलीविरहितः स्त्रीणां युवेव व्रजे
वृद्धाद्वृद्धतरो नरोतिललितः प्रज्ञासभापूजितः ॥ ४९ ॥

इति कुष्मांडपाकः ॥

प्रस्थं गोक्षुरसूक्ष्मचूर्णमुदितं दुग्धाढके पाचितं
गायत्रीसलवंगलोहमरिचं कर्पूरमन्दारकम् ॥

१ शतावरु ।

अब्धेः शोषमजाजियुग्मरजनीधात्रीकणाकेसरं
जातीकोशफले सदीप्यनलदं शुंठी कुवेराक्षकम् ॥ ५०॥
तुल्यं शर्करया तदर्द्धविजया प्रस्थार्द्धकं गोघृतं
वैद्यवरेण निर्मितमिदं प्रौढांगनादर्पनुत् ।
वीर्यस्तंभकरं च पुष्टिजनकं वाजीकरं कामिनां
भुक्तो गोक्षुरपाक एष हरिणीनेत्राविलासास्पदम् ॥ ५१

इति गोक्षुरपाकः ॥

अथ वीर्यस्तंभनम् ॥

कुलत्थबीजानि विचूर्णितानि
तनूनपात्पत्रबधूपयोभिः ॥
छायासु सप्तक्षु निशो विभाव्य
तैलं ततः पुष्करतो गृहीत्वा ॥ ५२ ॥

तेन मर्दितमिदं शिवबीजं गुंजया परिमितं परितोल्य ॥
भक्षितं पलितनाशनं भवेद्वीर्यरोधकरमेव सत्यता ५३॥
सहिफेनविमर्दितपारदे कनकबीजरसेन विमर्दिते ॥
समसिताविजये यदि भक्षिते न रजनी न दिवा न दिवाकरः

जातीफलार्ककरहाटलवंगशुंठी-
कंकोलकेसरकणाहरिचंदनं च ॥
एतत्समानमहिफेनमचंद्रमभ्रं
सर्वैःसमं न सहते रतिर्बिंदुपातम् ॥५५॥
सर्वैः समांशा खलु शर्करा तु
देया भिषग्भिरखिलार्थविद्भिः ॥
घृतेन साकं मधुना च सार्द्धं ॥
कृत्वा वटीं टंकमितां च दद्यात् ॥ ५६ ॥

१. प्रातःसेवितनीरपं सुविधिना व्याध्यौघविध्वंसनं इत्यपि पाठः । २. केम ।

लोहं ताम्राभ्रसूतं सुरकुसुमजलं चंद्रसंजातिपत्रं
पत्रं जाती फलैलासमरिचकरहाटाजमोदाहिफेनम् ॥
सामुद्रौ सिंधुशोषावपि घृतमधुनी मर्दयित्वास्य टंकं
खादेदन्नेतिजीर्णे नियतमिहरतो स्तंभनं रेतसः स्यात्॥
खसफलशुंठीकाथः षोडशशेषेण गुडेन निशि पीतः ॥
कुरुते रते न पुंसो रेतःपतनं विनाम्लेन ॥ ५८॥
चटकांडं तु संगृह्य नवनीतेन पेषयेत् ॥
तेन प्रलिप्तपादस्य शुक्रस्तंभः प्रजायते ॥
यावन्न स्पृशते भूमिं तावत्स्यान्नात्र संशयः ॥ ५९ ॥
खसतिलपलमेकं शुंठीकर्षं सितापलद्वंद्वम् ॥
एतच्चूर्णं पयसा पीतं रेतोरयं ध्रुवंधत्ते ॥ ६०॥
पारदगंधकचंपककेशरसुरकुसुमकरहाटाः ॥
अजमोदांबुधिशोषौ जातीपत्रं च जातिफलम् ॥ ६१ ॥
प्रत्येकं भागैकं भागद्वितयं च शुद्धमहिफेनम् ॥
तेनबदरसदृशगुटिकाः कार्या मधुनाथ भक्षयेदेकाम्॥६२
यामेतीते ललनां सविधे स्थित्वा जवानिकाकर्षं ॥
तैलाढ्यं भुंजीयादनुपानं चैतदेतस्य ॥ ६३ ॥
लिंगं कठिनतरं स्याद्वीर्यं संस्तंभयेद्यामम् ॥
एषा सौगतगुटिका सत्यं सत्यं च शुक्ररोधकरी ॥ ६४ ॥

इति सौगतगुटिका ॥

कर्पूरं टंकणं सूतं तुल्यं मुनिरसं मधु ॥
संमर्द्य लेपमेल्लिंगे स्थित्वा यामं तथैव च ॥ ६५ ॥
ततः प्रक्षाल्य रमयेद्वनितानां शतं सुखम् ॥

---

१ लवंग । २खस । ३ कपूर । ४ निर्गुडीभ्रद्रा । ५ गंधा ।

वीर्यस्तंभकरं पुंसां सम्यङ्नागार्जुनोदितम् ॥ ६६ ॥

इति चक्रदत्तात् ॥

अहिफेनं दुग्धशुद्धं रक्तिकात्रितयोन्मितम् ॥
विंदुवेगं ध्रुवं धत्ते सितया निशि भक्षितम् ॥ ६७ ॥
जातीफलं टंकमितमहिफेनं च टंककम् ॥
अजमोदा चैकटंका चंद्रसं चैकटंककम् ॥ ६८ ॥
सितोपला त्रिटंका स्यात्पंचटंको गुडो मतः ॥
बुद्ध्या संमेल्य वटिकाः कार्या द्वादश तुल्यशः ॥ ६९ ॥
तत्रैकां भक्षयेद्धीमान् शुक्रं स्तंभयति ध्रुवम् ॥
टंकं पतंगचूर्णस्य जातीपत्रस्य टंककम् ॥ ७० ॥
अहिफेनस्य टंकं हि दरदं टंकयुग्मकम् ॥
अर्द्धं वाप्यथ वा सर्वं चूर्णं खादेद्यथाबलम् ॥ ७१ ॥
पिबेदनु पयः स्वल्पं वीर्यस्तंभं करोति हि ॥
महायोगोऽयमुदितः शुक्रस्तंभकरः परः ॥ ७२ ॥

इति महायोगः ॥

करवीरजटालेपं यः करोति नरो मणौ ॥
वीर्यस्तंभं स लभते कार्णाटीसुरतेष्वपि ॥ ७३ ॥
सूतो माषमितः स्वदोषरहितस्तच्चूर्णभागो बलि-
स्तन्मानस्तु भुजंगफेन उदितः क्षुद्राफलस्यांबुना ॥
एतद्गोलकमाकलय्य विपचेत्क्षुद्राफले हेमगे ॥
लावैरष्टमितैर्भवेदिति रसः श्रीकामदेवाभिधः ॥ ७४ ॥
मात्रा सूर्योदये गुंजामेकं यामचतुष्टये ॥
गुंजाचतुष्टयं देयं नागवल्लीदलान्वितम् ॥
दुग्धौदनमलवणं रात्रौ क्षीरं यथेच्छया ॥ ७५ ॥

नागाहिफेनफलिनीविषमुष्टिदिग्धे
वस्त्रे निबध्य रसगंधकखर्पराणि ॥
गौर्यां पचेत्तदनु लावपुटैः शतेन
सौवर्णबीजजठरे विनियोजितानि ॥ ७६ ॥
निष्पेषयेद्दशदशांतरतश्च तेषां
तोयैरपूपमुपकल्प्य विशुष्कमर्कैः ॥
तत्कर्दमैः प्रतिपुटं प्रविधाय दिग्ध-
मेवं पुटे दधिशतं रसराज एषः ॥ ७७ ॥
रेतःस्तंभं विधत्ते वपुषि च घनतामग्निमांद्यं निहन्या-
द्यक्ष्माणं च क्षणेन क्षपयति सहसा पौरुषं व्यातनोति॥
उच्चैःशूलप्रमेहानिलकफगदहृद्रोगपांडुप्रतिश्या-
कासश्वासोदराक्षिश्रवणमुखगदानाशु खादत्यवश्यम् ॥
इति रसराजविधिः ॥ पाठांतरेण स एव लिख्यते ॥
पलंमृदुस्वर्णदलं रसेंद्रः पलाष्टकं षोडशगन्धकस्य ॥
शोणैः सुकर्पासभवप्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः॥
तत्काचकुंभे निहितं सुगाढे मृत्कर्पटैस्तद्दिवसत्रयं च ॥
पचेत्क्रमाग्नौ सिकताख्ययंत्रे ततो रजः पल्लवरागरम्यं ॥
निगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव ॥
जातीफलं सोषणमिंद्रपुष्पंकस्तूरिकाया इहशाणएकः॥
चंद्रोदयोयं कथितोस्य माषो
भुक्तो हि वल्लीदलमध्यवर्ती ॥
मदोन्मदानां प्रमदाशतानां ॥
गर्वाधिकत्वं श्लथयत्यकाडे ॥ ८२ ॥
शृतं घनीभूतमजीवदुग्धं

१ कृत । २ गंधके ।

मृदूनि मांसानि समंडकानि ॥
माषान्नपिष्टानि भवन्ति पथ्या-
न्यानंददायीन्यपराणि चात्र ॥ ८३ ॥
वलीपलितनाशनस्तनुभृतां वयःस्तंभनः
समस्तगदखंडनः प्रचुरयोगपञ्चाननः ॥
गृहेषु रसराडयं भवति यस्य चंद्रोदयः
स पंचशरदर्पितो मृगदृशां भवेद्वल्लभः ॥ ८४ ॥

इति चंद्रोदयो रसः रसरत्नप्रदीपात् रसमंजर्या-
मस्यमकरध्वज इति नाम ॥
नागाहिफेनफलिनीविषमुष्टिविलेपिते ॥
वस्त्रे निबध्य विधिवद्रसगंधकखर्परी ॥ ८५॥
गौर्यां पचेल्लावपुटैः शतेन विनियोजयेत् ॥
ऊर्ध्वाधो हेमबीजानि पेषयेद्दशतः क्रमात् ॥ ८६ ॥
तेषां तोयैः पुनः कृत्वा पूपिकामर्कशोषिताम् ॥
तत्कर्दमैः प्रतिपुटं दिग्धां कृत्वा पुटेच्छतम् ॥ ८७॥
रसराजो भवत्येष सर्वरोगहरो रसः ॥
जंत्रुवर्णोतिकठिनो रूक्षो जीर्णवलिर्भवेत् ॥ ८८ ॥
जातीफललवंगाभ्यां रतौ वीर्यं निरोधयेत् ॥
पटुर्दाप्यशिवाविश्वैर्वैश्वानरविवर्द्धनः ॥ ८९ ॥
क्षयग्रस्तु रयाशोंग्रस्तकृष्णाभयान्वितः ॥
गृहिण्यां जातिकोशेन रेके कुटजवारिणा ॥ ९० ॥
प्रमेहे शाल्मलीद्रावैर्वर्दर्याक्षिगदे हितः ॥
सामे वापि निरामे वा समे वा विषमे ज्वरे ॥ ९१ ॥
देयो नताब्दकटुकावारिविश्वशृतेन वै ॥
रास्नांभसा वातरोगे पित्तरोगे सिता त्रुटिः ॥ ९२ ॥

अक्षत्वचाकफव्याधौ पांडुरोगेऽजमूत्रकैः ॥
अश्मर्य्यामश्मभेदेन कुष्ठे वल्गुजवायसैः ॥ ९३॥
भगंदरे गुडेनैव व्रणे पुरुवरायुतः ॥
मेदो रोगेंचुमधुनाप्रदरेऽशोकवारिभिः ॥ ९४ ॥
शूले हिंगकुरंजाभ्यामरुचौ रुचकेन च॥
छर्द्यां धात्रीरसेनैव क्षैण्ये पर्णेन दापयेत् ॥ ९५ ॥
द्राक्षारसेन शोपे च संज्ञानाशे किरातकैः ॥
मूर्च्छायां चंदनांभोभिर्विद्रधौ वरणांवुना ॥
सर्वेष्वन्येषु रोगेषु तांवुलीपर्णयोगतः ॥ ९६ ॥

इत्यपरो रसराजः ॥

क्काथं पिवेद्वा खसवल्कलानां सर्पिर्जवानीगुडमिश्रितं य
लभेत दार्ढ्यं सुरतेषु भूयो भवेद्विरंसुः केलविवत्सः ९७
सकर्पूरोरसः क्षौद्रजातीरसविमर्दितः ॥
लिंगलेपात्करोत्येप द्रावणंहरिणीदृशाम् ॥९८॥
लिंगनाडीषु कर्पूरं पालपित्वा विमर्दयेत्॥
महिषीनवनीतेन तन्द्रवेरखरलिंगवत् ॥ ९९ ॥
श्वेताश्वमारमूलत्वक्करहाटाजमोदकम् ॥
कृष्णधनूरवीजानि सम्यग् जातीफलं तथा ॥
एतेषां पारिपिष्टानां गुटिकामरिचोन्मिता ॥ १०० ॥
एकया मणिलेपो हि नरमूत्रनिघृष्टया ॥
वीर्यं संस्तंभयत्येव सत्यमेतन्न संशयः ॥ १०१ ॥

इति लेपवटी ॥

किरिनंव्यपवसापूर्णे कूर्मखर्परके धिया ॥

---

१ पमार । २ गुगर । ३ पिपनुत्यपन् । ४ स्वेतकनेर्ऊजर ।
५ भकरकरा । ६ तोनाकोषमा । ७ दप्फपमस्तके ।

रक्तकार्पासिकावर्त्यादीपः शुक्रनिरोधकः १०२ ॥

अथ ध्वजवृद्धिकरणम्

भल्लातकास्थिजलशूकमथाब्जपत्र-
मंतैर्विदह्य मतिमान्सह सैंधवेन ॥
एतद्विरूढबृहतीफलतोयपिष्ट-
मालपयेन्महिषविड्मिलीकृतेंगे ॥ १०३ ॥
स्थूलं महत्खरतुरंगमतुल्यमाशु
शेफं करोत्यभिमतं न हि संशयोस्ति ॥ १०४ ॥

इति स्थूलीकरणम् ॥

कासीसतुरगगंधासारिवागजपिप्पलीविपकेन ॥
तैलेन यांति वृद्धिं स्तनकर्णवरांगलिंगानि ॥ १०५ ॥

शैवाल सैधसरोरुहिणीदलानि ॥
भल्लातकानि च फलानि च कंटकार्याः ॥
हैयंगवीनमपि माहिषमश्वगंधा-
कंदः सुधीः प्रणिदधीत दिनानि सप्त ॥ १०६ ॥
तैरुद्धतैस्तदनु यन्महिषीमलेन
चोद्वर्त्य लिंगमुपलेप्य तमादरेण ॥
तस्याग्रतः खरतुरंगमतंगजानां
लिंगानि लाघवपदं परमं प्रयांति ॥ १०७ ॥

अथवा ॥

उन्मत्तकस्वरसपोषितवाजिगंधा-
कंदोपगूढमहिषीनवनीतमादौ ॥
धार्यं फले वृषभवाहनवल्लभस्य-

१ नर्मावन । २ यावशूक । ३ हडिकायां । ४ पुरातीन । ५ कार्ई । ६ गादडे । ७ धत्तूरफले ।

निःशेषबीजरहिते कतिचिद्दिनानि ॥ १०८ ॥
उद्वर्तितं तदनु यन्महिषीपुरीषै-
र्धत्तूरकांबुनवनीतविलेपितं च ॥
तत्साधनं निधुवनप्रणयोद्धतानां
नारीवरांगदलनक्षमतां दधाति ॥ १०९ ॥
इति ध्वजवृद्धिकरणम् ॥
क्षौद्रं क्षुद्रातगरमरिचैः पिप्पलीसैंधवाभ्यां
प्रत्यक्पुष्पीयवतिलगुडश्वेतसिद्धार्थमाषैः ॥
श्लक्ष्णीभूतैर्भवति मिलितं वाजिगंधासनाथैः
श्रोणीश्रोत्रस्तनयुगशिरःशेफसंवृद्धिकारि ॥ ११० ॥
इति राजमार्तंडात् ॥
उत्पलानि सपद्मानि क्षीरेणाज्येन पेषयेत् ॥
गुटिकां सुकृशां कृत्वा नारीयोनौ प्रवेशयेत् ॥
दशवारप्रसूतापि पुनर्भवति कन्यका ॥ १११ ॥
भंगापोटलिका दत्ता प्रहरं काममंदिरे ॥
नितंबिन्याः करोत्येषा कुमारीभगवद्भगम् ॥ ११२॥
जातीफलमहिफेनं दार्वी चेति त्रिभिः समा भंगा ॥
परटीछत्रसमासौ गुटिकासंकोचनी योनेः ॥ ११३ ॥
इति योनिसंकोचनम् ॥
शुक्तिशंबूकशंखानां दीर्घवृंतारसमुष्किकात् ॥
दग्ध्वा क्षारं समादाय खरमूत्रेण गालयेत् ॥ ११४ ॥
क्षाराष्टभागं विपचेत्तैलं सार्षपकं बुधः ॥
इदमंतःपुरे देयं तैलमात्रेयभाषितम् ॥ ११५ ॥
बिंदुरेकः पतेद्यत्र तत्र रोमाभवः पुनः ॥
व्रणार्शःकुष्ठपामासुदद्रुकंडूहरं मतम् ॥ ११६ ॥

इति श्रीयोगतरंगिण्यां वाजीकरणचिकित्साशुक्रस्तंभ-
योनिसंकोचनाधिकारो नामाशीतितमस्तरंगः ॥

एकाशीतितमस्तरंगः।

मल्लीवल्लीसमूहे समुदितकुसुमामोदमत्तालिमाला-
मूर्छज्झंकारनादाकुलवकुलकुलव्याकुलप्रोषितासु ॥
माकंदास्वादमाद्यन्मधुरपिककुलालापहृष्यन्मनोज्ञः
प्राप्तः कांतो वसंतस्त्रिभुवनविजयीप्राणबंधुः स्मरस्य १॥
क्षौद्रेणार्द्रं विधाय प्रकृतमभयजं चूर्णमभ्यर्णसिद्ध्यै
प्राश्नीयादुष्णरश्मिप्रतपनसहनः पंचकर्मैककर्मा ॥
कुर्यादापैः शिवाय भ्रमणमनुदिनं तोयपानं तटिन्याः
शाल्यन्नं सिद्धमुद्गं कफमलहरणं पथ्यमेतद्वसंते ॥ २ ॥
ग्रीष्मे गृह्णन्मयूखैरखिलरसमयं चंडधामातिकामा-
न्नित्यंदाहोपशांत्यै प्रभवति च विधुः खिन्नजन्मासुजन्मा
दंपत्योश्चंदनाद्यैरुपाचितवपुषोः शीतकल्पे सुतल्पे
कर्पूरांभःसुसिक्तव्यजनपरिचयाद्वायुरायुःस्वरूपः ॥ ३ ॥
ग्रीष्मे तुल्यगुडां सुसैंधवयुतां मेघावनद्धेंऽवरे
तुल्यां शर्करया शरद्यमलया शुंठ्या तुषारागमे ॥
पिप्पल्या शिशिरे वसंतसमये क्षौद्रेण संयोजितां
राजन्प्राप्य हरीतकीमिव रुजो नश्यंतु ते व्याधयः॥४॥

इति षड्ऋतुहरीतकी ॥

ज्येष्ठे श्रेष्ठं गुडाम्लं मसृणमभयजं चूर्णमभ्यर्णसिद्ध्यै
संसिक्तं शीततोयैर्गृहमर्माधशयनं स्वादुशीतांबुपानम् ॥
न व्यायामो न रौक्ष्यं प्रतपनसहनं नैव पथ्यं कटूष्णं
न क्षारो नारनालो न दिननिधुवनं स्वप्नभावः प्रशस्तः॥

१ पपेया। २ सिताढ्यमित्यपिपाठः।

गर्जद्भीमांबुवाहः क्षणरुचिरुचिरालोकचंचद्दिगंतः
कामं कूजत्कलापी निशि तरुशिखरद्योतिखद्योतपोतः॥
धारासंपातजातश्रवणसुखलसद्भेकभेरीनिनादः
प्रावृट्कालागमोऽयं कुसुमशरसुहृद्भृंगसंगीतसंगी ॥ ६॥
पेयं कूपजलं सुसैंधवयुता भक्ष्याभया प्रावृषि
स्थेयं सौधतले सुखोष्णसलिलैः स्नानं मुहुर्मर्दनम् ॥
स्नेहैर्नातिविधीयते निधुवनं भोज्यं च योज्यं जनैः
साज्यं सामिषमाषमीनमुचितं साम्लं सदध्यादिकम्॥८॥
संशुष्यत्पंकसंधा रविकिरणरुचा फुल्लराजीवराजी
राजत्कल्हारवल्लीकुसुमचयमिलद्वासनावासिताशा ॥
दुग्धांभोधेस्तरंगद्युतिरिव विलसत्काशपुष्पप्रकाशा
चंचच्चंद्रांशुशोभा सकलजनमुदे शारदीरीतिरास्ताम् ॥
खादेच्चूर्णं शिवायाः शरदि समसितं रेचनं रक्तमुक्ति-
स्तोयं पेयं विशुद्धं रविशशिकिरणैरुत्तमं वा सरोंबु ॥९॥
शाल्यन्नं सिद्धमुद्गं सघृतमनुपयः पानकं शर्कराढ्यं
पथ्यं तिक्तं कषायं रतिरतिरहितासायमिंदुर्हिताय ॥
आलिंग्यालिंग्य गाढं सुखशयनगतान्वल्लभान्भावयंत्य
सोत्कंठं कंठदेशे पुनरपि सुरते शक्तिमुद्भावयंति ॥१०॥
हेमंते शीतभीतिव्यथिततनुरिति व्याजमुत्पाद्य सद्यः
प्रारब्धाकालवृष्टिध्वनितिमिरयद्वातविद्युत्पयोदे ॥
पथ्यायाः सूक्ष्मचूर्णं समगुणतुलितं नागरेणात्र भक्ष्यं
शाल्यन्नं भुक्तमुष्णं बहुविधरचितं माषमम्लार्द्रयोगैः ११
सर्पिर्मांसं समीनं दधिलवणयुतं दुग्धमुष्णं च पथ्यं
वातश्लेष्मानुसारे हिमवति सततं सेवयेदग्निभानु ॥
मंदंमंदं दिनांते ज्वलति हुतवहे पृष्ठतो वाग्रतो वा

धन्योलोकस्तरुण्याःस्तनजघनपरीरंभसंभोगसंगी १२॥
उच्चैस्तूलीविधानं सुललितशयनं क्वापि तैलं सुगंधं
तांबूलं तप्ततोयं भजति सुखवहं वासरे शैशिरेस्मिन् ॥
हेमंते यद्यदुक्तं हितमिह भिषजा वासरे शैशिरेऽस्मिं-
स्तत्तत्सर्वंहितायप्रभवतिकरणात्प्राणिनां प्राणभूतम् १३
किंचाप्यत्रयस्तत्तूलीशयनमभिनवाप्राणरामाभिरामा
श्रेयस्याःश्लक्ष्णचूर्णं सुचिरमगधजायुक्तमुक्तानुपानम् १४

इति षड्ऋतुचिकित्सा सारसंग्रहात् ॥

कर्कशः कश्मलः स्तब्धः कुग्रामी स्वयमागतः ॥
पंच वैद्या न पूज्यंते धन्वंतरिसमा यदि ॥ १५ ॥
आतुरस्य पिता वैद्यः स्वस्थीभूतस्य बांधवः ॥
अतिस्वस्थतरे जाते न पिता न च बांधवः ॥ १६ ॥
सद्वैद्यास्ते न येऽसाध्यानारभंते चिकित्सितुम् ॥
कुवैद्ये जीविनां सिद्धिः स्याद्घुणाक्षरवत्क्वचित् ॥ १७ ॥
आयुर्हिताहितं व्याधिर्निदानं शमनं तथा ॥
विद्यते यत्र धीमद्भिः स आयुर्वेद उच्यते ॥ १८ ॥
ब्रह्मदक्षाश्विरुद्रेंद्रभूचंद्रार्कानिलानलाः ॥
ऋषयः सौषधिग्रामा भूतसंघास्तु पांतु नः ॥ १९ ॥
स्वार्थं चापि परार्थमादरतया दृष्ट्वा चतुःपंचपान्
ग्रंथान्वैद्यकृतान्प्रसिद्धपथगान्भट्टेस्त्रिमल्लाभिधैः ॥
एषा योगतरंगिणीसमभिधा साध्वी कृता संहिता
संक्षिप्ता सरसा सुखेन सुचिरं जीयादनेकाः समाः २०॥

इति श्रीयोगतरंगिण्यां त्रिमल्लभट्टग्रथितायां वैद्यप्रशं
साग्रंथांतमंगलं नाम एकाशीतितमस्तरंगः ॥

---

# विक्रयार्थ पुस्तक

## भक्तिमाला आथवा हरिभक्तिप्रकाशिका

यह ग्रंथ वार्तिक सबलोगोंकी समझमें आसकै ऐसी हिन्दुस्थानीभाषामें हमारे यहां छापके तयार है इस्में २४ निष्ठा और अनेकभक्तौंकी कथा विस्तारपूर्वक वर्णनकरी है भगवतनामकीमहिमा गुरुमहिमा भक्तीकी महिमा भक्तीकास्वरूप भगवतभक्तौंकी महिमा भक्तिमाल बनानेकाकारण भक्तिमालकीमहिमा रसभेद भगवद्भजनविमुखपुरुषोंका आख्यान मुक्तीके स्वरूप का आख्यान निर्गुणसगुणकावर्णन मुख्यचारसंप्रदायों के अंतर और इच्छानुसार परिणाम उनके एकहोनेका वृत्तांत स्मार्तोंकि मार्गका वृत्तांत भगवतके अवतार लेना और इच्छानुसार चरित्र करनेका कारण कुसंगसे हानि और संतसंगसे लाभकावर्णन बहोतसी निष्ठा होनेकाकारण निम्बार्क माध्व श्रीरामानुजीय विष्णुस्वामिआदि सब संप्रदायोंका विस्तार पूर्वक वर्णन मूलवृक्ष तिलकमुद्रा आदिवर्णन कियागयाहै इसलिये हरिभक्तजनोको अवश्य रखने लायकहै इसलिये जिन महाशयोंकौ आपेक्षितहो हमैं जलदीलिखै क्योंकि बहोत पुस्तकै बिक गई है और बराबर बिकतीचली जाती है मू० ४रु० डाकम० १० आणा

भाषान्यायप्रकाश श्रीमत् चिद्घनानंद स्वामि कृत

पूर्वमें जो आत्मपुराणभाषा श्रीमद्भगवद्गीता गूढा-

र्थदीपिका सह टीका विचारसागर वृत्तिप्रभाकर आदि ग्रंथ महात्मा लोगोने किये है तिन ग्रंथोंके वहोत स्थलोमें भेदवादी नैयायकोंका मत लिखाहै कहीं खंडन करनेके लिये कहीं दृष्टांत रूपकरिकै परंतु तिनवेदांत ग्रंथोविषे नैयायकोंके पदार्थ विस्तार पूर्वक लिखे नहीं और वहोत स्थलोमें तिन पदार्थों के नाममात्रही लिखे हैं इसलिये पठन करनेवालोंके समझमें आवे नहीं इसकारण वहोत्त लोगोंकीप्रार्थनासे श्रीस्वामीजीने यह ग्रंथ रचकर तयार किया और इस ग्रंथमें कणादिमुनिप्रणीत वैशेपिक शास्त्रके द्रव्यादिक सप्त पदार्थोंका तथा गौतम मुनिप्रणीत न्याय शास्त्रके प्रमाणादिक षोडश पदार्थोंका विस्तार पूर्वक निरूपण किया है. और प्रसंग पायके मीमांसा शास्त्रके मतका तथा वेदांतशास्त्रकेमतका तथा बौद्धोके मतका तथा चार्वाकोंके मतका तथा आर्हतजैनोंके मतका तथा अन्य भी वहोत मतों का निरूपण कियाहै तथा तिन मतों का यथा योग्य खण्डनभी किया है और इस ग्रंथ में द्रव्यादिक पदार्थों का लक्षण तथा अनुमान तथा वेद स्मृति आदि वाक्योंकों ( ) ऐसे कोष्टकांतर्गत यथावत लिखकर तिस्का भषामें विस्तार पूर्वक वर्णनाकियाहै इसलिये ये ग्रंथ भाषा वेदांत शास्त्र तथा न्यायशास्त्र पठन करनेवालों के लिये अतिउपयोगी है इस लिये २०००० ग्रंथकी प्रशंसा कहांतक लिखे! देखनेसे इच्छापूर्णहोगी मूल्य डांकव्ययसहित ८ रुपये

लोलिंवराज–इस ग्रंथको वैद्यजीवनभी कहते हैं संस्कृ-

त मूल संस्कृतटीका व भाषाटीका सहित वहोत उत्तम-कागद मोटेअक्षरमें छापके तयार है- और इस ग्रंथको भाषाटीका वनानेको वहुत परिश्रम व द्रव्यखर्च हुवा है इसलिये रजिष्टर किया है मूल्य १ रु० ६ आणे

रागरत्नाकर-यह ग्रंथ गानेवाले रसिकोंको अवश्य लेने योग्यहै. इसमे सव रागरागिणी लावनी, छंद, टप्पा, ठुमरी, रेखता, दोहा, खेमटाआदिक परमोत्तम संग्रह है इसका कागद और अक्षर परमोत्तमहै किंमत १॥ रु०

चर्याचन्द्रोदय-भाषा टीका सह ( अर्थात् स्वस्थर रक्षण ) ग्रहस्थीमात्रको लेने योग्य किं०ट० मासूल सह १। रु०

वृहन्निघंटुरत्नाकरका-सचित्र शारीर भाग किंमत टपाल मासूल सह २ रुपये ६ आणे

वृहन्निघंटुरत्नाकरके-द्वितीयवर्षाका पुस्तक इसमें क्षारपाक, अग्निकर्म, जलौका पचारण, शोणित वर्णन दोषधातु मलक्षय वृद्धि विज्ञान वर्णन, दोषवर्णनीयं, ऋतुचर्या, दिनचर्या, रात्रिचर्या, ओंका वर्णन परमोत्तमहै अर्थात् ऐसी ऋतुचर्या दिनचर्या और रात्रिचर्या अद्यावधि कहीं नहीं छपी फिर विशिखानुप्रवेशनीयाध्याय, दूतपरिक्षा, शकुनपरिक्षा, स्वप्नप्रकाशिका ( स्वप्नका शुभाशुभफल ) नाडीदर्पण(अर्थात् नाडीपरीक्षा ) और मूत्रपरिक्षा आदि उत्तमोत्तम वर्णित है. गत वर्षसें इसका कागद अक्षर छपाई सर्वोत्तम है. परंतु फिर भी सवकों सुगमताके हेतु किम्मत वही रक्खी है.अर्थात् डाक मासूल सह ३ रु० ६ आणे है. यह श्रावणके

महिनेतक तयार होगा इसमें रसोई बनानेकीभी वि-
धि सविस्तर वर्णित है.

# तुलसीदासकृत रामायण.

रामचरणरतिजोचहै, अथवापदनि
र्बान ॥ भावसहितसोयहकथा, क
रैश्रवणपुटपान ॥ १ ॥

उपर लिखे हुये बडे अक्षरमें तुलसीकृत "रामायण" गंगोत्पत्ति, सुलोचनासती, महिरावण, नरान्तक, विन्दमनि, आधि क्षेपक कथा ओं सहित शुद्ध करवायके द्वितीयावृत्ती छापके तयार है. किंमत ट० म० सहित ६ रुपये.

॥ दोहा ॥

तबऋषि नारदकंसयह, लियेहस्तत

लवीन ॥ गुणगावत गोविंदके, आवे परम प्रवीन ॥ १ ॥

ऊपर लिखे दोहेके अक्षरमें 'व्रजविलास' छपताहै अन्दाजसे २।३ महिनें में तयार होगा.

धर्मशास्त्रग्रंथाः

शूद्रकमलाकर–किं१। रु० डा० म० २ आणे क्षौरनिर्णय–किं० १॥ आ० डा० म० अर्धा आना क्षौरनिर्णय–सटीक किं० ४ आ० डा० म० अर्धा आना शांतिमयूख किं० १ रु० डा० म० २ आणे श्राद्धमयूख–किं १ रु० डा० म० २ आणे प्रपंचसारविवेक– किं० १ रु० डा० म० २ आणे

## कर्मकांडग्रंथाः

स्वस्तिवाचन–किं० १॥ आ० डा० म० अर्धा आना नारायणभट्टी किं १ रु० डा० म० २ आणे संस्कारभास्कर–किं० ३ रु० डा० म० ६ आणे पूजापंकजभास्कर– किं० २ रु. डा. म. ४ आणे आचारार्क–किं. १२ आ. डा. म. २ आणे आचारादर्श–किं. १० आ. डा. म. २ आणे दशकर्मपद्धति–किं. ८ आ. डा. म. १ आना वासिष्ठीहवनपद्धति–किं. ४ आ. डा. म. अर्धा आना. लंबोदरिहवनपद्धति–किं. ४ आणे डा. म. अर्धा आना श्राद्धविवेक– किं. १ रु. डा. म.२आणे व्रतोद्यापनकौमुदी– किं. १२ आणे. डा. म. २ आणे दानचंद्रिका– किं. १० आणे कुंडविंशति–कुंडकेवीसग्रंथहै किं. १ रु. डा. म. २आ. सर्वदेवप्रतिष्ठासंग्रह किं. ४ रु. प्रतिष्ठामयूख किं. ६ आणे शांतिसार–किं. १॥ रु. नवग्रहविधानपद्धति–किं. ५ आणे संध्या–किं. २ आणे तर्पण–किं. २ आणे नित्यकर्मपद्धति–

किं. ३ आणे नारायणबली–किं ६ आणे विवाहपद्धति–अत्युत्तम किं. ६ आणे कर्मकांडसमुच्चय–किं ४ आणे. कुष्मंडीभाष्य–किं. ४ आणे सर्वपूजा–किं॰ २ आणे शिवार्चनपद्धतिवेदोक्त–किं. ४ आणे रुद्रविधानपद्धतिः– किं ७ आणे. लक्ष्मीपूजन– किं. २ आणे.

## काव्यग्रन्थाः

गीतगोविंद– सटीक राधाविनोदसह किं. १ रुपये रघुववंशसटीक–किं. २ रुपये रघुवंशसटीक–वारीक किं. १ रुपया कुमारसंभव–किं. २ रुपये मनोदूतिकाव्य–किं. १॥ आना. किरातार्जुनीयकाव्य– किं. २॥ रुपये भोजप्रबंध किं. ८ आना. भर्तृहरीशतकत्रय–संस्कृतटीका औरभापाटीका किं. १। रुपया भर्तृहरिवैराग्यत्तकसंस्कृतटीका–किं. ८ आणे गीतगोविंदमूळ– किं. ४ आणे हितोपदेश–किं. ८ आणे. रामकृष्णविलोमकाव्य– किं. ५ आणे गंगालहरी सटीक–किं. ५ आणे गंगालहरीमूळ–किं॰ २ आणे ट॰म॰अर्धा आणा. दशकुमारचरित्र– कि॰ २ रु॰ ट॰ म॰ ४ आणे भामिनीविलास–कि॰ ४ आ॰ ट॰ म॰ अर्धा आना मेघदुतकाव्य–कि॰ ८ आ॰ ट॰ म॰ १ आणा विश्वगुणादर्श–कि॰ ८ आ॰ ट॰ म॰ १ आणा पद्यावली–अनेकमहानुभावोंके संग्रहीतश्लोक कि॰ ८ आ॰ ट॰ म॰ १ आणा अष्टांगहृदय सटीक[वाग्भट] कि॰२१रु॰ ट॰ म॰ १॥ रुपया वीरसिंहावलोकन–ज्योतिषशास्त्रादि कर्मविपाक चिकित्सा नविन टाइंपमे अतिउत्तम कि॰ १॥। रु॰ट॰ म॰ ४आना बालबोधपाठावली कि॰ २ आना ट॰ म॰

अर्धा आना योगचिंतामणीभाषाटीका कि १॥ रु० ट० म० ४ आना चिकित्साक्रमकल्पवल्ली कि० ३ रु० ट० म० ८ आणा कूटमुद्गराख्य सटीक कि० ३ आना ट० म० अर्धा आना अमृतसागर कि० २॥ रु० ट० म० ८ आना चिकित्साधातुसार भाषा ६ आना ट० म० १ आना रसराजसुंदर भाषाटीकासह ३ खंड मथुराका कि २॥ रु. ट. म. ४ आना माधवनिदान भाषाटीका मथुराका कि १॥ रु. ट. म. ६ आना वैद्यकल्पद्रुम भाषाटीका कि ९ आ. ट. म. माफ सप्तशती भट्टनागोजीकृतटीकासहित कि. १ रु. ट. म २ आना

## प्रकीर्ण ग्रंथाः

सप्तशती मोठे अक्षरकी टाईप खुली पंक्ति ६ कि १ रु. ट. म. २ आना सप्तशती ७ पंक्तिवाली वडा अक्षर खुलापत्रा कि. ॥। रु. ट, म. २ आना सप्तशती ७ पंक्तिकी बंधेली कि. १। रु. ट. म. २ आना सप्तशती ९ पंक्तिवाली मध्यम अक्षर टाईप खुला पत्रा कि. ॥ रु. ट. म. १ आना सप्तशती ९ पंक्ति वाली बंधेली रेशमी कि. ॥। रु. ट. म. २ आना सप्तशती छोटा गुटका खुला पत्रा टाईपका कि ॥ रु. ट. म. १ आना सप्तशती छोटा गुटका कि. ॥ रु. ट. म. १ आना स्तोत्ररत्नावली सांप्रदायी भाग १ ला कि. १। रु. ट. म. २ आना ,, भाग २ रा कि. १। रु. ट. म. २ आना ,, भाग ३ रा कि. १। रु. ट. म. २ आना प्रपन्नामृतरेशमीपुट्ठेका कि. ४ रु. ट. म. ८ आना पंचस्तव कि. ४ आना ट. म. अर्धा आना नारायणसार संग्रह कि. ॥ रु. ट. म. १ आना गुरुपीयूषलहरी कि. ६ आणे ट. म. १ आना वेंकटेशसहस्रनाम सटीक कि. ॥ रु. ट. म. १ आना वेंकटेशसहस्रनाममोठा कि. ४ आना ट. म. १ आना राधाकृष्णभूषण कि. ३ आणा ट. म. ॥ आणा दुर्जनकरिपचानन कि. ९ आना ट. म. १ आना स्तोत्रदशकम् कि. ४ आना ट. म. ॥ आना मुकुंदमाला कि १ आना ट. म. ॥ आणा आलमंदार कि १ आणा ट. म. ॥ आना बृहत्स्तोत्ररत्नाकर स्तोत्रसंख्या १४२ कि. १ रु. ट. म. २ आना लक्ष्मीनारायणहृदय कि. ४ आना ट. म. ॥ आना लक्ष्मीस्तोत्र कि. ३ आना ट. म. अर्धा आना आदित्यहृदयवडा कि ४ आना ट. म. अर्धा आना आदित्यहृदयछोटा कि. १ आना ट. म. अर्धा आना

पुरुषोत्तमसहस्रनाम कि. २ आना ट. म. अर्धा आना विष्णुसहस्रनानामावली कि. २ आना ट. म. अर्धा आना शिवसहस्रनामावली कि. २ आना ट. म. अर्धा आना गणेशसहस्रनामावली कि. २ आना ट. म. अर्धा आना देवीसहस्रनामावली कि. २ आना ट. म. अर्धा आना वेंकटेशसहस्रनामावली कि. २ आना ट. म. अर्धा आना सूर्यसहस्रनामावली कि. २ आना ट. म. अर्धा आना पंचायतननामावली कि. दो. आना ट. म. अर्धा आना विष्णुसहस्रनामबडेअक्षरका खुला कि ४ आना ट. म. अर्धा आना विष्णुसहस्रनामसटीक कि. ॥ रु. ट. म. एक आना विष्णुसहस्रनाम रंगके कान्हेका कि. ४ आना ट. म. अर्धा आना विष्णुसहस्रनामसाधा कि. ३ आना ट. म. ॥ आ. विष्णुसहस्रनाम गुटका चित्रसहित कि. ९ आना ट. म. एक आना विष्णुसहस्रनाम मध्यम कि. दीड आना ट. म. अर्धा आना गोपालसहस्रनाम छोटा कि. दो आना ट. म. अर्धा आना गोपालसहस्रनाम-साधा ३ आना ट. म. अर्धा आना गोपालसहस्रनाम बडाअक्षरखुला कि ४ आना ट. म. १ आना गोपालसहस्रनामगुटकारेशमीबडा कि. ९ आना ट. म. १ आना स्तोत्रसप्तकनारायणवर्मादि कि ३ आना ट. म. अर्धा आना शिवसहस्रनाम कि. दो. आना ट. म. अर्धा आना भवानीसहस्रनाम कि. ४ आना ट. म. १ आना तुलसि कवच कि. दो. आना ट. म. अर्धा आना रामसहस्रनाम कि. दो. आना ट. म. अर्धा आना महिम्न सटीक. कि २॥ आना ट. म. अर्धा आना महिम्न छोटा कि. १॥ आना ट. म. अर्धा आना महिम्नहरिहरापर टीकासह कि. ६ आना ट. म. १ आना नृसिंहकवच कि. १ आना ट. म. अर्धा आना रामस्तवराज बडे अक्षरका कि. दो आना ट. म. अर्धा आना रामस्तवराज छोटे अक्षरका कि. १॥ आना ट. म. अर्धा आना

छोकीगीता किं. अर्धा आना ट. म. अर्धा आना स्तोत्रकल्पद्रुम भा-
पहिला किं. दो आणा ट. म. अर्धा आना स्तोत्र. ,, भाग दु
रा किं. दो आना ट. म. अर्धा आना स्तोत्र. ,, भाग ३
.. किं. दो आना ट. म. अर्धा आना स्तोत्र. ,, भाग ४
था किं. दो. आना ट. म. अर्धा आना स्तोत्र. ,, भाग ५
वा किं. दो आना ट. म. अर्धा आना

तुलसीकृत रामायण मध्यमअक्षरका छापके तयार है कागद चिकणा और जाडा किंमत ३ रुपया तुलसीकृत रामायण दुरा २॥ रुपया.

पुराणग्रंथाः

श्रीमहाभारत सटीक छापना है किंमत ६० रुप. डाक महसूल ५ रुपया वाल्मीकिरामायण सटीक किंमत २० रुपया डाक महसुल १ रुपया १४ आणा वाल्मीकिरामायण सटीक किंमत १२ रुपया डाक महसूल १। रुपया आत्मपुराण संस्कृत सटीक किंमत १६ रुपया टपाल महसूल १॥ रुपया श्रीमद्भागवत श्रीधरी टीप्पणीसह किंमत ९ रुपया डाक महसूल १॥ रुपया श्रीभद्भागवत श्रीधरीअक्षरमोटा परमोत्तम है किमत १२ रुपया डाक महसूल ३॥ रुपया भावनसचूर्णिक किमत ८॥ रुपया डाक महसूल १ रुपया भागवतमूल किंमत ४॥ रुपया डाक महसूल ।।। रुपया भागवत गुटका मूल किंमत ३। रुपया डाक महसूल ॥ रुपया भागवतविजयध्वजी टीकासह किंमत १६ रुपया डाक महसूल २ रुपया भागवत चूर्णिका किंमत ४ रुपया डाक महसूल ॥ रुपया

कटाहे मृन्मये पात्रे किंवा पक्वकमूलके ॥
ताम्रादिजेऽथवा पात्रे किंवा पाषाणसंभवे ॥ ४९ ॥
आकंठमग्नो वासेत प्रहरं प्रातरेव वै ॥
रोमांतेष्वनुकूपेषु स्थित्वा मात्राशतत्रयम् ॥ ५० ॥
ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ॥
पंचभिश्च भजेद्रक्तं पड्भिर्मांसं प्रपद्यते ॥ ५१ ॥
मेदःस्थानं सप्तशतैरष्टभिश्चास्थिषु व्रजेत् ॥
नवभिर्यातिमज्जानं ततो मात्रां न कारयेत् ॥ ५२ ॥
ततस्तु हरते रोगान्वातपित्तकफोद्भवान् ॥
स्रोतसां मार्दवकरः कफवातविनाशनः ॥ ५३ ॥
धातूनां पुष्टिजननो बलवर्णकरःपरः ॥
वातरोगानशेषांश्च जयेदेव विशेषतः ॥ ५४ ॥
॥ इति वैद्यालंकारात् ॥ वस्त्यवगाहनविधिः ॥
रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते ॥
तैलाद्यैः पूरणं कर्णे भास्करेस्तमुपागते ॥ ५५ ॥
स्वेदयेत्कर्णदेशं तु परिवर्तनशायिनः ॥
मूत्रैः स्नेहे रसैः कोष्णैः पूरयेच्च ततो भिषक् ॥ ५६ ॥
स्वस्थस्य पूरणे स्नेहैर्मात्राशतमवेदने ॥
शतत्रयं श्रोत्रगदे शिरोरोगे तथैव च ॥ ५७॥
कर्णं प्रपूरयेत्सम्यक्स्नेहाद्यैर्मात्रयोक्तया॥
नोच्चैःश्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥ ५८ ॥
॥ इति योगपारिजातात् कर्णपूरणमात्राविधिः ॥
निद्राकरो देहसुखश्चक्षुष्यः पादरोगहा ॥
पादत्वङ्मृदुकर्ता च पादाभ्यंगः प्रशस्यते ॥ ५९ ॥

---

१ वातजे। २ निर्यद्पूर्णमिन.पुमः। ३ पुमः।

मृदौसमेसुपर्यंके गतः स्वस्थतमो नरः ॥
उत्तानशायी संभूय तैलाभ्यंगं समाचरेत् ॥ ५९ ॥
तपो विद्यां धनं चक्षुरायुः कीर्तिं प्रजां हरेत् ॥
श्रोत्राक्षिवलदं पित्तश्रमतृड्दाहमेहनुत् ॥ ६० ॥
वाते पित्ते कफे रक्ते सन्निपाते तथैव च ॥
मदमूर्च्छाप्रलापे च तृष्णाजीर्णज्वरेषु च ॥ ६१ ॥
संतप्ते सतताजीर्णे मार्गश्रांते विशेषतः ॥
वाले वृद्धे च तरुणे तैलाभ्यंगः सदोत्तमः ॥ ६२ ॥
कृष्णात्रेयात् ॥

इति श्रीयोगतरंगिण्यां संक्षेपतो वस्तिविधिर्नामाष्टमस्तरंगः ॥ ८ ॥

---

नवमस्तरंगः ।

॥ अथ नस्यम् ॥

नस्यं तत्कथ्यते धीरैर्नासाग्राह्यं यदौषधम् ॥
नावनं सूक्ष्मकर्मेति नस्यनामद्वयं मतम् ॥ १ ॥
तस्य भेदद्वयं प्रोक्तं रेचनं स्नेहनं तथा ॥
रेचनं कर्षणं प्रोक्तं स्नेहनं वृंहणं मतम् ॥ २ ॥
कफपित्तानिलध्वंसी पूर्वमध्यापराह्णके ॥
दिनस्य गृह्यते नस्यं रात्रावप्युत्कटे गदे ॥ ३ ॥
नस्यं त्यजेद्भोजनादौ दुर्दिने चापतर्पिते ॥
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ॥ ४ ॥
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ॥
क्रुद्धः शोकाभिभूतश्च तृषार्त्तौ वृद्धवालकौ ॥ ५ ॥

---

१ प्रातः । २ नस्यकर्मेत्यपिपाठ. । ३ वातपित्तकफादीनांछेदनम् । ४ धातुवृद्धिकरम् । ५ लंघने ।

वेगावरोधी स्नातश्च स्नातुकामश्च वर्जयेत् ॥
अष्टवर्षस्य बालस्य नस्यकर्म समाचरेत् ॥ ६ ॥
अशीतिवर्षादूर्ध्वं च नावनं नैव दीयते ॥
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ॥ ७ ॥
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथै रसैस्तथा ॥
नासिकारंध्रयोरष्टौ षट्चत्वारश्च बिंदवः ॥ ८ ॥
प्रत्येकं रेचनं योज्यं मुख्यमध्यांत्यमात्रया ॥
नस्यकर्मणि दातव्यं शाणैकं तीक्ष्णमौषधम् ॥ ९ ॥
हिंगु स्याद्यवमात्रं तु माषकं सैंधवं मतम् ॥
क्षीरं चैवाष्टशाणं स्यात्पानीयं च त्रिकार्षिकम् ॥ १० ॥
कार्षिकं मधुरं द्रव्यं नस्यकर्मणि योजयेत् ॥
षडंगुला द्विवक्त्रा या नाली चूर्णं तया धमेत् ॥
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हितम् ॥ ११ ॥

॥ वैरेचनं यथा ॥

नस्यं स्याद्गुडशुंठीभ्यां पिप्पल्या सैंधवेन वा ॥
जलपिष्टेन तेनाक्षिकर्णनासाशिरोगदाः ॥ १२ ॥
मन्याहनुगलोद्भूता नश्यंति भुजपृष्ठजाः ॥
मधूकसारकृष्णाभ्यां वचामरिचसैंधवैः ॥ १३ ॥
नस्यं कोष्णजलैः पिष्टं दद्यात्संज्ञाप्रबोधनम् ॥
अपस्मारे तथोन्मादे सन्निपातेपतंत्रके ॥ १४ ॥
सैंधवं श्वेतमरिचं सर्षपाः कुष्ठमेवच ॥
वस्तमूत्रेण पिष्टानि नस्यं तंद्रानिवारणम् ॥ १५ ॥
रोहीतमत्स्यपित्तेन भावितं मरिचं वचा ॥
कंकोलं चेति चूर्णं हि देयं प्रधमनं बुधैः ॥ १६ ॥

१ रोहमज्ञरी । २ तद्वादादेयम् ।

॥ अथ बृंहणप्रकारः ॥

मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहने मतौ ॥
मर्शस्य तर्पणी मात्रा मुख्याशाणैः स्मृताष्टभिः ॥१७॥
मध्यमा च चतुःशाणैर्हीना शाणमिता मता ॥
एकैकस्मिंस्तु मात्रेयं देया नासापुटे बुधैः ॥ १८ ॥
मर्शस्य द्वित्रिवेलं च दृष्ट्वा दोषबलाबलम् ॥
एकांतरे द्व्यंतरे वा नस्यं दद्याद्विचक्षणः ॥ १९ ॥
त्र्यहं पंचाहमथवा सप्ताहं च सुयंत्रितः ॥
मर्शैः शिरोविरेके च व्यापदो विविधा स्मृताः ॥ २० ॥
दोषोत्क्लेशात्क्षयाच्चापि विज्ञेयास्ता यथाक्रमात् ॥
शिरोनासाक्षिरोगेषु सूर्यावर्ताधभेदके ॥२१॥
दंतरोगे बले हीने मन्यावाहुसजे गदे ॥
मुखशोषे कर्णनादे वातपित्तगदे तथा ॥ २२ ॥
अकालपलिते चैव केशश्मश्रुप्रपातने ॥
युज्यते बृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः ॥ २३ ॥

॥ यथा ॥

सशर्करं पयः पिष्टं भृष्टमाज्येन कुंकुमम् ॥
नस्यप्रयोगतो हन्याद्वातरक्तभवारुजः ॥ २४ ॥
भ्रूशंखाक्षिशिरःकर्णसूर्यावर्त्तार्द्धभेदकाः ॥
नस्यं स्यात्तिलतैलेन तथा नारायणेन वा ॥ २५ ॥
माषादिना वा सर्पिभिस्तत्तद्दोषजसाधितैः ॥
तैलं कफे स्याद्वाते च केवले पवने वसा ॥ २६ ॥
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जानमेव च ॥
माषात्मगुप्तारास्नाभिर्बलारुचकरोहिषैः ॥ २७ ॥

१सति। २पिच्चेत्यपिपाठः। ३वा अरसीतैलेन। ४तैलेन। ५कैत्र। ६ लवण।

कृतोश्वगंधयाक्वाथोहिंगुसैंधवसंयुतः ॥
कोष्णो नस्यप्रयोगेण पक्षाघातं सकंपनम् ॥ २८ ॥
जयेदर्धितवातं च मन्यास्तंभापबाहुके ॥
प्रतिमर्शस्य मात्रा तु द्वित्रिबिंदुमिता मता ॥ २९ ॥
प्रत्येकशो नासिकयोः स्नेहेनेति विनिश्चितम् ॥
स्नेहे ग्रंथिद्वयं यावन्निमग्नं चोद्धृतं ततः ॥ ३० ॥
तज्जन्याश्च स्रवेत्तस्या यः स बिंदुरुदाहृतः ॥
एवंविधैऽरष्टसंख्यैर्बिंदुभिः शाण उच्यते ॥ ३१ ॥
स देयो मर्शनस्ये तु प्रतिमर्शे द्विबिंदुकः॥
समया प्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्दश ॥ ३२ ॥
प्रभाते दंतकाष्ठांते गृहान्निर्गमने तथा ॥
व्यायामाऽध्वऽव्यवायांते विण्मूत्रांतेंऽजने कृते ॥ ३३ ॥
कवलांते भोजनांते दिवा स्वप्नोत्थिते तथा ॥
वमनांते तथा सायं प्रतिमर्शः प्रयुज्यते ॥ ३४ ॥
प्रतिमर्शेन शाम्यंति रोगाश्चैवोर्ध्वजत्रुजाः ॥
विभीतनिंबकंभारीशिवाशेलुश्चकाकिनी ॥ ३५ ॥
एकैकतैलनस्येन पलितं नश्यति ध्रुवम् ॥
वमनं रेचनं नस्यं निरूहश्चानुवासनम् ॥
एतानि पंचकर्माणि कथितानि मुनीश्वरैः ॥ ३६ ॥

इति श्रीयोगतरंगिण्यां नस्यविधिर्नाम नवमस्तरंगः॥
इति पंचकर्माणि समाप्तानि ॥

---

दशमस्तरंगः ।

## अथ धूमपानविधिः ॥

---

१ शाणः । २ मज्जाचोज । ३ कुंभेरीबीज । ४ हरीतकीमज्जा सिंहोडामज्जा । ५ गोंदीमसिद्धः । ६ क्रियायांबीजं कौआटोंटीप्रसिद्धः ।

धूमस्तु षड्विधः प्रोक्तो वृंहणं शमनं तथा ॥
रेचनः कासहा चैव वामनो व्रणशोधनः ॥ १ ॥
शमनस्य तु पर्यायौ मध्यः प्रायोगिकस्तथा ॥
वृंहणस्य तु पर्यायौ स्नेहनो मृदुरेव च ॥ २ ॥
रेचनस्य च पर्यायौ शोधनस्तीक्ष्ण एव च ॥
अधूमार्हाश्च खल्वेते श्रांतो भीरुश्च दुःखितः ॥ ३ ॥
दत्तवस्तिर्विरक्तश्च रात्रौ जागरितस्तथा ॥
पिपासितश्च दाहार्तस्तालुशोषी तथोदरी ॥ ४ ॥
शिरोभितापी तिमिरी छर्द्याध्मानप्रपीडितः ॥
क्षतोरस्कः प्रमेहार्त्तः पांडुरोगी च गर्भिणी ॥ ५ ॥
रूक्षः क्षीणोभ्यवहृतक्षीरक्षौद्रघृतासवः ॥
भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा ॥ ६ ॥
अकाले चातिपीतश्च धूमःकुर्यादुपद्रवान् ॥
धूमो द्वादशमाद्वर्षादीयतेऽशीतितो न च ॥ ७ ॥
कासश्वासप्रतिश्यायमन्याहनुशिरोरुजः ॥
वातश्लेष्मविकारांश्च हन्याद्धूमस्तु योजितः ॥ ८ ॥
धूमप्रयोगात्पुरुषः प्रसन्नेंद्रियवाङ्मनाः ॥
दृढकेशद्विजश्मश्रुः सुगंधिवदनो भवेत् ॥ ९ ॥
वदनेन पिबेद्धूमं वदनेनैव संत्यजेत् ॥
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः ॥ १० ॥
शरावसंपुटे क्षिप्त्वा कल्कमंगारदीपितम् ॥
छिद्रे नेत्रं प्रवेश्याथ व्रणं तेनैव धूपयेत् ॥ ११ ॥
एलादिकल्कं शमने स्निग्धं सर्जरसं मृदौ ॥

---

१ दोषशमनं । २ भययुक्तः । ३ शिरःपीडायुक्तः । ४ अभ्यवहृतं भक्षितं । ५ मद्यम् । ६ दुर्बलः । ७ प्रथमंमुखेनैवपिबेत्मुखेनैवत्यजेत् ।

रेचने तीक्ष्णकल्कं च कासघ्ने क्षुद्रिकार्पणम् ॥ १२ ॥
वामने स्नायुचर्माद्यं दद्याद्धूमस्य पानकम् ॥
व्रणे निंबवचाद्यं च धूमदानं प्रशस्यते ॥ १३ ॥
अन्येऽपि धूमा गेहेषु कर्तव्या रोगशांतये ॥
मयूरपिच्छं निंबस्य पत्राणि बृहतीफलम् ॥ १४ ॥
मरिचं हिंगु मांसी च बीजं कार्पाससंभवम् ॥
छागरोमाणि निर्मोकं विष्ठा बैडालकी तथा ॥ १५ ॥
गजदंतस्य चूर्णं हि किंचित् घृतविमिश्रितम् ॥
गृहेषु धूपनं दत्तं सर्वान्बालग्रहाञ्जयेत् ॥ १६ ॥
पिशाचान्राक्षसान्हत्वा सर्वज्वरहरं भवेत् ॥

इत्यपराजितो धूमः ॥

नेत्राणिधातुजान्याहुर्नलवंशभवान्यपि ॥
चतुर्विंशत्यंगुलानि खंडानि त्रीणि युक्तितः ॥ १८ ॥
योजितानि त्रिखंडेयं नलिका नेत्रसंज्ञका ॥
इति श्रीयोगतरंगिण्यां धूमपानविधिर्नामदशमस्तरंगः ॥

---

एकादशस्तरंगः ।

अथ रक्तस्रुतिः ॥

शरत्काले स्वभावेन कुर्याद्रक्तस्रुतिं नरः ॥
त्वग्दोषग्रंथिशोफाद्या न स्यू रक्तस्रुतेर्यतः ॥ १ ॥
विस्रता द्रवता रागश्चलनं विलयस्तथा ॥

---

१ कंटकारी । २मरिचं वा पिप्पली । ३ गुरुशृंगकर्कशास्थिशुष्कमस्यचर्मक्रिमिप्रभृतिभिः रमनीयैश्चवामनीयैलिप्तभुजः । ४ वकर्टीकेशाम । ५ सर्पकंचुकं । ६ बिलाईल । ७ हस्तिदंतस्य । ८ साधारण्येन । ९ कुष्ठवातरक्तादयः । १० रक्तंभूम्यादीनांगुणानांगुणाश्वसन्तिनानाह । विस्रेति । विस्रताआमगंधताभूमिगुणः द्रवताजलगुणः रागारक्तताग्निगुणः चलनं वायुगुणः विलयोलीनताकाशगुणः सञ्छिन्नाता एनेगुणा भूम्यादिपंचभूतानांक्रमतःस्मृताः ।

भूम्यादिपंच भूतानामेते रक्ते गुणाः स्मृताः ॥ २ ॥
इंद्रगोपप्रभं ज्ञेयं प्रकृतिस्थमसंहतम् ॥
अन्यत्सर्वमशुद्धं हि विज्ञेयं रुधिरं नृणाम् ॥ ३ ॥
शोथे दाहेंगपाके च रक्तवर्णेऽसृजः स्रुतौ ॥
वातरक्ते तथा कुष्ठे सपीडे दुर्जये ऽनिले ॥ ४ ॥
पाणिरोगे श्लीपदे च विषदुष्टे च शोणिते ॥
ग्रंथ्यर्बुदापचीक्षुद्ररोगरक्ताधिमंथिषु ॥ ५ ॥
विदारीस्तनरोगेषु वपुषश्चापि गौरवे ॥
रक्ताभिष्यंदतंद्रायां पूतिघ्राणस्य हेतवे ॥ ६ ॥
यकृत्प्लीहविसर्पेषु विद्रधौ पिडकोद्गमे ॥
कर्णौष्ठघ्राणवक्राणां पाके दाहे शिरोरुजे ॥ ७ ॥
उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते ॥
एषु रोगेषु शृंगैर्वा जलौकालांबुकैरपि ॥ ८ ॥
अथ वापि शिरावेधे रक्तमोक्षः प्रशस्यते ॥
पंचकर्मविशुद्धस्य पीतस्नेहस्य चार्शसाम् ॥ ९ ॥
सर्वांगशोथयुक्तानामुदरश्वासकासिनाम् ॥
छर्द्यतीसारजुष्टानां पांडूनां स्विन्नदेहिनाम् ॥ १० ॥
ऊनषोडशवर्षस्य गतसप्ततिकस्य च ॥
आघातस्रुतरक्तस्यशिरामोक्षो न शस्यते ॥११॥
गृह्णाति शोणितं शृंगं दशांगुलमितं बलात् ॥
जलौकाहस्तमात्रं तु तुंबं च द्वादशांगुलम् ॥ १२ ॥
पदमंगुलमात्रं तु शिरा सर्वांगशोधनी ॥
रक्ते दुष्टे च शिष्टेपि व्याधिर्नैव प्रकुप्यति ॥१३॥

---

१ लोहितवर्णे । २ कर्णनासिकामुखइनतेरुधिरगिरे । ३आरक्तनेत्रं । ४तुम्बी
५ वमनादिभिः शुद्धस्य । ६ आघातेनगतरक्तस्य । ७ पच्छना । ८ शेषेसति ।

अतः स्वास्थ्यं सावशेषं रक्ते नाऽतिक्रमो मतः ॥
आंध्यमाक्षेपकं तृष्णां तिमिरं च शिरोरुजम् ॥ १३ ॥
पक्षाघातं श्वासकासौ हिक्कां दाहं च पांडुताम् ॥
कुरुतेऽतिस्रुतं रक्तं मरणं वा करोति हि ॥ १४ ॥
देहस्योत्पत्तिरसृजा देहस्तेनैव धार्यते ॥
विना तेन व्रजेज्जीवो रक्षेद्रक्तमतो बुधः ॥ १५ ॥
शीतोपचारैः कुपिते स्रुतरक्तस्य मारुते ॥
कोष्णेन सर्पिषा शोथं श्वयथुं परिषेचयेत् ॥१६ ॥
क्षीणस्यैणशशोरभ्रहरिणच्छागमांसजः ॥
रसः समुचितः पाने क्षीरं वा पाटिका हिता ॥ १७ ॥
पीडाशांतिर्लघुत्वं च व्याधेरुद्रेकसंक्षयम् ॥
मनः स्वास्थं भवेच्चिह्नं सम्यग्विस्राविते ऽसृजि ॥ १८ ॥
व्यायाममैथुनक्रोधशीतस्नानप्रवातकान् ॥
एकाशनं दिवा निद्रां क्षाराम्लकटुभोजनम् ॥ १९ ॥
शोकं वा पियदाजीर्णं त्यजेद्यावद्बलो भवेत् ॥
फेनि रूक्षं भवेत्सूचि निस्तोदि पवनादसृक् ॥ २० ॥
विसृतं पीतमाश्यानं कोष्णं पित्तेन जायते ॥
मंदगं वहुलं स्निग्धं मांसपेशीनिभं कफात् ॥ २१ ॥
द्विदोषदुष्टं संसृष्टं त्रिदुष्टं पूतिगंधिकम् ॥
सर्वलक्षणसंपन्नं कांजिकाभं च जायते ॥ २२ ॥
विषदुष्टं भवेच्छ्यावं नासिकोन्मार्गगं तथा ॥

---

१ अतःसावशेषसाध्यमित्यर्थः । २ वायु । ३ अतिनिस्रुतं । ४ रु-धिरेण । ५ यमलोकंगच्छेत् । ६ पुमः । ७ वहुगतरक्तस्य । ८ हिरण । ९ मेढा । १० दुग्धं । ११ एकभोजन । १२ ग-ईकेसमानव्यथापाकी । १३ फेलजाय । १४ पधिरूपं । १५ द्वि द्विदोषलक्षणयुक्तंभवति ।

दुर्गंधिकांजिसंकाशं सर्वकुष्ठकरं भवेत् ॥ २३ ॥

॥ इति शार्ङ्गधरात् ॥

इति श्रीयोगतरंगिण्यां रुधिरमोक्षविधिर्नामैकादशस्तरंगः ॥ ११ ॥

## ॥ द्वादशस्तरंगः ॥

### ॥ अथ नाडीपरीक्षा ॥

सद्यः स्नातस्य भुक्तस्य तथा स्नेहावगाहिनः ॥
क्षुत्तृपार्तस्य सुप्तस्य सम्यङ्ग् नाडी न बुध्यते ॥ १ ॥
अंगुष्ठमूलमार्गे या धमनी जीवसाक्षिणी ॥
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पंडितैः ॥ २ ॥
स्त्रीणां भिषग्वामहस्ते पादे वामे च यत्नतः ॥
शास्त्रेण संप्रदायेन तथा स्वानुभवेन वै ॥ ३ ॥
एकांगुलं परित्यज्य हस्तादंगुष्ठमूलतः ॥
परीक्षेद्यत्नवच्चासावभ्यासादेव जायते ॥ ४ ॥
अग्रे वातवहा नाडी मध्ये वहति पित्तला ॥
अंते श्लेष्मविकारेण नाडी ज्ञेया सदा बुधैः ॥ ५ ॥
सर्पजलौकादिगतिं वदंति विबुधाः प्रभंजने नाडीम् ॥
पित्तेन काकलावकमंडूकादेस्तथा चपलाम् ॥ ६ ॥
राजहंसमयूराणां पारावतकपोतयोः ॥
कुक्कुटस्य गतिं धत्ते धमनी कफसंगिनी ॥ ७ ॥
मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा ॥
वातपित्तसमुद्भूतां तां वदंति विचक्षणाः ॥ ८ ॥
सर्पहंसगतिं तद्वद्वातश्लेष्मगतिं वदेत् ॥

१ नित्य। २ कांजिकसंनिभम्। ३ पूर्वजैःयत्कथितंतेन। ४ वात। ५ कौआ। ६ लवा। ७ नाडी। ८ वतक। ९ खबूतर। १० पडुकौआ। ११ मुरगा। १२ नाडी। १३ मडूकगतिं। १४ वदंतीइत्यपिपाठः।

हरिहंसगतिं धत्ते पित्तश्लेष्मान्विता धरा॥ ९ ॥
काष्ठकुट्टो यथा काष्ठं कुट्टते चातिवेगतः ॥
स्थित्वास्थित्वा तथा नाडी सन्निपाते भवेद्ध्रुवम् ॥१०॥
॥ इति वृद्धहारीतात् ॥
स्पंदते चैकमानेन त्रिंशद्वारं यदा धरा ॥
स्वस्थानेन तदा नूनं रोगी जीवति नान्यथा ॥
स्थित्वास्थित्वा वहति या सा ज्ञेया प्राणघातिनी ॥११॥
जिह्मंजिह्मं कुटिलकुटिलं व्याकुलंव्याकुलं वा
स्थित्वास्थित्वा वहति धमनी याति नाशं च सूक्ष्मा ॥
नित्यं कंठे स्फुरति पुनरप्यंगुलीः संस्पृशेद्वा
भावैरेवं वहुविधतरैः सन्निपातादसाध्या ॥ १२ ॥
पूर्वं पित्तगतिं प्रभंजनगतिं श्लेष्माणमाविभ्रती
स्वस्थानाद्भ्रमणं मुहुर्विदधती चक्राधिरूढेव या ॥
भीमत्वं दधती कलापिगतिका सूक्ष्मत्वमातन्वती
नो साध्यां धमनीं वदंति मुनयो नाडीगतिज्ञानिनः॥१३॥
गंभीरा या भवेन्नाडी सा भवेन्मांसवाहिनी ॥
ज्वरवेगेन धमनी सोष्णा वेगवती भवेत् ॥ १४ ॥
कामात्क्रोधाद्वेगवहा क्षीणा चिंताभयप्लुता ॥
मंदाग्नेः क्षीणधातोश्च नाडी मंदतरा भवेत् ॥ १५ ॥
असृक्पूर्णा भवेत्कोष्णा गुर्वी सामा गरीयसी ॥
लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता १६ ॥

---

१ मयूरः। २ नाडी। ३ काष्ठकार्यकृत्। ४ कुट्टनं करोति। ५ इत-स्तीर्यग्भवति सोष्णत्वादिकं जनयति सोष्णा। ६ बहुविधं गुरु भवति। ७ अव-र्दनं। ८ पुनः। ९ भवतीति शेषः। १० भवति शेषः। ११ वातेवक्र-गतिः पित्तेनाडीगतिः कफे मंदगतिः नाडी भवति एतद्विपर्ययम्। १२ मोरगतिः। १३ मांसगता। १४ नाडी। १५ भवति। १६ आम सहितानाडी।

चपला क्षुधितस्यापि तृप्तस्य वहति स्थिरा ॥
शीघ्रा नाडी मलापाते दिनार्द्धेऽग्निसमो ज्वरः ॥ १७ ॥
दिनैकं जीवितं तस्य द्वितीये म्रियते भृशम् ॥
मरणे डमरुकस्येव भवेदेकदिनेन च ॥ १८ ॥
इति श्रीयोगतरं० नाडीपरीक्षानामद्वादशस्तरंगः १२

त्रयोदशस्तरंगः

अथ वस्त्रपरीक्षा ॥

ज्वरव्याप्तशरीरस्य ऊष्मा भवति दारुणः ॥
स ऊष्मा बहिराप्नोति वस्त्रे तिष्ठति निश्चितम् ॥ १ ॥
वातपित्तकफानां च द्वित्रिदोषस्य लक्षणम् ॥
परीक्षेज्ज्वरिणो वस्त्रं वैद्यो वै शुद्धवंशजः ॥ २ ॥
वाते वस्त्रं सौरभं घ्राणतःस्यात्
पौष्यं पैत्ते मत्स्यतुल्यं विगंधम् ॥
पाकोस्थोणं श्लेष्मणः संप्रकोपात्
द्वंद्वैर्द्वंद्वोत्युल्वणैरुयैकता च ॥ ३ ॥
यदा वस्त्रे भवेद्गंधः सटिता जालकर्दमः ॥
तदा दीर्घो भवेद्रोगो म्रियते शवगंधकः ॥ ४ ॥

अथ जिह्वापरीक्षा ॥

पीता जिह्वा खरस्पर्शा स्फुटिता मारुताधिके ॥
रक्ता श्यामा भवेत्पित्ते कफे शुभ्रातिपिच्छला ॥ ५ ॥
कृष्णा सकंटका शुष्का सन्निपाताधिके तु सा ॥
मिश्रिते मिश्रिता ज्ञेयाऽरिष्टे लक्षिणवर्जिता ॥ ६ ॥
इति यो० जिह्वापरीक्षानाम त्रयोदशस्तरंगः ॥ १३ ॥

---

१ जानीयाद्वधतो वैद्यो निश्चयाच्छुद्धवंशजः। २ पुष्पसमान। ३ पाकंघ्राणपाठः। ४ मृत्युसूचके। ५ जिह्वा ज्ञेया।

अंशिरो मासमरणं विनाजंघे दिनाष्टकम् ॥
अष्टभिः कंधरानाशे छायालोपेन तत्क्षणात् ॥११॥

इति छायापुरुषविचारः ॥

अथमूत्रपरीक्षा ॥

परीक्षा विधिवत्कार्या रोगिमूत्रस्य तत्वतः ॥
तृणेन दत्वा तैलस्य बिंदुं तत्रातिलाघवात् ॥ १२ ॥

विकाशि चेत्तैलमथाशुमूत्रे
साध्यः स रोगी न विकाशि चेत्तत् ॥
स्यात्कष्टसाध्यस्तलगे त्वसाध्यो
नागार्जुनेनैव कृता परीक्षा ॥ १३ ॥
नीलं च रूक्षं कुपिते च वायौ
पीतारुणं तैलसमं च पित्ते ॥
स्निग्धं कफात्पल्वलवारितुल्यं
स्निग्धोष्णरक्तं रुधिरप्रकोपात् ॥ १४ ॥

मातुलुंगरसाभासं सौवीराभं जलोपमम् ॥
प्रपाकरहितानां च मूत्रं चंदनसन्निभम् ॥ १५ ॥
अजीर्णप्रभवे रोगे मूत्रं तंदुलतोयवत् ॥
नवज्वरे धूम्रवर्णं बहुमूत्रं प्रजायते ॥ १६ ॥
पित्तानिले धूम्रजलाभमुष्णं श्वेतं मरुच्छ्लेष्मणिबुद्बुदाभं
तच्छ्लेष्मपित्तेकलुषंसरक्तंजीर्णज्वरेसृक्सदृशं च पीतम्॥
स्यात्सन्निपातादपि मिश्रवर्णं तूर्णं विधिज्ञेन विचारणीयं
पूर्वस्यां वर्धते बिंदुर्यदा शीघ्रं सुखी भवेत् ॥
दक्षिणस्यां ज्वरो ज्ञेयस्तथारोग्यं क्रमाद्भवेत् ॥ १८ ॥

---

१ शिरसः अदर्शन । २ मस्तके । ३ मृत्युर्भवेत् । ४ अनिहस्तकोशल्यात् । ५ फैलजाय । ६ आधार्येण । ७ मलिनजलतुल्यम् । ८ बिजोरे । ९ कांजिकाभ । १० मदाग्नियुक्तानांपुंसां । ११ तंदुलधावनजलसदृश । १२ शोम । १३ वेधेन । १४ पूर्वदिशि । १५ मूत्रस्योपरि । १६ दक्षिणदिशि

उत्तरस्यां यदा विंदोः प्रसरः संप्रजायते ॥
आरोग्यता तदा नूनं पुरुपस्य न संशयः॥ १९॥
वारुण्यां प्रसरेद्विंदुः सुखारोग्यं तदा दिशेत ॥
ईशान्यां वर्धते विंदुर्ध्रुवं मासेन नश्यति ॥२० ॥
आग्नेय्यां तु तथा ज्ञेयं नैर्ऋत्यां प्रसरेद्यदा ॥
छिद्रितं च भवेत्पश्चाद्ध्रुवं मरणमेव च ॥ २१ ॥
वायव्यां प्रसरेद्विंदुःसुधापोपि विनश्यति ॥
विकाशितं मत्स्यकूर्मसैरिभाकारसंयुतम् ॥ २२ ॥
करंडमंडलं वापि नरं मूर्द्धविवर्जितम् ॥
गात्रखंडं च शस्त्रं च खड्गं मुशलपट्टिशम् ॥ २३ ॥
शरं च लकुटं चैव तथैव त्रिचतुःपथम् ॥
विंदुरूपं नरो दृष्ट्वा न कुर्वीत क्रियां क्वचित् ॥ २४॥
हंसकारंडताडागं कमलं गजचामरम् ॥
छत्रं च तोरणं हर्म्यं संपूर्णं दृश्यते यदि ॥२५॥
आरोग्यता ध्रुवं ज्ञेया तदा कुर्यात्प्रतिक्रियाम् ॥
तैलविंदुर्यदा मूत्रे चालनीसदृशो भवेत् ॥ २६॥ ॥
कुलदोपो ध्रुवं ज्ञेयः प्रेतदोपसमुद्भवः ॥
नराकारं प्रजायेत किंवा स्यान्मस्तकद्वयम् ॥ २७॥
भूतदोपं विजानीयाद्भूतविद्यां तदाचरेत् ॥
इतिश्रीयोगतरंगिण्यांमूत्रपरीक्षानामचतुर्दशस्तरंगः १४

---

१ उत्तरदिशि । २ पश्चिमदिशि । ३ पूर्वोत्तरदिशोर्मध्ये । ४ पूर्वदक्षिणमध्ये । ५ मासेनैव मृत्युर्भवति । ६ दक्षिणपश्चिमयोर्मध्ये । ७ पश्चिमोत्तरमध्यदेशे । ८ अमृतपानकृत् । ९ बलीवर्दाकार । १० जोलमडलं । ११ त्रिचतुर्मार्गगामिन । १२ चिकित्सां । १३ जलकुरगा । १४ तडागतुल्य । १५ हस्ती । १६ मंदिर तुल्यम् । १७नद्दृष्टिद्रवती । १८ पटस्तमः ।

## पंचदशस्तरंगः
### ॥ अथदूतविचारः ॥

सुज्ञातः शुद्धवेषो द्रविणयुतकरः क्षत्रियो ब्राह्मणो वा
तांबूलाढ्यः सुशीलः शुभवचनवदः स्यात्प्रशस्तोत्रदूतः ॥
शस्ता योपिन्न दौत्ये न च जनयुगलं नांगहीनो न रोगी
शोकार्त्तो वा रुदन्वा नतहतपतितभ्रष्टशब्दान्ब्रुवाणः १॥
आगत्यविश्रमेद्योवलिमथनदिशं पश्चिमामुत्तरां वा
शंभोकाष्ठां सशस्तोपरदिशि न तुपांगारभस्मादिसंस्थः॥
रक्तसृग्गंधवस्त्रास्तृणलगुडदलछेदिनं पंकतैला-
भ्यक्ता वक्षोजनासालकानिहितकरा ये च विक्षिप्तकेशाः२

रसमंजरीतः ॥

दूतो रक्तकपायकृष्णवसनो दंडी जटी मुंडित-
स्तैलाभ्यक्तवपुर्भयंकरवचा दीनोश्रुपूर्णेक्षणः ॥
भस्मांगारकपालपांसुमुशली सूर्येस्तगे व्याकुलो
यः शून्यस्वरसंस्थितो गदवतो दूतस्तु कालानलः ॥ ३॥

इति दूतलक्षणम् ॥

### अथ मलपरीक्षा ॥ रुद्रतंद्रात् ॥

त्रुटितं फेनिलं रूक्षं धूमलं वाततो मलम् ॥
हरित्पीतं च दुर्गंधि पित्तादुष्णश्लथं भवेत् ॥ ४ ॥
शीतं शुल्कं मलं सांद्रं स्निग्धं स्यात्कफकोपतः ॥
वातश्लेष्मविकारे च जायते कपिशं मलम् ॥ ५ ॥
यद्वं संत्रुटितं पीतं श्यामं पित्तानिलाद्भवेत् ॥
पीतश्यामं श्लेष्मपित्तदोपात्सांद्रं च पिच्छलम् ॥ ६ ॥

---

१ द्रव्ययुक्तहस्तः । २ भेडः । ३ स्त्री । ४ पूर्वदिशा । ५ ईशान्यां । ६ दूतः । ७ भेडः । ८ लकुटमित्यपि । ९ रोगिणः । १० मृत्युतुल्यः । ११ धूसरमितिपाठः । १२ पवनात् ।

श्यामं त्रुटितपीताभं वद्धं श्वेतं त्रिदोषतः ॥
दुर्गंधः शिथिलश्चैव विष्ठोत्सर्गों यदा भवेत् ॥ ७ ॥
तदा जीर्णं मलं वैद्यैर्दोषज्ञैः परिभण्यते ॥
कपिलं गुटिकायुक्तं यदि वर्चोऽवलोक्यते ॥ ८ ॥
प्रक्षीणमलदोषेण दूषितः परिकथ्यते ॥
सितं महत्पूतिगंधं मलं ज्ञेयं जलोदरे ॥ ९ ॥
श्यामं क्षये त्वामवाते पीतं सकटिवेदनम् ॥
अतिकृष्णं चातिशुभ्रमतिपीतमथारुणम् ॥
मरणाय मलं किंतु भृशोष्णं मृत्यवे ध्रुवम् ॥ १० ॥
इति योगतरं० मलपरीक्षानाम पंचदशस्तरंगः १५

षोडशस्तरंगः

अथ दृक्परीक्षा ॥

रूक्षा धूम्रा तथा रौद्री चलौ चांतर्ज्वलंत्यपि ॥
दृष्टिर्यदा तदा वातरोगं रोगविदो विदुः ॥ १ ॥
दीपद्वेषं च संतप्तं पीतं पित्ते च लोचनम् ॥
जलार्द्रं ज्योतिषा हीनं स्निग्धं मंदं कफेन तत् ॥ २ ॥
द्वंद्वदोषे भवेन्मिश्रवर्णं तूर्णं निलोचनम् ॥
श्यामवर्णं च निर्भुग्नं तंद्रामोहसमन्वितम् ॥ ३ ॥
रौद्रं च रक्तवर्णं च भवेच्चक्षुस्त्रिदोषतः ॥
एकं चक्षुर्यदा भीमं द्वितीयं स्तिमितं भवेत् ॥ ४ ॥
त्रिभिर्दिनैस्तदा रोगी स याति यममंदिरम् ॥
ज्योतिर्विहीनं सहसा रोगिणो यस्य लोचनम् ॥ ५ ॥
दीपरूप्यं स नियतं प्रयाति यमसद्मनि ॥

---

१ पक्व । २ कथ्यते । ३ दृश्यते । ४ भयकरा । ५ चपला । ६ भवनानि- ७ नतकुञ्चनेत्र । ८ तेजहीन । ९ भवेन्मर्न । १० अत्रत । ११ निभयन ।

सरक्तं कृष्णवर्णं च रौद्रं च प्रेक्षते तथा ॥ ६ ॥
इति लिंगैर्विजानीयान्मृत्युरेव न संशयः ॥
एकदृष्टिरचैतन्यो भ्रमस्फुरिततारकः ॥
एकरात्रेण नियतं परलोकपथं व्रजेत् ॥ ७ ॥

॥ यामलात् ॥

शुष्कौष्ठः श्यामकोष्ठोप्य[1]सितरदनाति शीतना[2]साप्रदेशः
शोणाक्षश्चैकनेत्रो लु[3]लितकरपदः श्रो[4]त्रपातित्ययुक्तः ॥
शीतश्वासोथ वोष्णश्वसनसमुदयः शीतगात्रः सकंपः
सोद्वेगो निष्प्र[5]पञ्चः प्रभवति मनुजः सर्वथा मृत्युकाले८॥

॥ अथ शकुना: ॥

यानेभ[6]मातंगविप्रास्तुरगवृषफलच्छत्रमांसोदकुंभा[7]
योषित्पुत्रान्विता वा सुरभि[8]रपि तथा खं[9]जरीटा मयूराः॥
वीणाभेरीमृदंगांबुजप[10]टहरवावेदमांगल्यघोषा-
श्चापा[11]ःसिद्धा[12]न्नभूभृत्कुसुमपुरवधूचंदनाद्याः प्रशस्ताः ९॥
एणः काकोप[13]सव्ये शुभ इव कथितः स[14]व्यतः सारमेय-
श्चैं[15]क्रीयानाखुबं[16]भ्रुः शफरिदधिपयोरूप[17]गोमायुमेषा[18]ः॥
प्रेतो नीरोदनश्च ज्वलदनलशिखाश्वेतवस्त्रो ध्वजो वा
चित्तेशस्तेत्रसिद्धिःप्रभजातिभिषजोनान्यथाकिंचिदुक्तैः ।

॥ इति शकुनाः ॥

॥ अथ स्वप्नाः ॥

स्वप्नास्तु प्रथ[19]मे यामे संवत्स[20]रविपाकिनः॥

---

१ कृष्णदतपक्तिः । २ शीतलनासिकाग्रः । ३ चचलहस्तपदः । ४ इद्रियाशक्तिभिर्युतः । ५ सज्ञारहित. । ६ हस्ती । ७ जलयुक्तकलशा । ८ गौ. । ९ खजनपक्षिविशेषः । १० नगारेके शब्द । ११ पपेहा । १२ पक्वान्न । १३ दक्षिणे । १४ वामभागतः । १५ गर्दभः । १६ न्योरः । १७ सिरकटः । १८ मेंढा । १९ रात्रेःचत्वार प्रहरास्तत्र । २० वर्षेणफलदायिनः ।

षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ॥
अरुणोदयवेलायां दशाहेन फलप्रदाः ॥ ११ ॥
आरोहणं गोहयकुंजराणां
प्रासादशैलाग्रवनस्पतीनाम् ॥
विष्ठानुलेपो रुदितं मृतं च
स्वप्नेष्वगम्यागमनं च धन्यम् ॥ १२ ॥
॥ इति स्वप्नाः ॥

इति श्रीयोगतरंगिण्यां दृक्परीक्षानाम षोडशस्तरंगः १६

सप्तदशस्तरंगः ।

॥अथ धातुशोधनम् । तत्र प्रथमं पारदः ॥

जयेदयं संहितयाप्यजेयान्गदान्महापातकजान्क्षणेन ॥
शुद्धस्ततः शोधनमस्य कार्यमार्यैरशुद्धो न सुखाय सूतः १॥
अंतः सुनीलो बहिरुज्वलो यो
मध्याह्नसूर्यप्रतिमप्रकाशः ॥
शस्तोथ धूम्रः परिपांडुरश्च
चित्रो न योज्यो रसकर्मसिद्धौ ॥ २ ॥
स्वाभाविकाः संत्यऽगुणा रसेस्मि-
न्नागाग्निवंगापिकनामधेयाः॥
नागाद्भवेयुर्गलगंडरोगाः
कुष्ठं च वंगान्मरणं विषेण ॥ ३ ॥
मलेन मूर्छा दहनेन दाहो
वीर्यच्युतिः स्यादसकृच्चलत्वात् ॥
स्यात्कंचुकाज्जाड्यमथोदराणि

१ प्रहरे । २ प्रहरे । ३ प्रत्यूषसमये । ४ अथ । ५ श्रेष्ठ । ६ सेवनेन । ७ कुष्ठादीन् । ८ अथेत्यपि पाठः । ९ अग्निना ।

ततो विशुद्धोभिमतो रसेंद्रः ॥ ४ ॥
शुभेह्नि ढुंढिं परिचित्य सम्यक्
कुर्यात्कुमारीवटुकार्चनं च ॥
विधाय रक्षां विधिमंत्रपूतां
कर्मारभेदस्य रसस्य तज्ज्ञः ॥ ५ ॥
निशेष्टिकाधूमरजोम्लपिष्टो
विकंचुकः स्याद्दिवसेन सोर्णः ॥
वरारनालानलकन्यकाभिः
सत्र्यूपणीभिर्मृदितस्तु पूतः ॥ ६ ॥
स्विन्नो वराद्यैरथ दोलिकायां
दिनं मलाद्यै रहितस्त्रिभिः स्यात् ॥
तत्पंशताम्रेण विमर्द्य सूतं
जंबीरनीरेण ततः प्रगाढम् ॥ ७ ॥
संरुध्य भांडद्वयगर्भमध्ये
पिष्टिं ततः संपुटमव्रणं तत् ॥
निवेश्य चुल्ल्यां तु शनैः प्रदीप-
प्रमाणमग्निं च तले प्रदध्यात् ॥ ८ ॥
ततः शिरस्यस्य जलार्द्रमेकं
वस्त्रं क्षिपेदल्पमनुष्णमेव ॥
वारत्रयेणोरगवंगसंज्ञौ
न स्तः प्रदिष्टो ह्यहमूर्ध्वपातः ॥ ९ ॥
कदर्थनेनैव नपुंसकत्वं प्रादुर्भवेदस्य वरस्य पश्चात् ॥

१ दुर्गा। २ हरिद्रा। ३ इंद्रायोया। ४ निंबुरसेनपिष्टः। ५ एकेन। ६ सूत.। ७ त्रिफला। ८ कांजी। ९ चीतो। १० कांरकों पाठो ११ मलदहनचलपतैस्त्रिभिः। १२ शून्यः। १३ भांडस्य। १४ विन १५ नाम।

वलंप्रकर्षाय च दोलिकायांस्वेद्यो जले सैंधवचूर्णगर्भे १०
वंध्याहिनेत्रांगुजमार्कवानां
सतिक्तकानां द्रवसंप्रपके ॥
खिन्नास्थिरत्वंलभतेग्नितोये
सकांजिकेदीप्तियुतोतितीक्ष्णः ॥ ११॥

इति रसरत्नप्रदीपाद्रसशुद्धिः ॥ उक्तं च ॥

मृत्पापाणजलाख्याश्च अलीकोपोलिकातथा ॥
श्यामाकपालिकाचेति पारदे सप्त कंचुकाः ॥ १२ ॥
मलदोषो वह्निदोषो भूदोषोन्मत्तदोषकौ ॥
शैलदोषश्च पंचैते दोषाः सूते समीरिताः ॥ १३ ॥
मृद्रूपश्चाश्मरूपश्च जलरूपः पयोनिभः ॥
पंचवर्णः कृष्णवर्णस्तैलवर्णश्च कंचुकः ॥ १४ ॥
मृन्मयात्कंचुकात्कुष्टं जाड्यं पापाणदोषतः ॥
वलीपलितखालित्यं वारिदोषात्प्रजायते ॥ १५ ॥
दद्रूच गजचर्माणि करोत्येव कपालिका ॥
कामलां पांडुरोगं च तथा कुष्टं जलोदरम् ॥ १६ ॥
प्रमेहं श्वेतकुष्टं च कुरुते श्यामकंचुकः ॥
मर्मच्छेदं वस्तिशूलं काली कुर्यादसंशयम् ॥ १७ ॥
कापाली वीर्यहानिं च कुरुते तां निवारयेत् ॥
मूर्छयेद्वह्निसंयुक्तो मलयुक्तश्च तापयेत् ॥ १८ ॥
तेजोनाशं च भूदोषोप्युन्मत्तश्चांगभंजनम् ॥
कुर्याज्जाड्यं शैलदोषस्तस्मात्संशोधयेद्रसम् ॥ १९ ॥
रसश्चतुर्विधो ज्ञेयो ब्रह्मक्षत्राविडंत्यंजः ॥

१ रसस्यवलकारणाय। २ वध्यासर्पाक्षिः। ३ भगरा। ४ निंबादिप- त्राणां। ५ कालिकोपालिकातथाइतिद्वितीयपाठः। ६ शूद्र-

श्वेतो रक्तस्तथा पीतः कृष्णो वर्णाद्विधीयते ॥ २० ॥
ब्राह्मणः कल्पते कल्पे गुटिकायां च बाहुजः ॥
धातुवादे तथा वैश्यः शूद्रश्चेतरकर्मणि ॥ २१ ॥
सूतः शोध्यो निशायां मरिचनिचयके पिष्टके चेष्टकाया
धूमे किंपाकतोयेऽप्यधितुलसि विषे सूरणे शिग्रुपाके ॥
वज्रीदुग्धेऽर्कदुग्धे हुतभुजि लशुने चापि पालाशपंके
सोर्ध्वाधःपातने वै लशुनपदुमति स्वेदयेत्कांजिके च २२॥
दिनद्वयं दिनद्वयं प्रमर्दयेद्रसाधिपम् ॥
समीरितौषधं प्रतिप्रद्धष्टमानसो भिषक् ॥ २३ ॥
एकेन लशुनेनापि शुद्धो भवति पारदः ॥
तप्तखल्वे मासमेकं पिष्टो लवणसंयुतः ॥ २४ ॥
सूते पादमितं सर्वं प्रक्षिपेच्छोधनौषधम् ॥
अष्टमांशं पुनः केऽपि कथयंति मनीषिणः ॥ २५ ॥

सहस्रनिंबूफलतोयघृष्टो
रसो भवेद्वह्निसमप्रभावः ॥
सव्योपराजीलवणः सचित्रः
सरामठो विंशति वासराणि ॥ २६ ॥

इति रसचिंतामणेः ॥

सदुग्धभांडस्थपटस्थितोऽयं शुद्धो भवेत्कूर्मपुटेन गंधः ॥
आभ्यांकृताकज्जलिकानुपानैःसर्वामयघ्नी रसगंधकाभ्यां

इति गंधकशोधनम् ॥

शुद्ध्या विशुद्धोथ सुजीर्णगंधो दीप्तिप्रदःकांचनभुग्गदघ्नः॥

---

१ रसायने । २ क्षत्रियः । ३ कांजिकजले । लिंपाकेत्यपि पाठः । ४ रसे । ५ सेहुंजनो । ६ चित्रके । ७ अमाग्रकुसुपार्नेवभुगर्भे त्रितय क्षिपेत् ॥ तस्योपरि स्थित खल्व तनत्सल्वमिदं यरेत ॥ ८ सिद्ध इत्यपि पाठः । ९ रसेन्द्रः ।

वदंति चैनं त्रिविधं सुवद्धं संमूर्छितं चापि मृतं रसेंद्रम्॥२८॥
मूर्छां प्रपन्नो हरते च रोगा-
न्वद्धस्तथा खेचरतां ददाति ॥
मृतो मृतिं नाशयति प्रकर्षा-
ज्जीयाद्रसेंद्रोऽगणितप्रभावः ॥ २९ ॥
मूर्छादिकर्मत्रितयं सुखं च
सूताद्बलेः पड्गुणजारणं च ॥
अजीर्णनाशं च यथातथं च
ब्रूमोऽस्य रूपं प्रतिभानुरूपम् ॥ ३० ॥
सूतप्रमाणं सिकताख्ययंत्रे
दत्वा बलिं मृद्घटितेऽल्पभांडे ॥
तैलावशेषेऽत्रं रसं नियुज्या-
न्मंग्राह्वकायं प्रतिलोक्य भूयः ॥ ३१ ॥
आपड्गुणं गंधकमल्पमल्पं
क्षिपेदसौ जीर्णबलिर्बली स्यात् ॥
रसेषु सर्वेषु नियोजनीय-
मसंशयं हंति गदं जवेन ॥ ३२ ॥
इति पड्गुणगंधकजारणाविधिः ॥ अथान्यः प्रकारः
विलोलिते स्वर्णजलैर्विगुण्के
वस्त्रेऽथ दत्वा नवनीतगर्भे ॥
चूर्णं शिलागंधकतालकानां
सपन्नगानां समभागिकानाम् ॥ ३३ ॥

१ रसः । २ आकाशगमि । ३ रसेंद्रः । ४ मृत्युं । ५ सर्वोत्कर्षेण वर्तते । ६ पारदात् । ७ गंधकस्य । ८ बुद्धिसमानं ९ वालुकायंत्रे । १० मृत्पात्रे । ११ पिटीकरणे । १२ रसं १३ धत्तूरजलैः । १४ सीसो ।

कर्षप्रमाणं च ततोऽस्य वर्ति
प्रज्वालयेत्तद्गलितं घृतं स्यात् ॥
अनेन कुर्याद्रसनायकस्य
सर्वत्र पिष्टिं बलिजारणाय ॥ ३४ ॥

इति पिष्टीकरणम् ॥

भागो रसस्य त्रय एव भागा
गंधस्य भागः पवनाशनस्य ॥
संमर्द्य गाढं सुकलं सुभांडे
तां कज्जलीं काचकृते निदध्यात् ॥
संरुध्य मृत्कर्पटकैर्वटीं तां
मुखे सचूर्णां गुटिकां च दत्वा ॥
क्रमाग्निना त्रीणि दिनानि पक्त्वा
तां वालुकायंत्रगतां ततः स्यात् ॥ ३६ ॥
बंधूकपुष्पारुणमीशजस्य
भस्म प्रयोज्यं सकलामयेषु ॥
निजानुपानैर्मरणं जरां च
हंत्यस्य वल्लक्रमसेवनेन ॥ ३७ ॥
निखिलक्षयभक्षणदक्षतरं
व्रणकुष्ठभगंदरमेहहरम् ॥
बलधीधृतिशुक्रसमृद्धिकरं
रसभस्मसमस्तगदापहरम् ॥ ३८ ॥

इति भस्मसूतः ॥

इष्टकायां सुपक्वायां सुखातं चतुरंगुलम् ॥

---

१ वस्त्रस्य । २ पारदस्य । ३ नागस्य ४ सूक्ष्म । ५ गुड-हरपुष्पतुल्य । ६ वृद्धिः । ७ कांतिः । ८ छिद्र ।

कृत्वा कांचेन सँल्लिप्तं तस्यांतः पिष्टिकां क्षिपेत्॥ ३९ ॥
निवृद्दवार्द्रो गंधोस्य देयो मूर्ध्नि द्विकार्पिकः ॥
मुखं संरुध्य शुष्केथ दद्याल्लावपुटं ततः ॥ ४० ॥
शांते तस्योपरि पुनः पुटं देयं ततोधिकम्॥
एवं द्वित्रिचतुःकार्या यावज्जीर्यंति गंधकः ॥ ४१ ॥
जीर्णे पुनस्तथा देयो यावज्जीर्यंति षड्गुणः ॥
मूर्छितो विधिनानेन भवत्येव रसेश्वरः ॥ ४२ ॥

इति रसमूर्छनं ॥

जंबीरनिंबुनीरेण मर्दितो हिंगुलुर्दिनम् ॥
ऊर्ध्वपातनयंत्रेण ग्राह्यः स्यान्निर्मलो रसः ॥ ४३ ॥
कंचुकैर्नागवंगाद्यैर्विमुक्तो रसकर्मणि ॥
योज्यः सांबुपुटः स्विन्नः पूर्वाभावे भिषग्वरैः ॥ ४४ ॥

इति हिंगुलाकृष्टिः ॥

धेलाब्दरंभभूधात्रीसैंस्यग्नीजिह्विकांबुभिः ॥
मर्दितस्तुर्यभावेन गंधकेन समन्वितः ॥ ४५ ॥
वेष्टितो हिंगुना फॅल्गुक्षीराक्तेन दधित्थजे ॥
चूर्णगर्भे प्रदेयोऽयमंतर्लवणमीशजः ॥ ४६ ॥
प्रध्मातः शनकैर्बद्धो रसो भवति नान्यथा ॥
वक्त्रस्थो वपुषः स्थैर्यं करोत्यखिलरोगजित् ॥

इति रसबंधनं ॥ अथान्यः प्रकारः ॥

राजिकाफलिनीकंदतुलसीरक्तचित्रकैः ॥
मुखालेपस्तु कर्तव्यः क्षणार्धे बद्धसूतकः ॥ ४७ ॥
सास्यो रसः स्यात्पटुशिग्रुतुंत्थैः

---

१ नागेन । २ डमरूयंत्रेण । ३ त्रिवेटी । ४ चोरार्ह । ५ गोभी । ६ भागेनेत्यपि पाठः । ७ कृष्मदुग्धेन । ८ कपित्थजे । ९ फागुत्म मा करत्मेरंड्ः पाठः । १० लीलाथोथो ।

सराजिकैः सोपणकैस्त्रिरात्रम् ॥
पिष्टस्तथा स्विन्नतनुः सुवर्ण-
मुखानयं खादति सर्वधातून् ॥ ४८ ॥

इति सुखकरणम् ॥

अजीर्णनाशाय सुभूर्जपत्रे
स्वेद्यस्त्रिरात्रं पटुकांजिकेऽथ ॥
मात्राधिकश्चेत्समतामुपैति
यावन्न तावद्रसनाधिकारी ॥ ४९ ॥

॥ इत्यजीर्णनाशनम् ॥

सच्छिद्रं सलिलापूर्णभांडवक्रे शरावकम् ॥
दत्वा छिद्रे पक्कमूपा देया नीरोवियोगिनी ॥ ५० ॥
तस्यां विडावृतः सूतो देयो लोहावृते मुखे ॥
शनैर्ध्मातो ग्रसत्येप कांचनं सूक्ष्मतां गतम् ॥ ५१ ॥
स्वल्पं सपित्तनापाक्तं शनैर्देयं समावधि ॥
देहार्थं धातुवादार्थं प्रयच्छेत्स्वल्पबुद्धयः ॥ ५२ ॥

इति सुवर्णजारणम् ॥

पिष्टं पांशुपटु प्रगाढममलं वज्रांबुना चैकशः
सूतं धातुयुतं पटीकवलितं तं संपुटे रोधयेत् ॥
अंतःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं हठा-
दूर्ध्वस्थं ग्राह्यमथेंदुकुंदधवलं भस्मोपरिस्थं शनैः ॥ ५३ ॥
तद्वल्लद्वितयं लवंगसहितं प्रातः प्रभुक्तं च यै-
रूर्ध्वं रेचयति द्वियाममसकृत्पेयं जलं शीतलम् ॥

---

१ पिप्पलीसहितैः। २ दोलिकायन्त्रेण। ३ जलमें लगीरखे। ४ आच्छादितः। ५ रेह मृत्तिकाविशेषः। ६ शुद्ध। ७ सेहुण्डदुग्धेन। ८ केनापि अमृतधातुना युक्तम्। ९ वस्त्रेणाच्छादित। १० मध्ये गतम्। ११ एकदिनपर्यंतम्। १२ ईदृश वर्णम्।

एतद्धंति च वत्सरावधि विषं पाण्मासिकं मासिकम् ॥
शैलोत्थं गरलं मृगेंद्रकुटिलोद्भूतं च तात्कालिकम् ॥५४॥
इति लवणभेदी सुधानिधिः ॥
उत्कृत्य मूलं विपजं विदध्याद्गर्भस्य सूतं कनकांशपिष्टं ॥
संवेष्टयेत्कोलभवेन तं तु मासेन पश्चाद्विपचेद्द्वियामम् ॥
धत्तूरबीजोद्भवतैलगर्भं
संवद्धतां याति मुखस्थितोयम् ॥
संभोगकाले दृढतां करोति
वीर्यस्य दुग्धं भजतां नराणाम् ॥ ५५ ॥
इति हिरण्यगर्भगुटिका ॥ रसरत्नप्रदीपात् ॥
सूतः पंचपलः स्वदोषरहितस्तत्तुल्यभागो बलि-
र्द्वौ टंकौ नवसादरस्य तुवरीकर्षं च संमर्दितः ॥
कूप्यां काचकृतौ स्थितश्च सिकतायंत्रे त्रिभिर्वासरैः
पक्वो वह्निभिरुद्भवत्यरुणभाः सिंदूरनामा रसः ॥ ५६ ॥
वाते सक्षौद्रपिप्पल्यपि च कफरुजि त्र्यूषणं चाग्निचूर्णं
पित्ते सैला सिता स्याद्व्रणवति बृहती नागराद्रीमृतांबु ॥
पुष्टौ साज्या त्रियामा हरनयनफला शाल्मलीपुष्पवृन्तं
किंवा कांताललाटाभैरणरसपतेः स्यादनूपानमेतत् ॥५७
अपनयति रोगवृंदं द्रढयति कायं महद्बलं कुरुते ॥
पुत्रशतानि च सूते सिंदूराख्यो रसः पुंसाम् ॥ ५८ ॥
स्मरस्यायुर्नानागददहनदावानलशिखा

१ संवत्सरादिकम् । २ सिंहनखाद्विनिर्गतम् । ३ चक्रकरंजेन । ४ तूर्यैरपि पाठः । ५ फिटकरी । ६ भुक्तेति पाठान्तरम् । ७ चित्रकचूर्णम् । ८ इलायची । ९ सुंठि । १० कटकारी । ११ हरिद्रया । १२ दक्षयंती । १३ त्रिफला । १४ डाबरो । १५ सिंदूराख्यस्य । १६ दूरीकरोति । १७ कामस्य । १८ गदनैरपि पाठः ।

सखा वन्हेस्तेजोवलरुचिरतावल्लिमुंदिरः ॥
अपि प्रौढस्त्रीणामतुलवलहारी निधुवने ॥
रसः सिंदूराख्यः सकलरसराजो विजयते ॥ ५९ ॥
[1]इति वसंतराजात् रससिंदूररसः ॥
यंत्रे सुसिद्धे डमरूसमाख्ये
निधाय सूतस्य पलानि पंच ॥
वल्मीकमृत्स्ना खटिकेष्टिकानां
सगैरिकाणां तुवरीयुतानाम् ॥ ६० ॥
ससैंधवानां समभागिकानां
चूर्णाढकं चोपरितो निदध्यात् ॥
अम्लेन दध्ना महिषीभवेन
पिष्टं रसोनस्य शरावमेकम् ॥ ६१ ॥
समक्रमेणात्र निधाय खंडै-
राच्छादयेत्खर्परजैर्विसंधिः ॥
चूर्णप्रलिप्तोदरमूर्ध्वभांडं
संस्थाप्य संमुद्र्य दृढं सुचुल्ल्यां ॥ ६२ ॥
प्रज्वालयेद्वह्निमधः क्रमेण
संस्थाप्य यंत्रोपरि वस्त्रमार्द्रम् ॥
वह्निं प्रदद्याद्दिनपट्कमत्र
तत्स्वांगशीतं परिगृह्य बुद्ध्या ॥ ६३ ॥
तं द्रोणपुष्पीपयसा प्रपिष्टं कूप्यां विदध्यान्नवसादरं च ॥
कर्षप्रमाणं प्रहरत्रयं च वह्निं प्रदद्यादथ शीतलांगीम् ६४
निष्कास्य कूपीं सिकताख्ययंत्रा-
दास्फोट्य कंठस्थममुं प्रगृह्यात् ॥

१ मोरकर्णा। २ खडिया। ३ चुने। ४ गोमा।

कर्पूरनामा रसनायकोऽयं
वल्लः पुराणेन गुडेन भुक्तः ॥ ६५ ॥
निर्वातभाजा संरुजा च पथ्य-
शीलेन कुष्ठामयनाशनः स्यात् ॥
फिरंगकरिकेसरी सकलकुष्ठतालानलोऽ-
खिलव्रणविनाशकृद्व्रणजंगतंपूर्तिप्रदः ॥
सुवर्णसमवर्णकृद्बलहुताशतेजस्करः
समस्तगदतस्करो रसपतिः स कर्पूरकः ॥ ६६ ॥
इति कर्पूररसः वैद्यसर्वस्वात् ॥
शुद्धसूतसमं तुत्थं घनक्वाथेन सप्तधा ॥
भावयित्वा न्यसेत्कूप्यां मुखे मुद्रां च कारयेत् ॥ ६७ ॥
वालुकायंत्रमध्ये तु यामार्कं ज्वालयेदधः ॥
रसकर्पूरविख्याते खोटबद्धो भवेद्रसः ॥ ६८ ॥
स्वर्णाद्या धातवः सर्वे द्रवीभूताः सुयोजिताः ॥
शुध्यंति वक्ष्यमाणेषु द्रवद्रव्येष्वनुक्रमात् ॥ ६९ ॥
तैले तक्रे गवां मूत्रे कांजिकेथ कुलत्थके ॥
त्रिफलाक्वाथतोये च संशोध्याः सर्वधातवः ॥ ७० ॥
इति सुवर्णादिसर्वधातुशुद्धिः ॥
स्यात्तीक्ष्णलोहयोः शुद्धी रजतोऽथ पुटैस्त्रिभिः ॥
रंभाजलेन घृष्टस्य शिग्रुमूलत्वगंबुना ॥ ७१ ॥
पुनस्तप्तं हिमीभूतं वांह्नीकांबुनि तद्रजः ॥
भावितं मार्कवद्रावैः सप्तधा पुटितं ततः ॥ ७२ ॥
मत्स्याक्षीसलिलैस्तावद्दैरानीरैर्मृतिर्भवेत् ॥

१ रोगिणा । २ गदेला । ३ अग्निः । ४ मोथा । ५ द्वादशप्रहरपर्यंतम्
६ द्रव्यरसेषु । ७ पोलाद । ८ गजवेल । ९ केरा । १० हींग । ११ त्रिफलाजलै

तत्कुष्ठक्षयमंदाग्निपांडुकासादिकान्गदान् ॥ ७३ ॥
नाशयत्यनुपानैः स्वैर्जरां च पलितं तथा ॥
शुद्धिमारणयोरैक्यादुक्तमेतन्नदूषणम् ॥ ७४ ॥
इति रसरत्नप्रदीपात् ॥
शुद्धं हतं दरदगंधकयोगतः स-
हैध्येन वारितरमुख्यदिनप्रकाशम् ॥
लोहं निहंत्यनिलपित्तबलासरोगा-
नुक्तानुपानसहितं न हिताय कस्य ॥ ७५ ॥
अथवा ॥
शुद्धं दाडिमजैः क्वाथैरनले पक्वतां गतम् ॥
संवरावारिभिर्घृष्टं नवसादरसंयुतैः ॥ ७६ ॥
तदर्धं गंधकं तस्याप्यर्धं सूतं नियोजयेत् ॥
कुमारीवारिभिः खल्वे मर्दितं गोलकीकृतम् ॥ ७७ ॥
शुष्कमेरंडजैः पत्रैर्वेष्टितं तंतुभिस्तथा ॥
संपुटे स्थापयित्वा तं वेष्टिते च मृदा पुनः ॥ ७८ ॥
कुसूलधान्यमध्यस्थं दिनानि किल विंशतिः ॥
उद्धृत्य च ततो लोहं चूर्णितं सुधया समम् ॥ ७९ ॥
सर्वामयहरं सम्यग्रसायनमनुत्तमम् ॥ ८० ॥
पांडुं खंडयति क्षयं क्षपयति क्षैण्यं क्षिणोति क्षणा-
त्कासं नाशयति भ्रमं नमयति श्लेष्मामयान्खादति ॥
अर्शोगुल्मसशूलपीनसवमीश्वासप्रमेहारुची-
राशून्मूलयति प्रभूतगुणकल्लोहं परं मारितम् ॥ ८१ ॥
इति लोहमारणं वौद्धसर्वस्वात् ॥

१ त्रिफलाक्वाथैः । २ माथ वाजरो । ३ बहुरूप्मयुक्तं कृतमित्यर्थः । ४शुभ्रवर्णम् ।

कर्पूरनामा रसनायकोऽयं
वल्लः पुराणेन गुडेन भुक्तः ॥ ६५ ॥
निर्वातभाजा संरुजा च पथ्य-
शालिन कुष्ठामयनाशनः स्यात् ॥
फिरंगकरिकेसरी सकलकुष्ठतालानलोऽ-
खिलव्रणविनाशकृद्व्रणजंगतंपूर्तिप्रदः ॥
सुवर्णसमवर्णकृद्बलहुताशतेजस्करः
समस्तगदतस्करो रसपतिः स कर्पूरकः ॥ ६६ ॥
इति कर्पूररसः वौद्धसर्वस्वात् ॥
शुद्धसूतसमं तुत्थं घनक्वाथेन सप्तधा ॥
भावयित्वा न्यसेत्कूप्यां मुखे मुद्रां च कारयेत् ॥ ६७ ॥
वालुकायंत्रमध्ये तु यामार्कं ज्वालयेदधः ॥
रसकर्पूरविख्याते खोटबद्धो भवेद्रसः ॥ ६८ ॥
स्वर्णाद्या धातवः सर्वे द्रवीभूताः सुयोजिताः ॥
शुध्यंति वक्ष्यमाणेषु द्रवद्रव्येष्वनुक्रमात् ॥ ६९ ॥
तैले तक्रे गवां मूत्रे कांजिकेथ कुलत्थके ॥
त्रिफलाक्काथतोये च संशोध्याः सर्वधातवः ॥ ७० ॥
इति सुवर्णादिसर्वधातुशुद्धिः ॥
स्यात्तीक्ष्णलोहयोः शुद्धी रजसोऽथ पुटैस्त्रिभिः ॥
रंभाजलेन घृष्टस्य शिग्रुमूलत्वगंबुना ॥ ७१ ॥
पुनस्तप्तं हिमीभूतं वांह्रीकांबुनि तद्रजः ॥
भावितं मार्कवद्रावैः सप्तधा पुटितं ततः ॥ ७२ ॥
मत्स्याक्षीसलिलैस्तावद्वैरानीरैर्मृतिर्भवेत् ॥

---

१ रोगिणा । २ गढेला । ३ अग्निः । ४ मोथा । ५ द्वादशप्रहरपर्यंत
६ द्रव्यरसेषु । ७ पोलाद । ८ गजवेल । ९ केरा । १० शींग । ११ त्रिफलाजं

तत्कुष्ठक्षयमंदाग्निपांडुकासादिकान्गदान् ॥ ७३ ॥
नाशयत्यनुपानैः स्वैर्जरां च पलितं तथा ॥
शुद्धिमारणयोरैक्यादुक्तमेतन्नदूषणम् ॥ ७४ ॥
इति रसरत्नप्रदीपात् ॥
शुद्धं हतं दरदगंधकयोगतः स-
द्वैयेन वारितरमुख्यदिनप्रकाशम् ॥
लोहं निहंत्यनिलपित्तबलासरोगा-
नुक्तानुपानसहितं न हिताय कस्य ॥ ७५ ॥
अथवा ॥
शुद्धं दाडिमजैः क्वाथैरनले पक्वतां गतम् ॥
संवरावारिभिर्घृष्टं नवसादरसंयुतैः ॥ ७६ ॥
तदर्धं गंधकं तस्याप्यर्धं सूतं नियोजयेत् ॥
कुमारीवारिभिः खल्वे मर्दितं गोलकीकृतम् ॥ ७७ ॥
शुष्कमेरंडजैः पत्रैर्वेष्टितं तंतुभिस्तथा ॥
संपुटे स्थापयित्वा तं वेष्टिते च मृदा पुनः ॥ ७८ ॥
कुसूलधान्यमध्यस्थं दिनानि किल विंशतिः ॥
उद्धृत्य च ततो लोहं चूर्णितं सुधया समम् ॥ ७९ ॥
सर्वामयहरं सम्यग्रसायनमनुत्तमम् ॥ ८० ॥
पांडुं खंडयति क्षयं क्षपयति क्षैण्यं क्षिणोति क्षणा-
त्कासं नाशयति भ्रमं नमयति श्लेष्मामयान्खादति ॥
अर्शोगुल्मसशूलपीनसवमीश्वासप्रमेहारुची-
राशून्मूलयति प्रभूतगुणकल्लोहं परं मारितम् ॥ ८१ ॥
इति लोहमारणं बौद्धसर्वस्वात् ॥

१ त्रिफलाक्वाथैः । २ माघ वाजरो । ३ बहुरूप्यमुक्त कृतमित्यर्थः । स्सुधवर्णम ।

शुद्धः स्यात्तालकः स्विन्नः कूष्मांडसलिलैस्ततः ॥
चूर्णोदकैः पृथक्तैले भस्मीभूतो न दोपकृत् ॥ ८२ ॥
इति तालकशुद्धिः ॥
बीजपूररसैः पिष्टा जयान्तीरैर्मनःशिला ॥
सप्ताहं स्वेदितः शुद्धो रसको नरवारिणा ॥ ८३ ॥
इति मनःशिलारसकशुद्धिः ॥ अथ जेपालशोधनम् ॥
जेपालं रहितं त्वगंकुररसंज्ञानिर्मले माहिषे
निक्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे सवासोर्दितम् ॥
लिप्तं नूतनखर्परेषु विगतस्नेहं रजःसंनिभं
निंबूकांबुविभावितं च बहुशः शुद्धं गुणाढ्यं भवेत् ॥ ८४
॥ इति जेपालशोधनम् ॥
ओतोर्विष्ठासमं तुत्थं सक्षौद्रं टंकणांघ्रियुक् ॥
त्रिधैव पुटितं शुद्धं वांतिभ्रांतिविवर्जितम् ॥ ८५ ॥
इति तुत्थशुद्धिः ॥
भाविता विमला घर्मे जरञ्जंवीरवारिणा ॥
मेषशृंग्यंबुना घस्रं शुद्धः कर्कोटकाजलैः ॥ ८६ ॥
इति तारमाक्षिकशुद्धिः ॥
तुर्यांशसैंधवोपेतं माक्षिकं मर्दयेद्दृढम् ॥
बीजपूरांबुना दग्धं सम्यक्पात्रे च लोहजे ॥ ८७ ॥
॥ इति स्वर्णमाक्षिकशुद्धिः ॥
अम्लद्रव्यद्रवैः पिष्टो दरदो माहिषेण तु ॥
दुग्धेन सप्तधा पिष्टः श्लक्ष्णीभूतो विशुध्यति ॥ ८८ ॥
इति दरदशुद्धिः ॥

---

१ चूनो । २ अरणी । ३ खपरिया । ४ मध्ये श्वेतवर्णः । ५ एक-दिवसमर्दितम् । ६ बिलय्याको पुरोष । ७शकपारयुक्तम् ।

मोदुग्धत्रिफलाभृंगद्रवैः पिष्टं शिलाजतु ॥
दिनैकं लोहजे पात्रे शुद्धिमायात्यसंशयम् ॥ ८९ ॥

इति शिलाजतुशुद्धिः ॥

त्रिदिनं कांजिकैः स्विन्नः शुद्धः स्याद्विषर्तिदुकः ॥ ९० ॥

इति विषतिंदुकशुद्धिः ॥

अक्षाग्निदग्धं गोमूत्रे निर्वापितमयोमलम् ॥
पृथक्पृथक्सप्तवारं शुद्धं भवति सर्वथा ॥ ९१ ॥

॥ इति किट्टशुद्धिः ॥

पादांशशालिसंयुक्तमभ्रं बध्वा च कंबले ॥
त्रिरात्रं स्थापयेन्नीरे तत्क्लिन्नं मर्दयेत्करैः ॥ ९२ ॥
कंबलाद्गलितं श्लक्ष्णं वालुकारहितं च यत् ॥
तद्धान्याभ्रमिति प्रोक्तं सद्भिर्देहस्य शुद्धये ॥ ९३ ॥

॥ इति धान्याभ्रकरणविधिः ॥ अथविषशुद्धिः ॥

विषं तु खंडशः कृत्वा वस्त्रखंडेन बंधयेत् ॥
गोमूत्रमध्ये निःक्षिप्य स्थापयेदातपे त्र्यहं ॥ ९४ ॥
गोमूत्रं तु प्रदातव्यं नूतनं प्रत्यहं बुधैः ॥
त्र्यहेऽतीते तदुद्धृत्य शोषयेन्मृदु पेषयेत् ॥ ९५ ॥
शुध्यत्येवं विषं सेवायोग्यं भवति चार्तिजित् ॥

॥ इति विषशुद्धिः ॥

कंकुष्टं गैरिकं शंखं कासीसं टंकणं तथा ॥ ९६ ॥
नीलांजनं शुक्तिभेदाः क्षुल्लकाः सवराटिकाः
जंबीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा ॥

---
१ कुचला । २ शंख ।

शुद्धिमायांत्यमी योज्या भिषग्भिर्योगसिद्धये ॥ ९७ ॥
इत्युपरसादिशुद्धिः ॥
रसस्य भस्मना वाथ रसेनालिप्य वै दलं ॥
हिंगुहिंगुलसिंदूरशिलोसौम्येन मेलयेत् ॥ ९८ ॥
संमर्द्य कांचनद्रावैर्दिनं कृत्वाथ गोलकम् ॥
तं भांडस्य तले दत्वा भस्मना पूरयेद्दृढम् ॥ ९९ ॥
अग्निं प्रज्वालयेद्गाढं द्विनिशं स्वांगशीतलम् ॥
उद्धृत्य सावशेषं चेत्पुनर्देयं पुटद्वयम् ॥ १०० ॥
अनेन विधिना स्वर्णं निरुत्थं जायते मृतम् ॥
एतद्रसायनं बल्यं वृष्यं शीतं क्षयादिजित् ॥ १०१ ॥
स्वर्णं स्वर्णसवर्णवर्णजनकं सर्वक्षयोन्मूलकृ-
द्बल्यं वृष्यमनुष्णवीर्यमसकृत्क्षुद्वर्धनं बृंहणम् ॥
निःशेषामयसंघसंघातिकरं तेजस्करं शुक्रकृ-
च्चक्षूरोगजरापहं नवसुधापानोपमं प्राणिनाम् ॥ १०२ ॥
इति स्वर्णमारणं ॥
विधाय पिष्टिं सूतस्य रजस्तस्याथ मेलयेत् ॥
तालगंधं समं पश्चान्मेलयेन्निंबुकद्रवैः ॥
द्विस्त्रिः पुटैर्भवेद्भस्म योज्यमेतद्रसादिषु ॥ १०३ ॥
तारं शीतकषायमम्लमधुरं दोषत्रयच्छेदनं
स्निग्धं दीपनमाक्षिकुक्षिगदजिद्दाहप्रमेहप्रणुत् ॥
मेदोभेदि मदात्ययात्ययकरं कांत्यायुरारोग्यकृ-
त्पक्ष्मापस्मृतिपांडुशूलपलितप्लीहज्वरघ्नं परम् ॥ १०४ ॥
इति रूप्यमारणगुणाः ॥

---

१ स्वर्णपत्रम् । २ मनःशिलम् । ३ धनुर्णां पत्रसमानेन योजयेत् ।
४ धत्तूररसैः । ५ मेदघ्नं ।

तालेन वंगं दरदेन तीक्ष्णं
नागेन निष्कं शिलया च नागम् ॥
गंधाश्मना चैव निहंति शुल्वं
तारं च माक्षीकरसेन हन्यात् ॥ १०५ ॥

राजरीतिं तथा घोषं [illegible]वन्मारयेद्भिषक् ॥

इति रीतिकांस्यमारणम् ॥

त्रिभिः कुंभीपुटैर्नागो वासारसविमर्दितः ॥
सशिलो भस्मतामेति तद्भंजः सर्वमेहनुत् ॥ १०६ ॥

इति नागमारणम् ॥

वंगं सतालमर्कस्य पिष्ट्वा दुग्धेन संपुटेत् ।
शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मतां व्रजेत् ॥ १०७ ॥
आयुःप्रदाता बलवीर्यकर्ता रोगापहर्ता मदनस्य कर्ता ॥
वंगेन तुल्यं न च किंचिदन्यद्रसायनं श्रेष्ठतमं नराणाम् ॥ ८
बल्यं दीपनपाचनं रुचिकरं प्रज्ञाकरं शीतलं
सौंदर्यैकविवर्धनं हतजरं नीरोगताकारणम् ॥
धातुस्थौल्यकरं क्षयक्षयकरं सर्वप्रमेहापहं
वंगं भक्षयतो नरस्य न भवेत्स्वप्नेपि शुक्रक्षयः ॥ १०९ ॥

इति वंगमारणगुणौ ॥

ताम्रपादांशतः सूतं तत्तुल्यं गंधकं क्षिपेत् ॥
कन्यारसेन संपिष्ट्वा ताम्रपत्राणि लेपयेत् ॥ ११० ॥
निक्षिप्य हंडिकामध्ये शरावेण निरोधयेत् ॥
हंडिकां पटुनापूर्य प[illegible]त्रयं भिषक् ॥ १११ ॥

---

१ राग । २ लाह । ३ सुवर्णम् । ४ सीसा । ५ चुंबकपाषाण । ६ ताम्रम् । ७ रूप्यम् । ८ पारदेन । ९ पीतल । १० कासीस । ११ गजपुटे । १२ सनाग इत्यपि पाठः । १३ वृद्धिकर । १४ लवणेन ।

स्वांगशीतं विचूर्ण्याथ वांतिदाहविवर्जितम् ॥
सर्वदोषहरं ताम्रं सर्वयोगेषु योजयेत् ॥ ११२ ॥

अथान्यः प्रकारः ॥

सूक्ष्मं ताम्रदलं विमर्द्य पटुना क्षारेण जंबीरजै-
र्नीरैर्घस्रमिदं स्नुगर्कपयसा लिप्तं धमेत्सप्तधा ॥
निर्गुंडयंबुहिमं रसेंद्रकलितं दुग्धाढ्यगंधेन त-
त्तुल्येनाथ मृतं भवेत्सुपुटितं पंचामृतेन त्रिधा ॥ ११३॥
वांतिभ्रांतिविवर्जितं ज्वररुजः कुष्ठानि पांड्वामयं
शूलं मेहगुदांकुरानिलगदानुक्तानुपानैर्जयेत् ॥
गुंजामात्रमिदं ततो द्विगुणितं संशुद्धकायेन चे-
त्प्रोक्तं स्थौल्यजराविपत्तिशमनं पथ्याशिनो वत्सरात् ११४

इति ताम्रमारणम् ॥

दुग्धत्रयं कुमार्यंबु गंगापुत्रं नृमूत्रकम् ॥
वटशुंगमजारक्तमेभिरभ्रं सुमर्दितम् ॥ ११५ ॥
शतधा पुटितं भस्म जायते पद्मरागवत् ॥
निश्चंद्रिकं भवेत्तत्तु शुद्धदेहे रसायनम् ॥ ११६ ॥
रोगान्हंति द्रढयति वपुर्वीर्यवृद्धिं विधत्ते
तारुण्याढ्यं रमयति शतं योषितां नित्यमेव ॥
दीर्घायुष्काञ्जनयति सुतान्सिंहतुल्यप्रभावा-
न्मृत्योर्भीतिं हरति च सदा सेव्यमानो मृताभ्रः॥ ११७॥
गौरीतेजः परमममृतं वातपित्तक्षयांतं
प्रज्ञोद्बोधि प्रशमितजरं वृष्यमायुष्यमग्र्यम् ॥
वल्यं स्निग्धं रुचिरमकफं दीपनं शीतवीर्यं

१ कटकारिः । २ भकुरुगपुत्रम् । ३ दुग्धाना धर्कगुडूचवटानां त्रयम् । ४ मेथा ।

तत्तद्योगात्सकलगदजिद्व्योम सूतेंद्रवेधि ॥ ११८ ॥

वयःस्तंभकारी जरामृत्युहारी
वलारोग्यकारी महाकुष्ठहारी ॥
मृतो मेघ एकः सुयोगे सुयोग्यः
सदा सूतराजस्य तुल्यो गुणेन ॥ ११९ ॥

इत्यभ्रकमारणगुणौ ॥

व्याघ्रीकंटगतं वज्रं दोलायंत्रे निपाचितम् ॥
सप्ताहं कोद्रवक्वाथे कौलत्थे निर्मलं भवेत् ॥ १२० ॥
त्रिःसप्त कुलत्थरसंतप्तं खरमूत्रेण सेचयेत् ॥
मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥ १२१ ॥
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण च ॥
भस्मीभवति तद्भुक्तं वज्रवत्कुरुते तनुम् ॥ १२२ ॥

इति वज्रमारणम् ॥

वैक्रांतं वज्रवच्छोध्यं ध्मातं तद्धयमूत्रके ॥
हिमं तद्भस्म संयोज्यं वज्रस्थाने विचक्षणैः ॥ १२३ ॥

इति वैक्रांतमारणम् ॥

यदंजननिभं क्षिप्तं वह्नौ नो विकृतिं व्रजेत् ॥
वज्रसंज्ञं हि तद्योज्यं व्योम सर्वत्र नेतरत् ॥ १२४ ॥
भावयेच्चूर्णितं वज्रं दिनैकं कांजिकेन च ॥
रंभासूरणसीतारैर्मूलकोत्थैश्च मूलयेत् ॥ १२५ ॥
तुर्यांशटंकणेनैव क्षुद्रमत्स्यैः समं पुनः ॥
माहिषीमलसंमिश्रान्निधाय स्थाप्य गोलकान् ॥ १२६ ॥
खराग्निना धमेद्गाढं सत्वं मुंचन्ति कांस्यवत् ॥

---

१ कटकारीमूलगतम् । २ शुद्ध । ३ एकविंशतिवारम् । ४ खटमल । ५ कृष्णवर्णम् । ६ वर्णम् । ७ केरा । ८ जिमीकंद ।

सत्वसेवी वयःस्तंभं कृतशुद्धिर्लभेत्ततः ॥ १२७ ॥

इत्यभ्रकसत्त्वपातनविधिः ॥

ताम्रभूभवभूनागान्त्रिशापिष्टान्समेन तान् ॥
गुडगुग्गुलुलाक्षोर्णामत्स्यपिण्याकटंकणैः ॥ १२८ ॥
दृढमेतैश्च संयोज्य मर्दयित्वा धमेत्सुखम् ॥
मुंचंति ताम्रसत्त्वं तत्तन्मुद्राजलपानतः ॥
नश्यंति जंगमविषाण्यशेषाण्यपि सर्वथा ॥ १२९ ॥

इति भूनागसत्त्वपातनविधिः ॥

सर्वेषामुपपूर्वाणां रसानां सत्वमारणाम् ॥
कर्तव्यं भस्म सूतेन गंधकेनाग्निगर्भके ॥ १३० ॥

इति सर्वसत्त्वमारणम् ॥

ये धातवो येप्युपपूर्वकाश्च रसाश्च मृत्स्नादेपदोल्पसाध्याः॥
मुंचंति सत्वं विमलांगणेन गुडादिना[1] तत्र न संशयोस्ति॥
यत्रोपरसभागोस्ति रसे तत्सत्त्वयोजनम् ॥
कर्तव्यं तत्फलाधिक्यमिच्छता निश्चितात्मना ॥१३२॥

॥इतिश्रीयो॰रसधातुशोधनमारणनामसप्तदशस्तरंगः॥

---

अथाष्टादशतरङ्गः ॥

॥ अथ स्वरसादिः ॥

अथात्र स्वरसः कल्कः क्वाथश्च हिमफांटकौ ॥
ज्ञेयाः कषायाः पंचैते लघवः स्युर्यथोत्तरम् ॥ १ ॥

॥ तत्र स्वरसकल्पना ॥

आहृता तत्क्षणोत्कृष्टा द्रव्यात्क्षुण्णात्समुद्भवेत् ॥
वस्त्रनिष्पीडितो यस्तु स्वरसो रस उच्यते ॥ २ ॥

---

१ वमनविरेचनादिभिः । २ भावयी [illegible] । ३ कर । ४ मूत्रिका । ५ [illegible] । ६ मूत्रवः । ७ [illegible] ।

कुडवं चूर्णितं द्रव्यं क्षिप्तं तद्द्विगुणे जले ॥
अहोरात्रस्थितं यस्माद्भवेद्वा रस उत्तमः॥ ३ ॥
आदाय शुष्कद्रव्यं वा स्वरसानामसंभवे ॥
जलेऽष्टगुणिते साध्यं पादशिष्टं च गृह्यते ॥ ४ ॥
स्वरसस्य गुरुत्वाच्च पलमर्धं प्रयोजयेत् ॥
निःशोषितं चाग्निसिद्धं पलमात्रं रसं पिबेत् ॥ ५ ॥
मधुश्वेतागुडक्षारान् जीरकं लवणानि च ॥
घृतं तैलं च चूर्णादीन्कोलमात्रान्रसे क्षिपेत् ॥ ६ ॥
स यथा ॥
अमृताया रसः क्षौद्रयुक्तः सर्वप्रमेहजित् ॥
हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ॥ ७ ॥
इत्यादि ॥ अथ कल्ककल्पना ॥
यः पिंडश्चार्द्रद्रव्याणां स कल्क इति कीर्तितः ॥
वृद्धवैद्यवचः साक्षात्कल्को ह्यादि पोपितः ॥
मात्रा पिचुमिता तत्र द्विगुणं माक्षिकादिकम् ॥ ८ ॥
यथा ॥
पचेत्क्षुद्रां सपंचांगां पुटपाकेन तद्रसः ॥
पिप्पलीचूर्णसंयुक्तः कासश्वासक्षयापहः ॥ ९ ॥
अथ क्वाथः ॥
पानीयं षोडशगुणं क्षुण्णद्रव्याद्विनिःक्षिपेत् ॥
मृत्पात्रे क्वथितं ग्राह्यमष्टमांशावशेषितम् ॥
शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ॥ १० ॥
यथा ॥
गुडूचीधान्यकारिष्टरक्तचंदनपद्मकः ॥
गुडूच्यादिरयं क्वाथः सर्वज्वरहरः स्मृतः ॥ ११ ॥

अथ यवागूः ॥
साध्यं चतुष्पलं द्रव्यं चतुःषष्टिपलैम्बुनि ॥
तत्क्वाथेनार्द्धशिष्टेन यवागूं साधयेद्वराम् ॥ १२ ॥
सा यथा ॥
आम्राम्रातकजंबूत्वक्कषाये विपचेद्बुधः ॥
यवागूं शालिभिर्युक्तां तां भुक्त्वा ग्रहणीं जयेत् ॥ १३
अथ यूषः ॥
कल्कद्रव्यपलं शुंठी पिप्पली चार्द्धकार्षिकी ॥
वारिप्रस्थेन विपचेत्स ज्ञेयो यूष उच्यते ॥ १४ ॥
स यथा ॥
कुलत्थयवकोलैश्च मुद्गैर्मूलकशुंठकैः ॥
शुंठीधान्यकयुक्तैश्च यूषः श्लेष्मानिलापहः ॥
सप्तमुष्टिक इत्येष सन्निपातज्वराञ्जयेत् ॥ १५ ॥
इति सप्तमुष्टिको यूषः ॥
अथैषां प्रक्रियात्रैव प्रोच्यते नातिविस्तरात् ॥
यवागूः षड्गुणजले सिद्धा स्यात्कृशरा घना ॥ १६ ॥
तंडुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता ॥
यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ॥ १७ ॥
अथ विलेपी ॥

अथ यवागूः ॥

साध्यं चतुष्पलं द्रव्यं चतुःषष्टिपलेंबुनि ॥
तत्क्राथेनार्द्धशिष्टेन यवागूं साधयेद्वराम् ॥ १२ ॥

सा यथा ॥

आम्राम्रातकजंबूत्वक्कषाये विपचेद्बुधः ॥
यवागूं शालिभिर्युक्तां तां भुक्त्वा ग्रहणीं जयेत् ॥ १३ ॥

अथ यूपः ॥

कल्कद्रव्यपलं शुंठी पिप्पली चार्द्धकार्षिकी ॥
वारिप्रस्थेन विपचेत्स द्रवो यूप उच्यते ॥ १४ ॥

स यथा ॥

कुलत्थयवकोलैश्च मुद्गैर्मूलकशुंठकैः ॥
शुंठीधान्यकयुक्तैश्च यूपः श्लेष्मानिलापहः ॥
सप्तमुष्टिक इत्येष सन्निपातज्वराञ्जयेत् ॥ १५ ॥

इति सप्तमुष्टिको यूपः ॥

अथैषां प्रक्रियात्रैव प्रोच्यते नातिविस्तरात् ॥
यवागूः षड्गुणजले सिद्धा स्यात्कठारा घना ॥ १६ ॥

लेहवत्साधयेद्वह्नौ गुडो वा शर्कराथ वा ॥
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ॥ ३८ ॥
सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः ॥
सर्वचूर्णं समः कार्यो गुग्गुलुर्मधु तत्समम् ॥ ३९ ॥
द्रवश्च द्विगुणो देयो मोदकेषु भिषग्वरैः ॥
कर्षप्रमाणं तन्मात्रा बलं दृष्ट्वा प्रकल्पयेत् ॥ ४० ॥

अथावलेहः ॥

क्काथादेर्यत्पुनः पाकाद्घनत्वं सा रसक्रिया ॥
सोवलेहश्च लेहश्च तन्मात्रा स्यात्पलोन्मिता ॥ ४१ ॥
सिता चतुर्गुणा देया चूर्णाच्च द्विगुणो गुडः ॥
द्रवश्चतुर्गुणो देय इति सर्वत्र निश्चयः ॥ ४२ ॥
दुग्धमिक्षुरसो यूपः पंचमूलकपायकः ॥
वासाक्काथश्च तद्योग्यमनुपानं प्रशस्यते ॥ ४३ ॥

इत्यवलेहविधिः ॥ अथ गणाः ॥

एका हरीतकी योज्या द्वौ योज्यौ च विभीतकौ
चत्वार्यामलकान्याहुः सिता च द्विगुणा भवेत् ॥ ४४ ॥
त्रिफला मेहशोथघ्नी कुष्ठहंत्री रसायनी ॥
सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयापहा ॥ ४५ ॥

इति त्रिफला ॥

पिप्पली मरिचं शुंठी त्रिभिरूयूपणमुच्यते ॥
दीपनं श्लेष्ममेदोघ्नं कुष्ठपीनसनाशनम् ॥ ४६ ॥

इति त्रिकटुः ॥ १

पेप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥

---

१ त्रिफलैषा प्रकीर्तिता इतिपाठ ।

मधुश्वेतागुडादींश्च क्राथवत्तत्र निक्षिपेत् ॥ २८ ॥

॥ स यथा ॥

मधूकपुष्पं मधुकं चंदनं सपरूपकम् ॥
मृणालं कमलं लोध्रं कंभारी नागकेसरम् ॥ २९ ॥
त्रिफलासारिवाद्राक्षायवान्कोष्णजले क्षिपेत् ॥
सितामधुयुतः पेयः फांटो वासौ हिमोथ वा ॥ ३० ॥
वातं पित्तं तथा दाहं तृष्णामूर्च्छामतिभ्रमान् ॥
रक्तपित्तं मदं हन्यान्नात्रकार्या विचारणा ॥ ३१ ॥

इति मधूकपुष्पादिफांटः ॥ अथ हिमकल्पना ॥

क्षुण्णं द्रव्यपलं सम्यक्पड्भिर्नीरपलैः झुतम् ॥ ३२ ॥
निःशोषितं हिमः स स्यात्तथा शीतकपायकः ॥
तन्मानं फांटवज्ज्ञेयं सर्वत्रैवैप निश्चयः ॥ ३३ ॥

स यथा ॥

आम्रजंबू च ककुभं चूर्णीकृत्य जले क्षिपेत् ॥
हिमः स स्यात्पिवेत्प्रातः सक्षौद्रं रक्तपित्तजित् ॥ ३४ ॥

इत्याम्रादिहिमः ॥ अथ चूर्णकल्पना ॥

अत्यंतशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ॥
तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्पसंमिता ॥ ३५ ॥
चूर्णे गुडः समो देयः शर्करा द्विगुणा मता ॥
चूर्णेषु भर्जितं हिंगु जीरकं चेति केचन ॥ ३६ ॥

इति चूर्णकल्पना ॥ अथ वटिका ॥

वटिका अथ कथ्यंते तन्नाम गुटिका वटी ॥
मोदको वटिका पिंडी गुडो वर्तिस्तथोच्यते ॥ ३७ ॥

---

१ महुवा। २ मधुलेहठी। ३ फालसा। ४ कमल। ५ पर्वफलवा। ६ कुम्हेरी। ७ कोह अर्जुनप्रसिद्धः।

सार्ज्जिका यावशूकश्च क्षारयुग्ममुदाहृतम् ॥
ज्ञेयौ वह्निसमौ क्षारौ सार्ज्जिकायावशूकजौ ॥ ५६ ॥
क्षाराश्चान्येपि गुल्मार्शोग्रहणीरुक्छिदः सदा ॥
पाचनाः कृमिपुंस्त्वघ्नाः शर्कराश्मरिनाशनाः ॥ ५७ ॥
इति क्षारौ ॥
शालिपर्णी पृष्ठिपर्णी बृहतीद्वयगोक्षुरैः ॥
बिल्वाग्निमंथश्योनाककाश्मरीपाटलायुतैः ॥ ५८ ॥
दशमूलमिति ख्यातं पूर्वार्द्धं तु लघु स्मृतम् ॥
परार्द्धं महदाख्यं स्यात्पंचमूलमिति द्विधा ॥ ५९ ॥
दशमूलं सन्निपातशमनं प्रायशः स्मृतम् ॥
वातपीत्तश्वासकासमूतिकारोगनाशनम् ॥ ६० ॥
दशमूलं सन्निपाते शोफे त्वक्पचकं तथा ॥
तत्तद्योगे तथान्यांश्च वदिष्यामि गणान्पुनः ॥ ६१ ॥
न्यग्रोधोदुंबराश्वत्थपारिशप्लक्षपादपाः ॥
पंचैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चवल्कलम् ॥ ६२ ॥
इतिश्रीयोगतरंगिण्यां स्वरसादिकथनं नामाष्टादशस्तरंगः ॥ १७ ॥

---

एकोनविंशस्तरंगः ।

अथ स्वरूपनिरूपणाय तत्तद्दोषप्रतीकाराय च रोगा संक्षेपतः परिगण्यन्ते ते यथा ॥
ज्वरोतिसारो ग्रहणी ह्यर्शोजीर्णविषूचिका ॥
सालसा च विलंबी च कृमिरुक्पांडुकामलाः ॥ १ ॥
हलीमकं रक्तपित्तं राजयक्ष्मा ह्युरःक्षतम् ॥ ॥
कासो हिक्का तथा श्वासः स्वरभेदस्त्वरोचकः ॥ २ ॥

कोलमात्रप्रमाणत्वात्पंचकोलमिदं मतम् ॥ ४७ ॥
पाचनं दीपनं रुच्यं शूलगुल्मोदरापहम् ॥
पंचकोलं समरिचं षडूषणमुदाहृतम् ॥ ४८ ॥
इति पंचकोलम् ॥
त्रिगंधमेलात्वक्पत्रैश्चातुर्जातं सकेसरैः ॥
त्रिगंधं च चतुर्जातं तीक्ष्णोष्णं लघुपित्तकृत् ॥
वर्ण्यं रुचिकरं तीक्ष्णं विषश्लेष्मामयापहम् ॥ ४९ ॥
इति त्रिसुगंधीचातुर्जातके ॥
काकोली क्षीरकाकोली जीवकर्षभकौ तथा ॥
मेदा चान्या महामेदा जीवंती मधुकं तथा ॥ ५० ॥
मुद्गपर्णी माषपर्णी जीवंतीयगणो मतः ॥
जीवंतीयगणः स्वादुर्गर्भसंधानकृद्गुरुः ॥ ५१ ॥
स्तन्यकृद्बृंहणो वृष्यः स्निग्धः शीतस्तृषापहः ॥
रक्तपित्तं क्षयं कासं ज्वरदाहानिलाञ्जयेत् ॥ ५२ ॥
इति जीवंतीयो गणः ॥
द्वे मेदे द्वेच काकोल्यौ जीवकर्षभकौ तथा ॥
ऋद्धिर्वृद्धिश्च तैः सार्द्धमष्टवर्ग उदाहृतः ॥
अष्टवर्गो बुधैः प्रोक्तो जीवंतीयसमो गुणैः ॥ ५३ ॥
इत्यष्टवर्गः ॥
सिंधुसौवर्चलं चैव विडं सामुद्रिकं गुडम् ॥
एकाद्वित्रिचतुःपंचलवणानि क्रमाद्विदुः ॥ ५४ ॥
... सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम् ॥
वीर्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् ॥ ५५ ॥